

# अद्वैततत्त्वशुद्धिः

## अद्वैतामोदादिपरीक्षापरपर्याया



महामहोपाध्याय-शास्त्ररत्नाकर-शतभूषणी
श्रीमदनन्तकृष्णशास्त्रिकृतिः

महामहोपाध्याय-शास्त्ररत्नाकर-शतभूषणी श्रीमदनन्तकृष्ण-
शास्त्रिणा संपादिता

कैरविणीक्षेत्रस्थभारतीविजयमुद्रणालयद्वारा मुद्रापिता
प्रकाशिता च

विजयतेतराम्

1958

श्री

# ADVAITA THATVASUDDHI

BY

Mahamahopadyaya Sastraratnakara Sathabhooshani

N. S. ANANTHAKRISHNA SASTRI

*Nurani (Sathabhooshani) Village*

*Palghat.*

Edited and Published by the Author

*Copies available from the Author,*

C/o BHARATI VIJAYAM PRESS,

5, Venkatachala Chetty Street,

Triplicane, Madras-5.

1958 [Price Rs. 15/



# भूमिका

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

केवलाद्वैतविशिष्टाद्वैतविचारपरम्परा कञ्चन कालमारभ्य सौहार्देन क्रमेण वर्धते, येन संप्रदायद्वयतत्त्वविज्ञाने सर्वेषामपि महानेवावसरः । तत्र मतद्वयविप्रतिपन्ना विषयास्तत्तत्संप्रदायानुसारेण प्रथममनुसन्धानमर्हन्ति । तत्र प्राधान्येन विचारमर्हन्तो विषया मतद्वयानुसारेणादौ संगृह्यन्ते । अनन्तरं चास्य निबन्धस्य परमं लक्ष्यम्, तत्प्रतिपादितानि तत्त्वानि च संग्रहेण विशदीकरिष्यन्ते । ते यथा—

## ॥ भेदाभेदश्रुतिप्रामाण्यम् ॥

1. **विशिष्टाद्वैतम्**— कार्यकारणभाव-शेषशेषिभाव-नियन्तृनियम्यभावोपास्योपासकभाव प्राप्यप्रापकभावनिबन्धनभेदस्य शास्त्रैकगम्यत्वम् । अभेदोऽपि "सोऽयं देवदत्त" इत्यादौ लोकसिद्ध, इति कथं तस्य शास्त्रवेद्यत्वम् ?

1. **केवलाद्वैतम्**—भेदवाक्यानि, अभेदवाक्यानि च वेदे श्रूयन्ते; तथाऽपि भेदवाक्यान्यभेदवाक्यापेक्षितनिषेध्यसमर्पकतयोपयुज्यन्ते, इत्यभेदवाक्याविरोधेन नेयानि । वाक्यस्याभेदपरत्वं तु लोकेऽपि 'सोऽयं देवदत्तः' इत्यत्र वर्तत इति तत्र प्रत्यक्षानुग्रहोऽपि । भेदस्य लोकसिद्धस्य तु शास्त्रबाधितत्वाद् न शास्त्रतात्पर्यविषयत्वम् ॥

## ॥ जीवभेदाभेदविचारः ॥

2. **विशिष्टाद्वैतम्**—अचित्संसृष्टजीवबहुत्वश्रुतिर्लोकसिद्धा । अत्र तु परिशुद्धप्रत्यगात्मबहुत्वं शास्त्रेण प्रतिपाद्यते । "नित्यानां बहूनामि"ति नित्यत्वबहुत्वयो. सामानाधिकरण्यं कथमद्वैतसिद्धान्त उपपद्यते ?

तत्र "नित्यानां चेतनानामि"ति सामानाधिकरण्येनैवान्वय सति संभवे युक्त, इति नित्यस्यापि नित्य इति विधया परापरनित्यत्वबोधने, जीवानामौपाधिकनित्यत्वबोधने

वा न तात्पर्यम्। तथाच सुदर्शनभट्टपादाः—"नित्यत्वसामानाधिकरण्येन बहुत्वेऽभिहिते परिशुद्धात्मबहुत्वमुक्तं भवती"ति ॥

2. **केवलाद्वैतम्**—"नित्यो नित्याना्मि"ति श्रुतिरपि लोकसिद्ध-चेतनभेदानुवादपरा, न तु मुख्यजीवभेदपरा, तस्यैव ब्रह्माभिन्नस्य तथा शास्त्रवेद्यस्यैकत्वसंभवात्, परमात्ममात्रैकत्वपरत्वायोगाच्च। 'नित्यानामिति' नित्यत्वाम्नानमुपाधितो बहूनामपि स्वरूपतो नित्यत्वाभिप्रायेण, न तु स्वरूपतो बहुत्वाभिप्रायेणापि ॥

अत एव नित्यानां नित्यः, चेतनानां चेतन इति जीवानां बहूनां नित्यत्वं चेतनत्वं चैकनित्यचेतनस्वरूपानुवेधेनैव, न स्वरूपतः, नित्यानां नित्यः, चेतनानां चेतन इत्यन्वयस्यैवोचितत्वात्। अन्यथा नित्यानां चेतनानां नित्य इति सामानाधिकरण्येन व्याख्याने चेतनपदं वितथम्। अतः सामानाधि-करण्येनान्वयोऽत्र बाधितः। "तत्त्वमसी"त्यत्र विना लक्षणां विशेष्यमात्रपर-त्वान्न लक्षणा; तथाप्यखण्डार्थपरत्वे न स्वारस्यमिति रत्नसारिणी। संप्रति किं स्वारस्यमधिकं विशिष्टाद्वैतमत इत्यालोचयामः ॥

## ॥ तत्त्वमसिवाक्यार्थः ॥

3. **विशिष्टाद्वैतम्**—"तत्त्वमसी"ति वाक्ये प्रतिपदं स्वरूपचैतन्यमात्र-परत्वे पदान्तरवैयर्थ्यम्, सर्वेषां पदानां पर्यायत्वापत्तिः, स्वरूपचैतन्यमात्रस्य प्रतिपाद्यैक्य-रूपत्वेऽप्ययमेव दोषः, तस्य ततो भेदे तु सखण्डार्थता ॥

3. **केवलाद्वैतम्**—"तत्त्वमसी"ति वाक्ये सर्वेषां पदानां विशेष-णांशप्रहाणेन विशेष्यमात्रपरत्वेऽपि न पदान्तरवैयर्थ्यम्, जीवत्वेश्वरत्वोपलक्षित-स्वरूपरूपेण स्वरूपचैतन्यमात्रबोधनार्थं पदान्तरस्यापेक्षा। अतो नैकेन पदेन गतार्थता, न वा पदान्तरवैयर्थ्यम्, इति समानविभक्तिकपदावगतैक्यपरत्वेन तत्त्वमस्यादिमहावाक्याखण्डार्थता न विहन्यते। प्रथमप्रतीतविशेषणांशहानेनैव विशेष्यैक्यबोधान्न प्रवृत्तिनिमित्तभेदाभावः, न वा पर्यायत्वम्। वाक्यार्थं ऐक्यमपि स्वरूपमेवेति नानुपपत्तिलेशोऽपि ॥

## ॥ अथ मिथ्यात्वानुमानहेतुदृश्यत्वविचारः ॥

4 **विशिष्टाद्वैतम्**—मिथ्यात्वानुमाने दृश्यत्वस्य हेतुत्वे कालात्ययापदेश-सोपाधिकत्व-व्याघातास्त्रीणि दूषणानि । तत्र जगत सत्यस्य प्रसिद्धत्वात्तद्बाधे कालात्ययापदेशो वह्न्यनौष्ण्यानुमानवत् । अभङ्गुरत्वेन सोपाधिकम् , ब्रह्मसाधारण्यात्तत्रानैकान्तिकम् ॥

4. **केवलाद्वैतम्** — स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वम् , स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् , ज्ञाननिवर्त्यत्वं वा मिथ्यात्वम् । तत्र हेतुर्दृश्यत्वम् । तच्च दृग्विषयत्वं दृक्तादात्म्यरूपं ब्रह्मणि न दृग्रूपे वर्तते, इति न तस्य तत्रानेकान्तः । प्रत्यक्षं तु ज्ञानमात्रं न प्रमारूपम् ; भ्रमज्ञानस्यापि मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वेन यावद्बाधं प्रामाण्याभ्युपगमेऽपि सति बाधे । भ्रमत्वात् तत्र न नैयायिकानामन्यथाख्यातिः । पञ्चीकरणप्रक्रियया यथार्थख्यातिं तु जयतीर्थीयन्यायसुधा "मातृमतङ्गमदिरादौ सुसदृशदुग्धादिभ्रमेण सुरापानादिकमपि दोषाय न स्यादिति प्रत्याचष्टे । अभङ्गुरत्वं तु ज्ञाननिवर्त्यत्वेन सोपादानस्य जगतः सन्दिग्धम् । प्रपञ्च., सत्यः ; भङ्गुरत्वादित्युपाध्यभावेन साध्याभावसाधनं तु व्याहतम् ॥

## ॥ मिथ्यात्वमिथ्यात्वेऽपि न प्रपञ्चसत्यत्वम् ॥

5 **विशिष्टाद्वैतम्**—मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वापत्ति । तदुक्तं चण्डमारुते—"मिथ्यात्वस्य मिथ्यात्वेऽपि तेन रूपेण मिथ्यात्वस्यासाध्यत्वादर्थान्तरम्" इति । न ह्यारोपितं मिथ्यात्वं सत्यत्वेन विरुध्यते । ततश्चाद्वैतहानि । उक्तं च सुदर्शनभट्टपादैः—"साध्यधर्मस्य पारमार्थ्यापारमार्थ्यविकल्पे पारमार्थ्यं चेदद्वैतहानि , अपारमार्थ्ये प्रपञ्चसत्यता, बाध्यबाधे बाध्यस्वरूपाबाध इति न्यायात्—इति ॥

5. **केवलाद्वैतम्**—मिथ्यात्वस्य मिथ्यात्वेन न मिथ्यात्वम् , किन्तु दृश्यत्वेन । बाध्यबाधे बाध्यस्वरूपाबाध इति न्यायो बाध्यतावच्छेदकभेदे, न तु तदैक्ये ; स्वप्ने गजतदभावयोरुभयनिषेध एकतरसत्यत्वाभावात् । "वैधर्म्याच्च न स्वप्नादिवत्" इति स्वप्नजागरवैधर्म्योक्तिरद्वैतमत एवोपपद्यते ॥

## ॥ योगाचाराद्वैतयोर्वैषम्यम् ॥

6. **विशिष्टाद्वैतम्**—जगन्मिथ्यात्ववादे योगाचारसाम्यम्, उभयत्रापि चिन्मात्रसत्यताभ्युपगमात्, जगदपलापसाम्यात्, अस्यैव मतस्योपनिषदारूढत्वं समर्थयितुमद्वैतिना प्रयासः। एवमेव शून्यवादादिभ्योऽपि नाद्वैतवादस्य विशेषः ॥

6. **केवलाद्वैतम्**—योगाचारमते क्षणिकविज्ञानमात्मा, अद्वैतमते नित्यमधिष्ठानं चिन्मात्रं सः। एवं प्रथमे—विषयस्य ज्ञानाकारतामात्रं कल्पितम्। तत्तु तदनादिवासनामात्रनिबन्धनम्। अद्वैते तु विज्ञानविवर्तस्याधिष्ठानानुवेधेन संसारदशायां सत्त्वेन प्रतीत्युपपत्तिः। अन्यत्र सावृतमसत्यत्वमित्युक्तावपि तद्व्यतिरेकेण संसारदशायां तत्प्रतीतिनिर्वाहायोगः, निरधिष्ठानवादश्च। तत्र नाद्वैतमत इवाज्ञानाश्रयविषयनित्याधिष्ठानस्वीकारः। अत एव वेदप्रामाण्यादिकं सर्वमपि। न चैवं योगाचारमते। अतः श्रुतिप्रामाण्येन मुक्तिदशायां जगदपलापेऽपि श्रुतिद्रोहो योगाचारमते, नाद्वैतवादे। "वैधर्म्याच्च न स्वप्नादिवदि"ति सूत्रमत एवोपपद्यते। विशिष्टाद्वैतमते तूक्तसूत्रविरोधो दुष्परिहरः। न च योगाचारा अद्वैतसिद्धान्तमेवाद्वैतिवदुपनिषदारूढं मन्यन्ते। शून्यवादस्तु सदसदादिचतुष्कोटिविनिर्मुक्तत्वात् शून्यतत्त्वस्य सद्रूपब्रह्मवादे न प्रसरत्यपि ॥

## ॥ अनुभूतिस्वप्रकाशता ॥

7 **विशिष्टाद्वैतम्**—अनुभूतिः, स्वप्रकाशा, अनुभूतित्वात्, व्यतिरेके घटादिवदित्यनुभूतिस्वप्रकाशत्वानुमानमसत्, सिद्धसाधन-कालात्ययापदेश-सोपाधिकत्वरूपदूषणत्रयग्रस्तत्वात्। अत्र स्वाश्रयं प्रति स्वप्रकाशत्वसाधने सिद्धसाधनम्, अन्यं प्रति स्वप्रकाशत्वसाधने बाधः, पुरुषान्तरज्ञानस्य पुरुषान्तरज्ञानेन प्रकाशात्। अन्यथा लौकिकवैदिकसर्वव्यवहारविलोपापत्तिः। अज्ञानाविरोधित्वं चोपाधिः। घटादौ तस्यैवानुभूतित्वप्रयोजकत्वात्। यत्र यत्रानुभूतित्वम्, तत्र तत्राज्ञानाविरोधित्वम्, पक्षे च साधनाव्यापकत्वमिति ॥

7. **केवलाद्वैतम्**—स्वप्रकाशं चिद्रूपं न वेद्यम्; अन्यथा घटादिवदननुभूतित्वप्रसङ्गः, इति न जन्यज्ञानं वृत्तिरूपं पराभिमतं धर्मभूतं ज्ञानं

वाऽभिप्रेत्य स्वाश्रयं प्रति स्वप्रकाशमानत्वं वा, अन्यं प्रति वेति विकल्पो नावसरति; स्वस्मै प्रकाशमानत्वस्यैव स्वप्रकाशमानत्वस्य स्वरूपज्ञानसंबन्धिनोऽत्र साधनात्। तस्य धर्मभूतज्ञानविषयत्वेनास्वप्रकाशत्वे त्वद्वैतिमतेऽपि चिद्रूपस्यापि घटादिवत् फलव्याप्यत्वाभावेऽपि वृत्तिव्याप्यत्वस्य स्वीकारात् स्वागतम्। न चाज्ञानाविरोधित्वमचिद्रूपत्वे तन्त्रम्; तत्राज्ञानकार्यत्वस्यैवोज्ञानविरोधित्वप्रयोजकत्वेनाचिद्रूपत्वस्य तदप्रयोजकत्वाच्च। चिद्रूपत्वं हि नाज्ञानविरोधि, इत्यज्ञानाविरोधित्वस्य न साधनाव्यापकत्वम्। अतोऽनुभूतिस्वप्रकाशत्वानुमानं न दुष्टम्। लोकव्यवहारप्रयोजकं ज्ञानं तु धर्मभूतं ज्ञानं वृत्तिरूपम्, तदवच्छिन्नचैतन्यं वा जन्यज्ञानमेव, न नित्यं प्रमाणाजन्यं वा ज्ञानम्, इति नाद्वैतमते लोकव्यवहारविलोपापत्ति ॥

## ॥ ब्रह्मणोऽज्ञानाविरोधित्वम्, अज्ञानेन तिरोधानोपपत्तिश्च ॥

8 **विशिष्टाद्वैतम्**—घटो भातीति जडे घटे स्वप्रकाशचिद्रूपं न भातीति तत्राप्रकाश इति ब्रह्मणोऽविद्ययाऽऽवरणे जडचिद्धर्माणा परस्परविरुद्धाना परस्परव्यतिकर॰। तेन चाज्ञानेन ब्रह्मण आवरणे स्वरूपनाश आपद्यते। प्रकाशैकस्वभावस्य प्रकाशतिरोधानं हि स्वरूपनाश एव ब्रह्मण। स्वरूपातिरिक्तज्ञानविषयत्वाभ्युपगमे जडात्वापत्तिर्वा। अनेन—ब्रह्म, जडम्, वृत्तिव्याप्यत्वात, घटवत्—इति फलति ॥

8· **केवलाद्वैतम्**—ब्रह्मणो नित्यत्वनिर्विशेषत्वस्वप्रकाशत्वानि भावरूपाज्ञानेन तिरोधीयन्ते। तत्र घटादीनां प्रकाशो वृत्तिप्रतिफलितस्वप्रकाशचित्संबन्धेन, येन फलव्याप्यत्वेन घटो भातीति व्यपदेशः, न तु तस्य प्रकाशस्वरूपतया। चिद्रूपं तु स्वरूपतोऽज्ञानाविरोधित्वादज्ञानेनाव्रियते। स्वरूपतिरोधानं नामाज्ञं प्रति मायया तिरोधानेनाप्रकाशः, न तु स्वयमप्रकाशमानतया। यथा परमते—आत्मा स्वस्मै स्वयं प्रकाशते, अन्यं प्रति विना धर्मभूतज्ञानं न प्रकाशते। अतो न चिज्जडधर्माणां विरुद्धानां परस्परव्यतिकरः ॥

## ॥ अज्ञाननिवर्तकं प्रमाणजन्यं ज्ञानम्, न स्वरूपज्ञानम् ॥

9 **विशिष्टाद्वैतम्**—ब्रह्मस्वरूपं स्वरूपत स्वप्रकाशत्वादध्यासविरोधि। न हि शुक्तित्वेन शुक्तिस्फुरणे तत्र रजताध्यास. समवति। अज्ञाननिवर्तनस्वभावस्य स्फुरणस्या-

ज्ञाननिवर्तकत्वेऽनिर्मोक्षप्रसङ्गः। साधारणाकारग्रहो भ्रमोत्पादक, असाधारणाकारग्रहस्तु तद्विरोधीति खलु शुक्तिरजतादिस्थले दृष्टम्। न चैवं निर्विशेषे ब्रह्मणि भ्रमविरोध्यविरोध्याकारभेदेनाज्ञानतन्निवृत्त्योरुपपत्तिः सम्भवति ॥

9 **केवलाद्वैतम्**—शुक्तिभ्रमोपादानमज्ञानं मूलाज्ञानावस्थाविशेषस्तूलाज्ञानम्, न तन्निर्विशेषविषयम्; शुक्त्यवच्छिन्नचैतन्यविषयत्वात्तस्य। अत एव व्यवहारदशायामेव तद्रजतस्य तदुपादानस्याज्ञानस्य च बाधः, तद्विषयस्तु शुक्तित्वम्, न तु शुक्तित्व-तद्विशिष्टव्यक्त्युभयम्। अतः शुक्तिरूप्यस्थले शुक्तिस्फुरणं भ्रमहेतुधर्मिमात्रस्फुरणम्। अस्फुरणं तु शुक्तित्वस्य धर्मस्य, निवर्तकं त्वस्फूर्णशुक्तित्वस्फुरणम्, इति ज्ञाताज्ञातसाधारणासाधारणधर्मभेदमादायैव भ्रमतन्निवृत्त्योरुपपत्तिः। अयमेव न्यायो ब्रह्माज्ञानतज्ज्ञानयोरपि भ्रमतद्विरोधिनोः। इयान् विशेषः—ब्रह्मावरकमज्ञानं मूलाज्ञानम्, तत्तु चिन्मात्राश्रयम्, चित्स्वरूपस्याविद्याकल्पितभेदस्यावरकम्। तत्रानावृतांशस्य शुक्ताविव प्रकाशः। तत्रावृतांश आनन्दस्वरूपम्, अनावृतांशौ सच्चिदंशौ, इत्यावृतानावृतकल्पितांशद्वयवति ब्रह्मणि शुक्तौ रजतस्येवानावृतांशस्यैव तदाश्रिताविद्यापरिणामात्मना भानाद् भ्रमाधिष्ठानत्वम्। अनावृतांशस्यापि भाने त्वखण्डात्मना साक्षात्कारादज्ञाननिवृत्तिरिति परिस्थितिः। अतो नाविद्यया ब्रह्मणोऽनावरणम्, इति रजतभ्रमस्येव तस्य प्रमाणजन्यज्ञानेन निवृत्तिरिति सर्वमवदातम् ॥

## ॥ अहमर्थाध्यासभाष्याविरोधः ॥

10. **विशिष्टाद्वैतम्**--अस्मत्प्रत्ययगोचरे विषयिणि चिन्मात्रेऽन्तःकरणाद्यध्यास इति परेषां भाष्यम्। तत्र स्वरूपचैतन्यमात्रस्य स्वप्रकाशस्याधिष्ठानत्वे तन्मतेऽस्मत्प्रत्ययगोचरस्य स्वप्रकाशचिन्मात्रातिरेकात् स्वरूपचैतन्यस्य ज्ञानान्तरविषयत्वं विनाऽस्मत्प्रत्ययगोचरत्वस्य बाधितत्वाच्च स्वप्रकाशस्यापि वेद्यत्वमवश्यमेव स्वीकर्तव्यम्। इदं चानाद्यध्यासे कथमुपपद्यते? तत्राहमर्थ एवाध्यासाधिष्ठानं चेत्, ब्रह्माधिष्ठानतावादस्य दत्तोऽञ्जलिः। अन्तःकरणाद्यध्यासस्य जीवोऽधिष्ठानमिति विवक्षायामहमर्थात्मताऽसिद्धिः। सर्वथा तु निर्विशेषं चैतन्यं न सर्वविभ्रमाधिष्ठानम्, इत्यहमर्थ स्वरूपतो नात्मा, किन्त्वात्मानात्मशबलितं स्वरूपमेवेत्यद्वैतसिद्धान्तो न क्षोदक्षम। अहमर्थ आत्मनि

देहादिभ्रमव्यवस्थापनमेवास्यापि भाष्यस्य लक्ष्यं चेत्, स्वागतम् । तत्र पूर्वपक्षः शरीरमेवात्मेति वादमादाय, सिद्धान्तस्तु तन्निरासपरतयेति वक्तव्यम् । न चायमात्मेति पूर्वमीमासाध्ययनानन्तरमपि संभाव्यते, इति व्यर्थमध्यासभाष्यं परेषाम् ॥

10. **केवलाद्वैतम्**—यत्तु "युष्मदस्मत्प्रत्ययगोचरयोरि"त्यध्यासाक्षेपभाष्ये—"अस्मत्प्रत्ययगोचरे विषयिणि"—इति भाषितम्, तदिदमस्मत्प्रत्ययगोचरत्वं चिन्मात्रस्याधिष्ठानतयाऽहंकारशबलिताहमर्थघटकत्वमभिप्रेत्य। अहमाद्यध्यासे ह्यावृतानावृचैतन्यप्रकाशमात्रं कारणम्, न तु वृत्तिविषयतया शुक्तिरूप्यादिस्थल इवाधिष्ठानस्फुरणविषयतयेति भगवत्पादाशयः। व्यक्तीक्रियते चेदं परस्ताद्भाष्य एव। अनाद्यध्यासत्वादहमध्यासस्य न साद्यध्यासस्थलन्यायावसरः। अत एव विषयिणीति विशेष्यम्। तत्र विषयत्वं विषयित्वं च यद्येकस्य बाधितं स्यात्, तर्हि कथं तदुक्तिरिति शङ्का तु—सिद्धमनाद्यहमध्यासं लक्षणेनोपपादयितुं प्रवृत्तत्वादस्य भाष्यस्याहमर्थघटकचैतन्याशमात्रस्यानन्दात्मनाऽऽवृतस्याधिष्ठानत्वोपपादनपरमेवेदं भाष्यमित्यभिप्रेत्य परिहरणीया। तेनात्मानात्मशबलितं रूपमेवाहमर्थ इति सिद्धान्तः स्थापितो भवति। तथा निर्विशेषब्रह्माधिष्ठानतावादोऽपि। तेन चेदं भाष्यं सर्वस्यात्मव्यतिरिक्तस्य चिद्रूपे ब्रह्मण्यध्यासनिरूपणार्थमेव। तत्पदलक्ष्यार्थस्य ब्रह्मण एवाधिष्ठानत्वे वक्तव्येऽस्मत्प्रत्ययगोचरत्वेनाधिष्ठानोल्लेखस्तु जीवब्रह्माभेदमौपनिषदं व्यक्तीकर्तुम्। तत्र कर्मकाण्डाधिकारिण आत्मनो न मुख्यमात्मत्वम्, किन्तु मिथ्यात्मत्वमिति निरूपणार्थमध्यासभाष्यमिति तु वस्तुस्थितिः ॥

## ॥ सगुणनिर्गुणवाक्यविरोधचर्चा, अपच्छेदन्यायचर्चा च ॥

11 **विशिष्टाद्वैतम्**—गुणसामान्यस्य कुत्रचन "निर्गुणं" 'निरञ्जनमि'त्यादौ निषेधः, क्वचिच्च सत्यकामत्वसत्यसकल्पत्वादिगुणविशेषविधिश्चाम्नायते। तत्र चोत्सर्गापवादन्यायेन गुणसामान्यनिषेधस्य गुणविशषेतरविषयत्वं वक्तव्यम्। अन्यथा स्वेनैव विहितानां स्वेनैव निषेधे श्रुतेरुन्मत्तप्रलापत्वापत्ति. , अनियतपौर्वापर्यानुष्ठानविशेषविषयकापच्छेदन्यायस्तु नियतक्रमविषयत्र्यन्तवाक्यार्थनिर्णये नोपयुज्यते। गुणविधयो यद्युपासनार्था न तत्परा, तर्हि स्वरूपप्रमाणान्यपि कथं तत्पराः? अत एव—अपच्छेदन्याय

यविषय प्रयोगावधिकविरोध , सगुणनिर्गुणवाक्यविरोधस्तु स्वरूपप्रयुक्त । अतो विरोधाभ्युपगमेऽप्यनियतविरोधपौर्वापर्यविषयोऽपच्छेदन्याय —इति श्रुतप्रकाशिका । अत्रापच्छेदन्यायाविषय प्रयोगावधिकविरोध इत्यस्यायमाशय —नायमुपक्रमाधिकरणस्यापवाद । तत्र हि नियतपौर्वापर्यवाक्यद्वयं विषय , अत्र त्वनियतपौर्वापर्यानुष्ठानद्वयविरोधे प्रायश्चित्तशास्त्रव्यवस्थेति । तथा चात्रोत्सर्गापवादन्यायेनैव सगुणनिर्गुणवाक्यविरोध परिहरणीय ॥

11. **केवलाद्वैतम्**—सामान्यविशेषन्यायो हि—"यदाहवनीये जुहोति," "पदे जुहोती"त्यादौ विध्योरेव, निषेधयोरेव वा, यथा "वार्ताकं न भक्षयेत्" श्वेतवार्ताकं न भक्षयेदित्यादौ, न तु विधिनिषेधयोः। न हि "न हिंस्यात् सर्वा भूतानि" "अग्नीषोमीयं पशुमालभेते"त्यत्र सामान्यविशेषन्यायः, क्रत्वर्थहिंसापरत्वादग्नीषोमीयवाक्यस्य. रागप्राप्तहिंसानिषेधपरत्वादहिंसावाक्यस्य। अन्यथा रागप्राप्ताग्नीषोमीयहिंसाया इव "श्येनेनाभिचरन् यजेते"त्यादिवाक्यविहितहिंसाया अपि धर्मत्वापत्तिः। 'पञ्च पञ्चनखाः' भक्ष्या इत्यत्रापि पञ्चेतरपञ्चनखभक्षणपरिसंख्यानेन रागप्राप्तपञ्चपञ्चनखभक्षणमभ्यनुज्ञायते, न तु दिधीयते, इति नात्रापि "न हिंस्यादि"ति शास्त्रस्यापवादः। अभ्यनुज्ञातं हि कर्तव्यमिति न नियमः, किन्तु कृते तदनुष्ठाने दोषाभावः। तेन च सगुणवाक्यानां निर्गुणवाक्यानां च विरोधे निर्गुणवाक्यस्य बाधो न सगुणवाक्येन। न हि सामान्यविशेषन्याये विशेषशास्त्रेण सामान्यशास्त्रस्य बाधः, इति परमार्थगत्या निर्गुणस्याप्युपासनाशेषतयाऽभ्यनुज्ञानमेवात्र विवक्ष्यते। सति चैवं वाक्यद्वयमप्यबाधितमविरुद्धं प्रमाणं च भवति। अभ्यनुज्ञाविधित्वाच्च सगुणवाक्यानां तत्रावान्तरतात्पर्याद् न तथैव स्वरूपमिति नियम इति ज्ञाप्यते। अत एव निर्गुणवाक्येनापेक्षितनिषेध्यसमर्पकतया गुणविशेषपराणां प्रामाण्यमपि व्याख्यातम्, अन्यथाऽप्रसक्तप्रतिषेधापत्तिः। प्रसक्तं खलु निषिध्यते। तत्र यदि विशेषवाक्यानुसारेण गुणविशेषमात्रस्य पारमार्थिकत्वं मन्यते, तर्हि सामान्यशास्त्रेण निषेध्या गुणविशेषाः के ? कथं वा ते ब्रह्मणि प्रसजन्ति ? येषां निषेधार्थं निर्गुणवाक्यम्।

सामान्यविशेषन्यायस्तत्रैव भवति, यत्र सामान्यस्य विशेषातिरिक्तविषयत्वेन सावकाशत्वम्, सगुणनिर्गुणवाक्ययोस्तु सत्यकामत्वादिविहितविशेषगुणातिरिक्तगुणवत्त्वस्य ब्रह्मण्यप्रसक्तत्वेनैव निर्गुणत्वोपपत्तौ सगुणवाक्यप्रामाण्य एव पर्यवसानाच्च कुत्रावकाशो निर्गुणवाक्यस्य? अतो नात्र सामान्यविशेषशास्त्रन्यायोऽवतरति, इत्यपच्छेदन्यायेनैव व्यवस्था ॥

तत्र च गुणवाक्येनोपासनार्थतया प्रसक्तानां गुणानां निषेधादुपासनाशेषतया गुणानां चारितार्थ्येऽपि परमार्थतस्तेषां बाधेऽपि सकलबन्धनिवर्तकसविन्मात्राधिष्ठानज्ञापनान्निर्गुणवाक्यानां मुख्ये प्रामाण्ये सर्वप्रामाण्यनिर्वाहः। अपच्छेदन्यायेन गुणानां बाधेऽपि व्यावहारिकसत्त्वं न बाध्यते, इति घटादिज्ञानानामिव प्रामाण्यमनपोहम्। तदुक्तम्—

"देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात् ॥"

इति। तत्र पौर्वापर्यमनुष्ठानौपाधिकमेव विवक्षितम्, न तु शास्त्रस्वरूपौपाधिकमिति तु "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति त्वपच्छेदन्यायमूले सूत्रे प्रकृतिवदिति दृष्टान्तविरुद्धम्। प्रयोगावधिको विरोधोऽपि तन्मूलभूतशास्त्रद्वयविरोध एव। सर्वमीमांसकव्याख्याविरुद्धं नोपक्रमाधिकरणापवाद इदमधिकरणमिति; अन्यथा शाबरं भाष्यं वार्तिकं वा तृणीकृतं स्यात्। व्यक्तं चैतदुपक्रमपराक्रमोपसंहारविजयादावपि। न्यायामृतादिकमप्यपच्छेदन्यायमुक्तरूपमेवाङ्गीकृत्य सावकाशविषयत्वमपच्छेदन्यायस्य प्रतिपादयति। अद्वैतिनोऽपि व्यावहारिकप्रामाण्येन सगुणवाक्यानां प्रामाण्यमेवाभिप्रयन्ति, न सर्वथाऽप्रामाण्यम्। अतो नापच्छेदन्यायादत्र निस्तारः ॥

## ॥ ब्रह्मणो निर्विकारत्वाद्युपपादनम् ॥

12. निर्गुणवाक्यं सत्त्वादिनिषेधपरम्। "सत्त्वादयो न सन्ति यत्र" इति वचनात्, "न भूय. सत्त्वसस्थानो देहोऽस्य परमात्मन." इत्यादिनिषेधात् 'अशरीरमि'त्या-

दिकं संघातात्मकदेहनिषेधपरम् । भेदनिषेध —अब्रह्मात्मकभेदनिषेधपरः । अविकारत्वमपि—परमैश्वर्यावहजगदाकारतारूपाविहितपरिणतिव्यतिरिक्तनिषेधपरम् ; यजेत, उपासीतेत्यादियागोपसनादिजन्यप्रीत्यात्मविकारव्यतिरिक्तविकारनिषेधपरं वा, न तु सर्वथा गुणशरीरभेदविकारनिषेधपरं निर्गुणवाक्यम् ॥

12. **केवलाद्वैतम्**—ब्रह्मव्यतिरिक्तस्य सर्वस्याऽऽविद्यकत्वेन दोषत्वाद् यदि निर्दोषं ब्रह्म, तर्हि निरस्तसमस्तगुणमपि । न हि कल्याणगुणो नाम कश्चिदपि, येनासंख्येयनिरतिशयत्वादिकं तस्य संभाव्यते । यदि संघातात्मकस्य शरीरस्य निषेधः, तर्हि 'यस्य पृथिवी शरीरमि'त्यादीनां का गति ? यदि न तस्य मुख्यत्वम्, किं वाऽन्यन्मुख्यं शरीरं ब्रह्मणः ? कुत्र वा श्रुतम् ? स्वतन्त्रभेदनिषेधे यदि भेदश्रुतीनां तात्पर्यम्, तर्हि तत्रापरतन्त्रभेदबोधकं प्रमाणं किम् ? सामानाधिकरण्यं तु कल्पितं भेदमादायाप्युपपद्यते । "उदरमन्तरं कुरुते" इत्यत्यल्पस्यापि भेदस्य निषेधस्तत्र कथमन्यथोपपद्यते ? परिणामित्वं यदि ब्रह्मणो न विकारः, तर्हि कथं भास्करमतान्निस्तारः । किं वा प्रयोजनं प्रमाणं च सर्वेषां वाक्यानां स्वाभिप्रेतार्थपरतयाऽन्यथानयने ? सन्तुष्यतां यथाश्रुतार्थग्रहणेन ॥

## सगुणनिर्गुणवाक्ययोः छागपशुन्यायाद्यनवतारः ॥

13 **विशिष्टाद्वैतम्**—'यदाहवनीये जुहोति' "पदे जुहोती"त्यनयोरिव सगुणनिर्गुणवाक्ययोरपि सामान्यविशेषन्यायविषयतयैव प्रामाण्यम्, अविशेषं यच्छास्त्रमन्याय्यत्व विकल्पस्ये'त्यादिदाशमिकन्यायस्य विधिद्वयविषयस्यैव विधिनिषेधविषयस्यापि स्वीकारात्। एवमेव छागपशुन्यायोऽपि । न्यायद्वयमपीदं सामान्यविशेषशास्त्रयोर्विशेषशास्त्रप्राबल्यपरम् । तत्रैकत्र सामान्यशास्त्रस्य विषयान्तरेऽवकाश., अपरत्र तु सामान्यस्य विशेष एव पर्यवसानमिति परं विशेष· ॥

13. **केवलाद्वैतम्**—तत्राग्निषोमीयहिंसावाक्यस्य हिंसासामान्यशास्त्रस्य च विधिनिषेधरूपत्वेन नाहवनीयपदहोमन्यायविषयतेति पूर्वमेवोक्तम् । 'छागो वा मन्त्रवर्णादि'ति न्यायोऽपि सामान्यस्य विशेष उपसंहाररूपो नात्र प्रवर्तते ; उभयोरपि विधिरूपत्वात्, दृष्टान्ते प्रकृते च विधिनिषेधरूपत्वात् ।

तत्रोभयत्र दृष्टान्तयोर्विध्यर्थयोः सामान्यविशेषरूपता । सगुणनिर्गुणवाक्ययोस्तु तदेकदेशयोः सामान्यविशेषरूपतेत्यादि बहुविधं वैषम्यम्, इति निर्गुणवाक्यान्यथानयनं न न्यायानुसारि । ततश्छागपशुन्याये विधित्सितयोरुभयोरपि सामान्यविशेषरूपत्वेन यथैकत्र पर्यवसानम्, नैवं सगुणनिर्गुणवाक्ययोरुपसंहारः, निर्गुणसगुणयोः सामान्यविशेषरूपत्वाभावात्, विधिनिषेधरूपत्वेनोपसंहारायोगाच्च ॥

## ॥ नारायणपदस्य विष्णुमात्रपरत्वचर्चा ॥

14 **विशिष्टाद्वैतम्**—बह्व उपनिषदो नारायणस्य परमात्मत्वं बोधयन्ति, कुत्रचन "शंभुराकाशमध्ये ध्येय" इत्यादौ "शंभुरुपास्यत्वेन निर्णीयते। अत शंभुपदस्यापि नारायणपरत्वमेव स्वीकर्तव्यम्, न रुद्रपरत्वम्, नारायणपरमात्मकताया एवौपनिषदत्वात् ।

"सृष्टिस्थित्यन्तकारिणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स सञ्ज्ञां याति भगवान् एक एव जनार्दनः ॥"

इति वचनं तु ब्रह्मादिशरीरकत्वेन ब्रह्मादिषु नारायणशब्दं व्युत्पादयति । अतो नारायणशब्दो न ब्रह्मरुद्रसाधारण ॥

तथाहि "ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायण. सरसिजासनसन्निविष्टः" इत्यादिवचनाद् नारायणोत्कर्षावगमात्, "ध्येयः शंभुराकाशमध्ये" इत्यादीना तदविरोधेन नयनमेव युक्तम् । तत्र नारायणोत्कर्षप्रतिपादिका उपनिषदोऽधो निर्दिश्यन्ते । ता यथा—ब्रह्मबिन्दूपनिषत्, या—"सर्वभूताधिवास च यद् भूतेषु वसत्यधि । सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः, तदस्म्यहं वासुदेव" इत्युपसहरन्ती, "पुरुषो ह वै नारायणोऽकामयत प्रजा सृजेयेति, नारायणाद्ब्रह्माऽजायत, नारायणाद्रुद्रोऽजायत" इत्युपक्रम्य "ओं नमो नारायणाये"ति मन्त्रार्थविवेचनमध्ये नारायणमेव परामृशन्ती "नारायणसायुज्यमाप्नोति" इति नारायणसायुज्येनैवोपसंहरन्ती नारायणोपनिषत्, "सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् । विश्वं नारायणं विष्णुमि"त्युपक्रम्य, "स ब्रह्म स शिवः सेन्द्र सोऽक्षरः परमः स्वराट्" इति परविद्याप्रतिपाद्यत्वेन नारायणमेवोपसंहरन्ती महानारायणोपनिषत्, 'ओं नमो नारायणाये'ति मन्त्रोपासनामाहात्म्यनिरूपणपूर्वकं विष्णुध्यानस्यैव सर्वदुःखनिरासनिदानत्वं निरूपयन्ती—आत्मबोधोपनिषत्, पुरुषसूक्तस्य विष्णुपरत्वं प्रत्यृचं प्रतिपादयन्ती मुद्गलोपनिषत्, "एको ह वै नारायण

आसीन्, न ब्रह्म, नेशान ' इत्युपक्रम्य "स ब्रह्म स ईशान " इति परामृशन्ती महोपनिषत्, 'यदि योन्या. प्रमुच्येऽहं तत्प्रपद्ये नारायणम्" इति विवेचयन्ती गर्भोपनिषत् "दिव्यो देवो नारायण." इत्युपक्रम्य प्रवृत्ता सुबालोपनिषच्च ॥

14. **केवलाद्वैतम्**- उपनिषत्सु कानिचन वाक्यानि नारायणपरमात्मत्व बोधयन्ति, बह्वस्तूपनिषद शंभोः परमात्मत्वम्। तत्रापि शिवपरमात्मत्वबोधिका एवोपनिषदोऽधिकाः। सर्वथा तूपास्यस्वरूपं तत्तदिच्छानुगुण शैव वा भवतु, वैष्णवं वा। पारमार्थिकं स्वरूपं तु सर्वेषां चिन्मात्रमेव, अन्यत्तु सर्वमौपाधिकम्। नारायणपदमपि संज्ञामात्रं विष्णुपुराणे सृष्टिकर्तुब्रह्मणोऽपि नारायणात्मत्वं प्रतिपादयति, एवं रुद्रस्यापि, इति शिवापेक्षया विष्णोः, विष्ण्वपेक्षया शिवस्य वोत्कर्षापकर्षयोः श्रुतिस्मृतिपुराणेतिहासानां न तात्पर्यम् ॥

" सृष्टिस्थित्यन्तकारिणी ब्रह्मविष्णुशिवात्मिकाम्।
स संज्ञां याति भगवानेक एव जनार्दनः ॥ "

इति विष्णुपुराणं विष्णोरपि ब्रह्मादिकोटिप्रवेशात् यथा न ब्रह्मादिस्वरूपं नारायणशब्दार्थः, न विष्णुस्वरूपमपि तथेति ज्ञापयति। जनार्दनशब्दार्थस्तु सर्वभूताशयप्रत्यगभिन्नपरमात्मैव, इति जीवेश्वरत्वोपलक्षितसविन्मात्रात्मनैव ब्रह्मानुसन्धानं परमाय श्रेयसे, अभ्युदयाय तु ब्रह्मविष्णुरुद्राद्यात्मनाऽपीत्येवं—परमेव विष्णुपुराणमिति मन्तव्यम् ॥

तथाहि—"ध्येयः शंभुराकाशमध्ये"—इत्यादि वचनैः शिवस्यैव परमात्मत्वं ध्येयत्वेन प्रतिपाद्यते, इति विष्ण्वादिशब्दानां विष्ण्वादिशरीरकसदाशिवपरतयैव योजनं युक्तम्। तत्र शिवोत्कर्षप्रतिपादिका उपनिषदोऽधो नाम्ना निर्दिश्यन्ते—ब्रह्मणाऽऽश्वलायनं प्रति—"उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिमि"त्यादिना परविद्याप्रतिपाद्यत्वं सदाशिवस्यैवेति बोधयन्ती कैवल्योपनिषत्, नारायणपदेनेव महेश्वरपदेनापि ध्येयस्वरूपस्य प्रतिपादनादुभयानुगतस्वरूप-

स्यैव परमात्मत्वं प्रतिपादयन्ती गर्भोपनिषत्, रुद्रस्यैव विष्णुदेवेन्द्रादि-सर्वात्मत्वं प्रतिपादयन्ती—अथर्वशिरउपनिषत्, "कारणं तु ध्येयः सर्वैश्वर्य-संपन्नः शंभुराकाशमध्ये" इत्यादिना सदाशिवस्यैव सर्वकारणपरमात्मत्वं निर्दिशन्त्यथर्वशिखोपनिषत्, 'एवं खल्वात्मेशानः शंभुर्भर्गो रुद्रः प्रजापतिरि' त्यादिशंभ्वादिवाच्यस्यैव विष्णुनारायणादिशब्दवाच्यत्वव्यवस्थापनपरा मैत्रा-यणीयोपनिषत्, 'सदाशिवं ब्रह्मादिवन्दितं योगिध्येयं परं पदं तत्र गत्वा न निवर्तन्ते, तदेतदृचाऽभ्युक्तम्—"तद्विष्णोः परमं पदमि"त्यादिना सदाशिव-पदस्यैव व्यापकवैष्णवपदत्वादिनिरूपणपरा बृहज्जाबालोपनिषत्, "तत्त्वमसी" त्यभेदवाचकमिदं योजयन्ती "ते शिवसायुज्यभाजो भवन्ति" इति ब्रह्मभावस्य सदाशिवभावत्वमेवाभेदेनेति बोधयन्ती सर्वकारणपरमात्मस्वरूपं शिव एवेति विविञ्चाना च शुकरहस्योपनिषत्, 'नमः शिवाय गुरवे सदानन्दमूर्तये' इत्युपक्रम्य प्रवृत्ता निरालम्बोपनिषत्, अन्याश्च तेजोबिन्दु—ध्यानबिन्दु—नारद-परिव्राजक-त्रिशिखब्राह्मण—शरभ—त्रिपाद्विभूत्याद्युपनिषदो विष्णूत्कर्षवादं वार-यन्ति शिवोत्कर्षदृढीकरणेन। परस्परविरोधे चाद्वैतवादेनैव सर्वासामुपनिष-दामैककण्ठ्यं वक्तव्यम्। अद्वैतस्यौपनिषदत्वे तु नृसिंहतापिनी-सर्वसार—स्कान्द—पैङ्गल—महा—कठरुद्रोपनिषदादयो बहवः प्रमाणानि। तत्र नारायण-पदस्य सर्वकारणस्य मुख्यस्यैव तत्त्वस्य तत्तत्कार्यवशात्तत्र तत्र गौण्या प्रवृत्त-त्वात् तत्रैवाचिरोद्धृतमैत्रायणीबृहज्जाबालोपनिषदादयोऽप्यनुकूलाः। सर्वथा तु शरीरभेदमात्रं ब्रह्मरुद्रविष्णूनाम्, कार्यभेदमात्रं वेति शरीरभेदेनैव तेषां भेदः, न तु संविन्मात्रस्वरूपेण। "ब्रह्मविष्णुशिवात्मिकाम्" इत्यत्र शिव इव विष्णुरपि तत्समकोटौ निर्दिश्यते, इति नास्य वाक्यस्य शिवशरीरकविष्णु-परतायां तात्पर्यम्। महाभारतादिकमपि न शिवापेक्षया विष्णूत्कर्षप्रतिपादन-परमिति व्यक्तमधिकमन्यत्र ॥

## ॥ "सर्वं खल्विदं ब्रह्मे"त्यादिसामानाधिकरण्यचर्चा ॥

15. **विशिष्टाद्वैतम्**—"सर्वं खल्विदं ब्रह्मेति सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनम्। तत्र सर्वशब्देन सर्वशरीरकं विवक्ष्यते। तथाच सर्वशरीरकं ब्रह्म, तत् सर्वशरीरकं जलानिति योजना। अथवा सर्वमिति निष्कर्षकविधया जगत्परम्, ब्रह्मपदं तु लक्षणया शरीरपरम्। तत्र प्रथमयोजनाया सर्वशब्दस्य विशिष्टपरत्वं शक्त्यैव- आकृत्यधिकरणन्यायेन। आकृत्यधिकरणं हि सुसदृशावयवसमुदायवाचित्वं शब्दाना माधयति, यद् बहुष्वनुगतं प्रतीयते, न तु तदतिरिक्ता जातिर्नाम। तत्रावयवातिरिक्तसमुदायानङ्गीकारमते, अवयवावयविनोर्भेदाभेदवादिमते वाऽऽकृतिवाचकत्वं व्यक्तिवाचकत्वं चेत्यनर्थान्तरम्। अनेन न्यायेन चराचरजगद्वाचकानामपि पदानामनुगतं संस्थानं ब्रह्मैव, इति शरीरवाचकानां पदाना शरीरिपर्यन्तत्वतात्पर्यमूरीकर्तव्यम्। जगदपृथक्सिद्धत्वाद् ब्रह्मण. संस्थानापृथक्सिद्धाया व्यक्तेरिव संस्थानवाचकशब्दबोध्यत्वं स्वीकर्तव्यम्। एवं सत्येव सामानाधिकरण्यस्योपपत्ति। अद्वैतमते तु बाधायां सामानाधिकरण्यम्। तत्र हि सर्वपदेन सर्वराहित्यं ब्रह्मशब्देन स्वरूपमात्रं लक्षणयेति लक्षणाद्वयं दूषणम्, इति सामानाधिकरण्यप्रतीतिर्विशिष्टाद्वैतमत एव स्वरसा—इति सर्वमित्यादौ बिशिष्टैक्यपरत्वमेव॥

15. **केवलाद्वैतम्**—"सर्वं खल्विदं ब्रह्मे"ति, सामानाधिकरण्यं बाधायाम्। तत्र सर्वशब्दे सामानाधिकरण्यप्रतीतिदशायां न लक्षणा, सर्वस्य ब्रह्मव्यतिरेकेणाभावावगतिस्तु भाविबाधप्रतीतिमादाय। अतो नात्र लक्षणा पदद्वयेऽपि। ब्रह्मपदमप्यत्रोपादानकारणाविद्योपहितपरमेव, इति न तत्रापि लक्षणा। न ह्यन्यथा ब्रह्मोपादानतानिर्वाहः। तद्धि न समवायिकारणतया, न वा परिणामिकारणतयेति परेषामपि संप्रतिपन्नम्। तथाऽप्युपादानत्वं स्वीक्रियमाणं कथं विवर्तोपादानत्वं विनोपपद्यते? तथा च मृद् घट इत्यादाविव कार्यकारणभावनिबन्धनमेव सामानाधिकरण्यम्, न तु शरीरशरीरिभावनिबन्धनं सर्वत्र; मृद् घट इत्यादौ व्यभिचारात्। अत एवेदं रजतमित्यादिसामानाधिकरण्यम्। न चात्र शरीरशरीरिभावः। तथाचाभेदे सामानाधिकरण्यं कार्यकारणभावनिबन्धनमित्येव युक्तम्; लाघवात्॥

तत्राकृत्यधिकरणं संस्थानातिरिक्तजातिपरं वा भवतु, सस्थानपरं वा, उभयथाऽप्यनुगतसंस्थान एव शक्तिः, न तु तद्विशिष्टाया व्यक्तौ। न हि तत्तद्व्यक्तिरपि संस्थानं नाम, अन्यथा कथञ्चित्तयोरभेदमादाय व्यक्तिवाचित्वे किमनेनाकृत्यधिकरणेन ? तेन ह्यनुगते विशेषणे शक्तिः, तद्विशिष्टव्यक्तौ लक्षणेत्येव फलति, इति शरीरवाचकानामपि तत्तत्संस्थान एव शक्तिः, न तु व्यक्तौ । न हि शरीरं सर्वमेकसंस्थानकम् ; देवमनुष्यतिर्यगादिभेदप्रविलया-पत्तेः । सति चैवं शरीरिवाचकत्वं न शरीरपदस्य, किन्तु तल्लक्षकत्वमेव ; नतरां च तद्विशिष्टवाचकत्वम् । न च सर्वं जगद् ब्रह्मोपादेयं ब्रह्मशरीर-तामर्हति । सङ्घातविशेष शरीरं भगवतो नास्तीति वदतां कथं पृथिव्यादि, सत्त्वरजस्तमोगुणात्मकप्रकृतिर्वा शरीरम् ?

अन्तर्यामिब्राह्मणं सर्वाधिष्ठानतामेव ब्रह्मणो बोधयति ; अन्यथा सर्व-कारणाव्यक्तशरीरकतामात्राम्नानेनोपपत्तौ किं पृथिव्यादिबहुशरीरकत्वाम्नानेन ? तत्र यद्यन्तर्यामिब्राह्मणनिर्दिष्टान्येव शरीराणि, तर्हि तदनिर्दिष्टानां कथं ब्रह्म-शरीरत्वम ? यद्युपलक्षणम्, तर्हि किमेतावता निर्देशेन ? अतोऽविद्योपहित-स्याविद्यावृतस्याविद्यापरिणामस्थूलसूक्ष्मभूतोपादानत्वम्, तदुपाधिकस्य जीव-स्याप्यौपाधिकोत्पत्तिमतोऽपि ब्रह्मोपादेयत्वमेव, परं तु तदौपाधिकम् ॥

तदुपादेयत्वं नाम तदध्यस्तत्वम् । तच्चानाद्यध्याससिद्धमविद्याया अपीति निरूपणार्थमेवान्तर्यामिब्राह्मणम् ॥

बहूनि श्रुतिस्मृतीतिहासपुराणवचनानि ब्रह्मशरीरताप्रतिपादकानि दृश्यन्ते ॥

शरीरलक्षणमपि सर्वानुगत दुर्वचम् । सर्वं चेदमत्र ग्रन्थे विस्तृतम् । तत्र "सर्वं खल्वि"त्यत्र प्रथमयोजनायां ब्रह्मपदं लाक्षणिकम्, यन्निष्कर्षक-विधया प्रयुक्तम् । जलानित्यत्र च जादिपादानां जगत्येव समन्वितानां ब्रह्मणि

लक्षणा, द्वितीययोजनायां सर्वपदं ब्रह्मपदमुभयं लक्षकम्, इति बाधायां सामानाधिकरण्यपक्षतोऽप्यस्वारस्यमेव, यतस्तत्र नैकस्मिन्नपि पदे लक्षणा ॥

तत्र द्वितीययोजनायां केवलस्य ब्रह्मणोऽनुपादानत्वात् कथं सर्वं ब्रह्मेति सामानाधिकरण्यकथाऽपि ?

एतेन— विशिष्टैक्यपरत्वमपि—व्याख्यानम् । विशिष्टयोरैक्यं हि विशिष्टैक्यं नाम । सर्वं खल्विवत्यत्र तु न द्वे विशिष्टे प्रतीयेते । "तत्त्वमसी"त्यत्र तु न सूक्ष्मचिदचिद्विशिष्टस्य स्थूलचिदचिद्विशिष्टस्य चोपस्थितिः, न वा तयोरैक्यं वाक्यार्थः । तत्रापि चिद्विशिष्टमात्रोपस्थानेऽप्यचिद्विशिष्टस्यानुपस्थानात् कथ चिदचिद्विशिष्टस्योपस्थितिः ? शरीरवाचकानां शरीरिपर्यन्तत्व आनन्दमयाकाश-प्राणज्योतिरादिपदाना स्थूलजीवाचिदाकाशादिपरत्वशङ्काथा नोत्थितिरपि ॥

## ॥ माधवदास्यस्य परममुक्तित्वचर्चा ॥

16 **विशिष्टाद्वैतम्**—औपनिषद माधवदास्यं सुखाय, न दुःखाय । "सर्वं परवश दुःखम्" "सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्" इति वचनमूलकम्—शेषत्वम्, दुःखरूपम्, शेषत्वादित्यनुमानं तु प्रियविशेषशेषत्वेन व्यभिचारि । कर्ममूलक-देहात्माभिमानप्रयुक्तत्वाद् दुःखस्य न शेषत्वप्रयुक्तत्वम् । निरस्तसमस्तदोषकल्याणगुणा-करभगवच्छेषत्वं तु सुखसाधनतया प्रमाणावगतं धर्मिग्राहकमानविरोधाच्च दुःखरूपम्, इति भगवद्दासत्वसुखसाधनत्वप्रतिपादनपरवचनशतबाधितमुक्तानुमानम् ॥

16. **केवलाद्वैतम्**—मानुषादिप्रजापत्यानन्दान्तस्य सगुणब्रह्मा-नन्दान्तस्य वोत्तरोत्तरं सुखतारतम्यश्रवणात् कर्मनिबन्धनशरीराभिमानशून्या-नाममिन्द्रादीनामपि दुःखाल्पत्वाम्नानाच्छरीरसंबन्धमात्रं दुःखसाधनमेव; तत्र कर्मकृतत्वदिव्यत्वादिकमप्रयोजकम् । उभयलिङ्गत्वं परमात्मनोऽपुरुषार्थ-गन्धाभावप्रयोजकम्, न तु तद्दास्यमपि । सर्वथा तु भगवद्दास्यस्य प्रचुरानन्द-हेतुत्वमात्रेण तद्दासानां निरतिशयसुखप्रतिपादकवचनानामुपपत्तिः । मुक्ता-नामपि परमानन्दभोक्तृत्वस्यैव युक्तत्वात्तद्दास्यमात्रेण न पुरुषार्थपर्यवसानम्, किंतु तद्भावेनैव ॥

## ॥ पूर्वोपन्यस्तसर्वार्थ संकलनम् ॥

तदयं निष्कर्षः—वेदान्तवाक्यानां भेदेऽवान्तरतात्पर्यम्, अभेदे तु महातात्पर्यमित्यभेदस्यैवौपनिषदत्वात्, "नित्यो नित्यानां चेतनश्चेतनाना" मित्यस्याप्यमुख्यमिथ्यात्मभेदपरत्वेन जीवत्वेश्वरत्वोपलक्षितमुख्यजीवात्मभेदे-ऽप्यवान्तरतात्पर्यस्यैव युक्तत्वेन महातात्पर्यविषयत्वेन जीवब्रह्मैक्यस्यैवौ-पनिषदत्वात्. तत्त्वमसीति वाक्यस्याखण्डार्थत्वेऽपि सर्वपदावैयर्थ्यात्, प्राथमिकप्रतीतौ प्रवृत्तिनिमित्तभेदप्रतीत्याः सत्त्वेन सामानाधिकरण्य-प्रतीतिनिर्वाहात्, मिथ्यात्वरूपसाध्यहेतुपक्षाणां सुनिरूपत्वेन मिथ्या-त्वानुमानेनाप्यद्वितीयब्रह्मबोधकवेदान्तवाक्योपबृंहणात्, मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चसत्यत्वानुपपत्त्याऽद्वैताविघातात्, योगाचारमाध्यमिकादिमतादद्वैतवादस्य महावैलक्षण्येन वेदान्तानां तदुपबृंहणपरत्वस्याद्वैतवादेऽसंभवात्, अनु-भूतिस्वप्रकाशत्वानुमानस्यादुष्टत्वात्, शुक्तिरजतादिस्थल इव ब्रह्मणोऽविद्य-याऽऽवरणसंभवेन ब्रह्मणः सर्वविवर्ताधिष्ठानत्वस्याबाधात्, "अस्मत्प्रत्य-यगोचरे विषयिणि चिदात्मके" इत्यत्र भ्रमप्रतीतिकालिकमांशिकं विषय-त्वमादाय सविन्मात्रस्यास्मत्प्रत्ययगोचरत्वोपचाराविरोधात्, सगुणनिर्गुण-वाक्ययोः सामान्यविशेषन्याय-छागपशुन्यायाविषयत्वेनापच्छेदन्यायस्यैव तत्र प्रवृत्त्या निर्गुणवाक्येष्वेव वेदान्ताना परमतात्पर्यात्, ब्रह्मव्यतिरिक्तस्य सर्वस्याऽऽविद्यकत्वेन, ज्ञाननिवर्त्यत्वेन च दोषत्वेन निरस्तसमस्तदोषत्वाति-रिक्तकल्याणगुणाकरत्वस्य बाधितत्वात्, आकृत्यधिकरणस्य शब्दानां जातिविशिष्टव्यक्तौ, शरीरविशिष्टशरीरिपर्यन्तत्वे वा तात्पर्याभावात्, श्रुतिस्मृतिपुराणेतिहासानां शिवविष्ण्वाद्यैक्य एव तात्पर्येण विष्णूत्कर्षे तात्पर्याभावात्, 'सर्वं खल्विदं ब्रह्मे'ति सामानाधिकरण्यस्य बाधाया सामानाधिकरण्य एव स्वारस्येन शरीरशरीरिभावनिबन्धनसामानाधिकरण्ये तात्पर्याभावात्, माधवदास्यस्य दुःखामिश्रसुखसाधनत्वस्यानन्दमीमांसानुगृ-हीतन्यायविरुद्धत्वेन सच्चिदानन्दरूपाखण्डानावृतसविन्मात्रताया एव परम-पुरुषार्थत्वाच्चाद्वैतवादो निरङ्कुशमौपनिषदं तत्त्वम् ॥

## ॥ शरीरलक्षणम् ॥

17. **विशिष्टाद्वैतम्**—यस्य चेतनस्य यत् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं वा शक्यम्, तच्छेषतैकस्वरूपं वा, तत् तस्य शरीरमिति शरीरस्य लक्षणत्रयम्। तुरीयलक्षणं तु यस्य चेतनस्य यदवस्थमपृथक्सिद्धं द्रव्यम्, तत् तस्य शरीरमिति। तत्र प्रथमं लक्षणं यस्य चैतन्यविशिष्टस्य यदवस्थं द्रव्यं यावत्सत्तमसम्बन्धानर्हम्, स्वशक्ये नियन्तव्यस्वभावम्, तत् तस्य शरीरमिति। द्वितीयं—यस्य चेतनस्य यदवस्थं द्रव्य यावत्सत्त धार्यमिति। तृतीय तु—यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तमशेषतानर्हम्, तदवस्थं तत् तस्य शरीरमिति विभाग ॥

अत्र चैतन्यविशिष्टं प्रति द्रव्यान्तरस्य शरीरत्वनिर्देशाद् न चैतन्यं धर्मभूतज्ञानं वा शरीरम्, न वाऽचेतनं मृदादिकं प्रति तदपृथकसिद्धस्वभावघटादीना शरीरत्वम्, नियन्तव्यस्वभावत्वस्य यावत्सत्वं धार्यत्वस्य विशेषणाद् न पित्रादिकं प्रति पत्रमित्रकळत्राणा शरीरत्वम्। मुक्तात्माऽपि यावत्सत्त्व धार्यत्वात् परमात्मशरीरमेव, तच्छेषतैकस्वभावं वा, यावत्सत्तमिति विशेषणाद् न प्राणादीनां शरीरसृष्टे प्रागेव सृष्टानां शरीरत्वम्। द्रव्यमिति क्रियादिव्यवच्छेद। यदवस्थमिति विशेषणाद् भस्मीभावमापन्नस्य न शरीरत्वम्, तदानी प्रागवस्थशरीरस्यासत्वात्। अन्तर्यामिब्राह्मणं चात्र प्रमाणम् ॥

17. **केवलाद्वैतम्**--यदाश्रित्यैवात्मा भोगवान्, तत् तस्य शरीरम्, आत्मनो यावत्सत्त्वं भोगायतनत्वं शरीरत्वमिति तु निष्कर्षः। तेन न पुत्रमित्रकलत्रगृहारामादीनां जीवं पति शरीरत्वम्। मुक्तात्मनोऽपि श्रीभाष्यमतेऽप्राकृतदिव्यमङ्गलविग्रहस्य सत्त्वात् तदाश्रित्यैव भोगायतनत्वम्। एवमेव भगवतोऽपि। न हि मुक्तात्मानं प्रति प्राकृतावस्थं शरीरं नाम। यावत्सत्त्वं नियन्तव्यस्वभावत्वं यथा न पुत्रमित्रकलत्रगृहारामादीनाम्, तथा प्रेतशरीरस्यापि। एवमेवार्चादिशरीराणामपि, इति लक्षणत्रयस्य, कि बहुना-- तृतीयलक्षणस्यापि तत्राव्याप्तिः। सति चैवमन्तर्यामिब्राह्मणे पृथिव्यादिशरीरत्वाम्नानं तदुपाधित्वमात्राभिप्रायम् ॥

अन्तर्यामिब्राह्मणं हि नाधिदैवं शरीरं परमात्मनः श्रावयति, न वा नित्यसूरिशरीरकत्वम्। अतो न सर्वचिदचिच्छरीरकत्वे तत् प्रमाणम् ॥

सुबालोपनिषत्तु—"पादमेवाप्येति यः पादमेवास्तमेति, गन्तव्यमेवाप्येति यो गन्तव्यमेवास्तमेति, विष्णुमेवाप्येति यो विष्णुमेवास्तमेति, सत्यमेवाप्येति यः सत्यमेवास्तमेत्यन्तर्याममेवाप्येत्यन्तर्याममेवास्तमेति, विज्ञानमेवाप्येति विज्ञानमेवास्तमेति, आनन्दमेवाप्येति यः आनन्दमस्तमेति, तुरीयमेवाप्येति यस्तुरीयमस्तमेति तदमृतमभयमशोकमनन्तं निर्बीजं निर्बीजमेवाप्येतीति होवाचे"ति तुरीयनिर्बीज एवान्तर्यामिणोऽपि परम्परया लयं श्रावयन्ती चिदचिच्छरीरत्वं मुख्यं परमात्मनो दण्डेन वारयति । सर्वाणि शरीरलक्षणानि मुक्तशरीरे प्रेतपिशाचादिशरीरेषु चाव्याप्तम् ॥

## ॥ धर्मभूतज्ञानम् ॥

18. **विशिष्टाद्वैतम्**—धर्मभूतज्ञानं नित्यं सकोचविकासशालि च । तत्र प्रमाणं तु "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्" "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इत्यादिश्रुतयः ॥

'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनाद् मणे. ।
देहप्रमाणान्न ज्ञानमात्मन. क्रियते तथा ॥"

इत्यादिस्मृतयः, "ज्ञोऽत एवेति" सूत्रं च ॥

तथापि जीवस्य जागरसुषुप्त्यादिभेदस्तु तमोविशेषसनिधानासंनिधानाभ्याम् । तस्य प्रसरणे प्रमाणं तु "प्रज्ञा च तस्मात् प्रसृता पुराणी"ति श्रुतिः,

"इन्द्रियाणा हि चरता यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृते पादादिवोदकम् ॥"

इति स्मृतिश्च । तस्यात्मगुणस्यापि प्रसरणस्वभावप्रयोजकद्रव्यत्वं प्रभादृष्टान्तेन । तेन च धर्मभूतज्ञानम्, द्रव्यम्, प्रसरणादिमत्त्वादित्यनुमानं तत्र प्रमाणमिति फलति ॥

एतेन—आत्मधर्मभूतस्यापि ज्ञानस्य स्वाश्रयादन्यत्र गमनमपि— व्याख्यातम् । न चान्यत्र गन्तुरपि स्वाश्रयत्याग, किन्त्वविहायैवात्मानमितश्चेतश्चेन्द्रियद्वारा निस्सार. ॥

न च तस्य बहुलविरलत्वप्रसङ्ग , विभक्तभागवस्त्वेव तद्दर्शनात् । अतिसूक्ष्मत्वाद- दर्शनोपपत्त्या सत्यपि बहुलविरलभावे न काऽपि हानि ; तावतापि दर्शनस्पर्शनाद्यसंभवो·

टि०—चतुःसहस्रेऽष्टशते मणिमन्तादयोऽसुराः। जनिष्यन्ति ब्रह्मयोनौ दैत्याः सद्धर्मदूषकाः। मिथ्यावादमसच्छास्त्रं करिष्यन्ति कलौ युगे। गोपायिष्यन्ति सच्छास्त्रं सच्छास्त्रपरिपन्थिनः॥ एवं धर्मेषु नष्टेषु शास्त्रेषु च कलौ युगे। देवैर्विज्ञापितो विष्णुर्वायुमाज्ञापयिष्यति। उद्धरस्व महाबाहो मम धर्मान्सनातनान्। इत्याज्ञप्तो भगवता कलौ वायुर्भविष्यति। मध्वनामा यतिरसौ सच्छास्त्राणि करिष्यति। गीतायाश्चोपनिषदां भाष्याणि च करिष्यति। निरासिष्यति पाषण्डान् सच्छास्त्राणि महामतिः। स्थापयिष्यति सद्धर्मान्सच्छास्त्रं व्याकरिष्यति। श्रोष्यन्ति मुनयः सर्वे शुकाद्या देवरूपिणः। इति। तथाऽलकापुरीमाहात्म्ये—कलौ तु पापभूयिष्ठे मिथ्याज्ञानपरायणाः। दूषयिष्यन्ति सद्धर्मान्सच्छास्त्राणि कलौ पुनः। उद्धरिष्यति सच्छास्त्रं कश्चित्कालान्तरे यतिः। राजद्वारं समाश्रित्य पाषण्डान्निरसिष्यति। व्याकरिष्यति सच्छास्त्रं देवब्राह्मणतर्पकः। इति। स्कान्दपुराणे श्रीमुष्णमाहात्म्ये नवमेऽध्याये—कलौ पाषण्डभूयिष्ठे धर्मलेशविवर्जिते। वैवस्वतेऽन्तरे प्राप्ते त्वष्टाविंशे कलौ युगे। ये पुरा भारते युद्धे निहता राक्षसा भुवि। यदा प्रवर्तयिष्यन्ति मार्गं पाषण्डगोचरम्। तदा सम्प्रार्थितो देवैर्भगवान्हरिरीश्वरः॥ तत्कर्मदक्षं विनतं मातरिश्वानमादिशत्। वायुस्तु यतिरूपेण जनिष्यति कलौ युगे। स दशप्रमतिर्भूत्वा कलौ धर्मान्वदिष्यति। कृत्वा सच्छास्त्रसन्दर्भं स्थापयिष्यति सत्पथम्। एवमेव महादेवि नारायणपरायणाः। काले काले भविष्यन्ति तत्र तत्र महाव्रताः। ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी। कावेरी च महापुण्या तथा दुग्धापगा नदी। एतन्मध्यप्रदेशेषु धर्मः पादेन तिष्ठति। म्लेच्छाक्रान्तं भवेत्सर्वं भूतलं तु कलौ युगे। कलौ पाषण्डभूयिष्ठं पुण्यक्षेत्रं भविष्यति। न च विष्णुकथा क्वापि नापि वैष्णवपद्धतिः। आक्रान्तेषु च देशेषु म्लेच्छरूपैश्च राक्षसैः। द्राविडेषु च देशेषु धर्मः स्थास्यति पादतः। पञ्चद्राविडगो धर्मो मोक्षहेतुर्भविष्यति। यदा यदा हि धर्मस्य ग्लानिर्भवति पार्वति। अवतीर्य तदा विष्णुर्धर्मगोप्ता स्वयं हरिः। सम्प्रदायेषु नष्टेषु सर्वधर्मे लयं गते। विष्णोरनुज्ञया भक्ताः कलौ धर्मप्रवर्तकाः। एवं भागवता धर्मा भविष्यन्ति युगे युगे। इत्यादि। तथा ब्रह्माण्डपुराणे क्षेत्रकाण्डे वेङ्कटगिरिमाहात्म्ये तृतीयेऽध्याये शङ्खलिखितसंवादे—त्वं चापि गच्छ शैलेन्द्रं पूर्वं स्वर्णमुखीतटे। यत्र ब्रह्मशिला नाम सरिन्मध्ये च वर्तते। अगस्त्यस्तपसा पश्चाद्गत्वाऽत्र निवसत्र वै। यदा ईशानविष्ण्वादिदेवानां तत्र सन्ति हि। यतिरूपो मातरिश्वाऽष्टाविंशतितमे कलौ। अवतीर्य वसत्यत्र मध्वनामा वरं विभो। अवाप तपसा पुण्यः प्रीत्या चागस्त्ययोगिनः। तत्रस्थोऽर्दतालये पुण्ये चातुर्मास्यं करिष्यति। इतः श्रोष्यति सच्छास्त्रं पद्मतीर्थादिहाऽऽगतः। इति॥ तस्मादापस्तम्बाद्युदाहृतश्रुतिवदस्मदाचार्योदाहृतश्रुतयोऽपि प्रेक्षावदुपादेयाः। श्रुतित्वेन सर्वज्ञदृष्टत्वात्। तथा च स्मृतिः—“विशिष्टेक्षणतोऽनूनतपस्वी बहुवेदवित्। वेद इत्येव यं पश्येत्स वेदो ज्ञानदर्शनात्” इति वदन् परास्तः। आपस्तम्बादिभिः स्वावदर्शितसूक्तोदाहृतानां श्रौतस्मार्तकर्मविधायकानां लिङ्गमन्त्राणां मध्वाचार्योपज्ञचतुष्कमठादिवचनानामिव श्रुतित्वे विप्रतिपत्त्यभावेन तद्दृष्टान्तोदाहरणस्य मोहमूलत्वात्। तेष्वपि विप्रतिपत्त्यभावेऽनादीनि द्वैतसाधकानि तान्यन्यैरद्वै-

न च तत्र विकासस्योल्लेखोऽपि । आन्तरस्यात्मनो बाह्यप्रकाशस्तु तदुपाध्यन्तःकरणमात्रस्यैकलोलीभावेन विषयदेशव्याप्त्यापि निर्वहति, इति तदर्थं ज्ञानस्यैव व्याप्तिरपेक्ष्यते । न च तत्र विषयाणामात्मसंबन्धोऽन्तःकरणनिर्गम इव, इति जानामीति प्रतीत्युपपत्तिरन्तःकरणप्रसरण एव ॥

न च ज्ञानं द्रव्यम्; निरवयवत्वात्, येन तस्य प्रसरणादिकमुपपन्नं स्यात् । न च तद्द्रव्यत्वे किमपि प्रमाणम् । धर्मभूतज्ञानम्, द्रव्यम्, प्रसरणादिमत्त्वादित्यत्र तु हेतुसिद्धौ द्रव्यत्वसिद्धिः, द्रव्यत्वसिद्धौ हेतुसिद्धिरिति परस्पराश्रयता । अत एवात्मधर्मस्य ज्ञानस्यान्यत्र गमनादिकमपि वार्तम् । धर्मभूतज्ञानं हि यदि धर्मिमात्राप्पृथक्सिद्धम्, यावत्सत्तमसबन्धानर्हं च, तर्हि कथं तस्यात्मानमविहायान्यत्र गमनम्? कथं वा संबन्धो विषयेण तस्य? स हि संयोगविशेषो विभागं विना कथमुपपद्यते? तत्रायं संयोगो यद्यविभागेऽपि, तर्हि नित्यः । तत्र च सर्वघटादिप्रकाशापत्तिः ॥

तत्र कालभेदेन धर्मभूतज्ञानस्य परिमाणभेदे "अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः" इति दिगम्बरान् प्रति प्रयुक्त चोद्यं स्वस्मिन्नपि लगति । केवलयुक्त्यादिमूलार्थप्रतिक्षेपे तात्पर्यमित्युभयत्र समानम् । न च धर्मभूतज्ञानप्रसरणादौ विना युक्तिमन्योन्याश्रयादिदोषग्रस्ताम्, अस्ति कोऽप्यागमः प्रमाणम् । श्वेताश्वतरादिश्रुत्यर्थस्तु प्रकरणविरुद्धो न धर्मभूतं ज्ञानं गोचरयति ॥

## ॥ तत्त्वव्यवस्था ॥

19 **विशिष्टाद्वैतम्**—अशेषचिदचित्प्रकारं ब्रह्मैव तत्त्वम् । तत्र प्रकारप्रकारिणोर्मिथोऽत्यन्तभेदेऽपि विशिष्टैक्यादेकत्वव्यपदेशः । तदन्तर्गतं च सर्वं द्रव्याद्रव्यात्मना विभक्तम् । उपादानं द्रव्यम् । अवस्थाश्रय उपादानम् । अतथाभूतमद्रव्यम् ॥

तत्र द्रव्यं जडाजडभेदेन प्रत्यक्पराग्भेदेन च द्विविधम् । अथवा—प्रकृतिकालजीवेश्वरनित्यविभूतिभेदेन तत षड्विधम् । तत्त्वत्रयव्यवस्था तु धीकालनित्यविभूतिपरित्यागेन ॥

तत्र परत एव भासमानं जडम् । तदन्यदजडम् । स्वस्मै प्रकाशमानं प्रत्यक् । परस्मै प्रकाशमानं पराक् । तेनाजडाया अपि धिय. पराक्त्वमेव । अस्मत्प्रत्ययविषयत्वं प्रत्यक्त्वम् , इदंप्रतीतिविषयत्वं पराक्त्वमिति तु निष्कर्ष । तत्र द्रव्याद्रव्याद्यवान्तर-विभागस्त्वन्यतोऽवगन्तव्य: ॥

तत्र बुद्धितत्त्वविषये चिदचित्प्रकारत्वप्रयोजकशरीरशरीरिभावे चाद्वैतमतात् श्रीभाष्यमतस्यास्ति महान् विशेष । तत्र बुद्धितत्त्वं नित्यम् । सर्वं चेदमुपरिष्टाद्व्यक्तीभविष्यति ॥

19. **केवलाद्वैतम्**—निर्विशेषं संविन्मात्रं मुख्यं च तत्त्वं तस्यानावृतावस्थायाम् । आवृतावस्थायां तु दृग्दृश्यभेदेन द्विविधमवान्तरं तत्त्वम् । तत्र जीवेश्वरावपि विशिष्टरूपेण दृश्यकोटिप्रविष्टौ, उपलक्षितरूपेण तु दृङ्मात्रौ । तत्र दृक्त्वं स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वरूपं स्वप्रकाशत्वम् । तदेव मुख्यं प्रत्यक्त्वम् । अन्यत्तु सर्वं दृगधीनप्रकाशम् , पराक्, इति काल-धी-विभूतीनां ब्रह्मलोकान्तानां दृश्यकोटावन्तर्भाव: । तत्त्वैकत्वव्यवस्था तु परमार्थदृष्टिमाश्रित्य ॥

तत्र जडं दृश्यमिति चानर्थान्तरम् , इति प्रायेणैकरूप्यमेव मतद्वयेऽपि । तत्र बुद्धेरपि दृग्विषयत्वेऽपि घटादाविव स्वप्रकाशार्थं वृत्त्यन्तरानपेक्षणाद् मुख्यज्ञानावच्छेदकत्वाच्च ज्ञानत्वोपचार:, स्वप्रकाशत्वव्यपदेशश्च । तत्र बुद्धितत्त्वमद्वैतसिद्धान्तेऽन्त:करणपरिणामो वृत्ति:, या जन्या, न नित्या । न च चिदचिच्छरीरकतोपपद्यते । तेषु शरीरत्वाम्नानं तु कुत्रचन तदुपाधित्वमात्राभिप्रायम् , यस्य तत्त्वसाक्षात्कारेण बाधेऽद्वैतसिद्धि: ॥

## ॥ ब्रह्म जगदुपादानतोपपत्ति: ॥

20. **विशिष्टाद्वैतम्**—ब्रह्म न स्वरूपेणोपादानम् , निर्विकारत्वादिविरोधात् । नापि शक्त्युपधानेन, शक्तेरभिन्नत्वे स्वरूपानतिरेकात् , भिन्नत्वेऽद्वैतमतापातात् । भिन्नाभिन्नत्वेऽभिन्नत्वाकारेण विकारादिदोषप्रसङ्गात् , किन्तु कारणावस्थसूक्ष्मचिदचिद्विशिष्टमेव ब्रह्मोपादानकारणम् । न च तावता निर्विकारत्वश्रुतिविरोध: ; तस्या: सर्वान्तर्यामिशरीरींशव्यवस्थितत्वात् । विशिष्टशेषेण विकाराश्रयत्वं त्विष्टमेव । इदमेवाभिप्रेत्य

स्थूलसूक्ष्मचिदचितां कारणतावच्छेदकत्वेन तत्र तत्र तदेकशेषतैकस्वभावत्वस्य शरीरत्वस्य व्यवस्था, तस्य विशिष्टस्यैवोपादानस्यैव निमित्तत्वमपीत्यभिन्ननिमित्तोपादानं ब्रह्म गीयते। अत्र निर्विशेषवादोऽप्रामाणिकः, विशेषाणां स्थूलरूपाणां सूक्ष्मरूपाणां वा तदपृथक्सिद्धानां ततो वियोगस्यासंभवात् ॥

अत्र विशिष्टस्येव विशेषणस्यापि नोपादानत्वम्, उपादानतावच्छेदकस्यानुपादानत्वात्। तथाचोक्तम्—वर्णानामुपादानत्वविचारमधिकृत्य न्यायसिद्धाञ्जने—"उपादानावच्छेदकतयोपादानत्वमिति चेत्, न, तथात्वे मृत्पिण्डगतपिण्डत्वादिवदनुपादानत्वम्। विशिष्टस्योपादानत्वेऽपि विशेषणस्य विशिष्टत्वाभावेन तदभावात्" इति। तत्र कुत्रचन विशेष्यमात्रस्य विशेषणमात्रस्य वोपादानत्वाम्नानं विशिष्टोपादानत्वाभिप्रायं विशेष्यमात्रस्य विशेषणमात्रस्य वौपचारिकमिति मन्तव्यम् ॥

20. **केवलाद्वैतम्**—मायावच्छिन्नं मायाविशिष्टचैतन्यं वेश्वर एवोपादानकारणम्। तत्र विशेष्यांशो माययाऽऽवरणदशायां विवर्तोपादानम्, न परिणामिकारणम्। अतो न निर्विकारत्वश्रुतिविरोधः। परिणामिकारणं तु माया, इत्यंशभेदेन द्विविधमुपादानत्वमादाय विशिष्टकारणतावादः। अथवा अविद्याया निमित्तकारणमात्रत्वात्, सहकारिकारणमात्रत्वाद्वा ब्रह्ममात्रमुपादानमिति प्रस्थानभेदेन व्यवस्था। सर्वेषामद्वैते पर्यवसानमविशिष्टम्, इति न विशिष्टस्य विकारित्वप्रसक्तिः। औपाधिकं विकारित्वं त्विष्टमेव तस्य। निर्विकारं ब्रह्मस्वरूपं विगलितमायासम्बन्धं त्वद्वैतमत एव। स्वरूपमात्रमविशिष्टं तूभयत्र नोपादानम्, न वा निमित्तमिति समानम् ॥

तत्र यदि स्वरूपमात्रं न कारणम्, तर्हि कथं तत् चिदचितौ च तत्त्वानि? यदि च विशिष्टमेवोपादानम्, विकारि च, तर्हि 'सत्यं ज्ञानमनन्तमि'त्यादिवाक्यं किंविषयम्? विशिष्टविषयं तत् कथं स्वरूपमात्रपरम्? स्वरूपमात्रस्यातत्त्वत्वात्, इति "अधीहि भगवो ब्रह्मे"त्यादीनाम्—"आनन्दो ब्रह्मेति व्यजानादि"त्यन्तानां किं वा तत्त्वं गोचरः? आकाशवाय्वादिक्रमेण सृष्टिप्रलयादिपराणां वाक्यानां का वा गतिः? निष्कर्षकविधया तत्तद्विशेषणविशेष्यांशस्वरूपविवेचनार्थं घटकश्रुतित्वेन व्यवस्था तु नवीना कल्पना। कुतो वा कुत्र वा घटकविघटकादिभेदः श्रुतीनामधिगतः? अतोऽध्यारोपापवादनयेन

सविशेषनिर्विशेषवाक्यानां नयनमेव युक्तम्। अपच्छेदन्यायस्यात्र प्रवृत्तिप्रकारोऽन्यत्रात्रैव विवेचितः। शतदूषणी तु—"विशिष्टोपादानतायां विशेषणमात्रस्य परिणामित्वेऽपि विशिष्टस्यापि परम्परयाऽऽश्रयत्वेनोपादानत्वप्रतिक्षेपस्त्वशक्यः" इति विशेषणांशस्य मुख्योपादानत्वम्, विशेष्यस्य तु परम्परयोपादानत्वम्, इति विशिष्टस्य विकारित्वं मुख्यमुपादानत्वं च प्रतिक्षिपति॥

## ॥ आत्मज्ञातृत्वस्वाभाविकत्वचर्चा ॥

21 **विशिष्टाद्वैतम्**—चिच्छायापत्तिसपर्कादिनाऽऽत्मनो ज्ञातृत्वम्, वस्तुतो न कर्तृत्वमात्मन इत्यस्मिन्नंशे साख्योपदिष्टाथजीवनम्, स्तम्भादिप्रत्यय, मिथ्या, प्रलयत्वात्, य प्रत्यय, स मृषा, यथा स्वप्नादिप्रत्यय इति सौगतोपदिष्टार्थजीवनम्, चार्वाकोपदिष्टाहमर्थविनाशाभ्युपगमात् चार्वाकमतोपजीवनम्, इति—

साख्यसौगतचार्वाकसकरात् सकरोदय ।
दूषणान्यपि तान्यत्र भूयस्तदधिकानि च ॥

यथा ह्यद्वैतमत विवरणभामत्यादिप्रस्थानभेदा, एवं श्रीभाष्यसिद्धान्तेऽपि। तद्यथा-शरीरलक्षणत्रितयस्य मिलितस्य लक्षणत्वमित्येक· पक्ष, प्रत्येकलक्षणत्वमित्यपर.। एवं व्यष्टिशरीराणामद्वारकशरीरत्वपक्ष एक, सद्वारकशरीरत्वपक्ष इतर.। उभयो· फलतोऽविशेषो लक्ष्यैक्यं च समानम्। तत्र सुषुप्तिमूर्छाद्यवस्थास्वद्वारकशरीरकत्वपक्षेणैव गति., न तु सद्वारकत्वपक्षेण॥

तत्राऽऽत्माणुत्वविभुत्वविचारे स संसारदशायामणुपरिमाण·, मुक्तिदशाया तु व्यापी।

वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीव स विज्ञेयः, स चानन्त्याय कल्पते ।

इति श्रुति कथमणुपरिमाणत्वं श्रावयतीति वरदविष्णुमिश्रमतम्। सारभाष्यं तु ज्ञानव्याप्तिमात्रम्, न त्वात्मव्याप्तिरिति वदति। तथा सुखदु खयोर्ज्ञानरूपत्वम्, इच्छाद्वेषप्रयत्नानामपि ज्ञानरूपत्वमिति प्रस्थानभेद·। तथा धारावाहिकज्ञानैकत्वपक्षो वरदनारायणमिश्राणाम्, भट्टपराशरपादाना च। अन्येषा तु तदनेकत्वम्। सुषुप्तौ तमोविशेषेण बुद्धेरस्फूर्तिरिति केषाचन सिद्धान्त., श्रीराममिश्रसिद्धान्तस्तु तत्रापि धियो न स्फूर्ति, अर्थाव्यवहारस्तु करणोपरमादिति। सर्वथा तु विशिष्टाद्वैताद्वैतसिद्धयोरवान्तरभेदाः प्रक्रियाविशेषा अविशिष्टाः, इति प्रस्थानविशेषस्य प्रस्थानान्तरावलम्बनेन निरसनप्रकार उभयत्रापि न सांप्रतम्॥

21. **केवलाद्वैतम्**—औपाधिकं ज्ञातृत्वमित्यस्मिन्नंशे यद्यपि सांख्येन साम्यम्; तथापि शुद्धस्य प्रत्यगात्मनो न तन्मत इव भोक्तृत्वमद्वैत-मते। कर्तृत्वभोक्तृत्वादिरहितसंविन्मात्रत्वादात्मनस्तत्र, तथापि सांख्या-भिमतप्रधानकारणवादनिषेधोऽद्वैतमते। तत्र सेश्वरसांख्यानां प्रधानमात्र-परिणामित्वावादो ब्रह्मकारणता विना विशिष्टाद्वैतमत एव, यत्रांशे सूत्रकारा विरुन्धते, इति सूत्रप्रतिषिद्धांशे सांख्यमतोपजीवनं परमत एव। न हि सूत्रकार आत्मन औपाधिकं ज्ञातृत्वं कर्तृत्वं च निषेधति, प्रत्युत समर्थयति—"यथा च तक्षोभयथे"त्यत्र। अहमर्थत्वमात्मनस्तु परमत एवोपजीव्यते चार्वाक-मतात्, यस्तु—निरस्यतेऽद्वैतमते। तस्य सौगतकोटौ वेदाप्रामाण्यविषयेऽत्यन्त-मेव सदृक्षाणां दिगम्बराणामुपजीवनेनैव संकोचविकासशालिनो नित्यस्य धर्म-भूतज्ञानस्य स्वीकारः, इति बौद्धसदृक्षार्हतमतोपजीवनं परमत एव। अहमर्था-त्मतावादस्यैव चार्वाकाभिमतस्य स्वीकारात्, प्रत्यक्षप्राबल्यवादस्वीकाराच्च चार्वाकोपजीवनम्। अद्वैतमते तु चार्वाकमत इव, परमत इव वा, नाहमर्थ आत्मा, न वा आत्मनाशश्चर्वाकमत इव, अहंकारस्योपाधिमात्रस्य हि तत्र नाशः, नाहमर्थविशेष्यसंविन्मात्रस्य मुक्तौ नाशः। व्यक्तं चैतदन्यत्राद्वैत-दीपिकावेदान्तरक्षामणिशतभूषण्यादौ, सिद्धान्तसिद्धाञ्जनादौ च—इति

जैनकापिलचार्वाकसंकरादन्त्यजोदयः।
दूषणान्यपि तान्येव भूयस्तदधिकानि च॥

आत्मनानात्वे न्यायमीमांसायाः—सिद्धान्तोपजीवनमेव श्रीभाष्य-सिद्धान्ते, अद्वैते तु तद्विरोधः॥

अद्वैतसिद्धान्ते तत्तत्प्रक्रियाविशेषेषु बहवः प्रस्थानभेदाः सिद्धान्तलेश-संग्रहे सङ्ग्रहीताः विवरणभामतीवार्तिकसंक्षेपशरीरकप्रकटार्थकारादिसंमताः सिद्धान्तैक्याविरोधिनः, परं तु प्रस्थानविशेषस्य प्रस्थानान्तरावलम्बनेन निरसनं न साधु। सर्वत्रेयमेव हि नीतिः॥

सद्विद्यायां विचारणीयाः प्रतितन्त्रसिद्धान्तभेदाः प्रधाना मतद्वयाभिमता-स्तदवान्तरवाक्यत्रयावलम्बिनोऽधो निर्दिश्यन्ते—"उत तमादेशमप्राक्षीरि" त्यत्रादेशपदार्थः, 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'त्यत्रानेन-जीवेनपदार्थः, तत्त्वमसिमहावाक्यार्थश्च ॥

## ॥ सद्विद्यायामादेशपदार्थः ॥

22. **विशिष्टाद्वैतम्**—अत्रादिशति प्रशास्तीति कर्तुरेव करणत्वविवक्षया "अकर्तरि च कारके सञ्ज्ञायामि"ति घञि, आदेशकर्तुरेव विवक्षा। तत्र च कर्तरि "पचाद्यच" इति विहितस्याचप्रत्ययस्य "इगुपधज्ञाप्रीकिरः कः" इत्यनेनाचप्रत्ययस्य बाधेऽपि न क्षतिः। करणाधिकरणयोर्ल्युट्विधानं तु "वाऽसरूपविधानेन वा घञा पुंसि सञ्ज्ञाया ल्युडपवादेन 'हलश्चे'ति सूत्रविहितेन वा नात्र। 'उपदेशेऽजनुनासिक' इत्यत्रत्य-भाष्योक्तरीत्या—

"सर्वे विधयश्छन्दसि विकल्प्यन्ते"

इति महाभाष्योक्तव्यवस्थया वा कप्रत्ययादीनां वैकल्पिकत्वाद्वा कर्तरि घञुपपादनसम्भवाद् उपक्रम प्रशासितुरेव, न तूपदेशैकगम्यस्य तत्त्वस्य, इति परमोपक्रमो नाद्वैतवादस्य ॥

22. **केवलाद्वैतम्** -- कर्तुरेव करणत्वविवक्षया प्रशासितुरत्र विवक्षापेक्षया साक्षात् कर्मणि घञ्विवक्षैव युक्ता, इति "इगुपधज्ञाप्रीकिरः कः" इति सूत्रस्य न प्रवृत्तिरेव, इति न बाधकल्पनाऽवश्यका। अन्यथा "करणा-धिकरणयोश्चे"ति विहितस्य ल्युटः कथं वा वारणम्? वासरूपविधिस्तु स्त्र्यधि-कारात्प्रागेव, इति नात्रावकाशते, येन ल्युटो बाधः स्यात्। बाहुलकत्वाद् व्यवस्था त्वगतिकगतिर्नात्र सत्यां गतौ सम्भवति। एतेन—"सर्वे विधयश्छन्दसि विकल्प्यन्ते" इति व्यवस्थाऽपि—परास्ता; तथा वैकल्पिकविधानस्याप्यगतिक-गतित्वात्। पुंसि संज्ञायामनुवृत्त्या 'हलश्चे'ति सूत्रेण घञ्विधानं त्वत्रादेशपद-स्यासञ्ज्ञात्वान्न प्रवर्तते। अतः परमोपक्रमो न कर्तुः प्रशासितुः, किन्तु कस्यचन तत्त्वस्योपदेशैकगम्यस्यैव, इति—"सदेव सोम्येदमि"त्ययमेवोपक्रमः। स चाद्वितीयं तत्त्वं विषयीकरोति, इति न परमोपक्रमोऽद्वैतविरोधी, किन्तु तस्यैवानुगुणः ॥

## ।। अनेन जीवेनेतिवाक्यार्थः ।।

23. **विशिष्टाद्वैतम्**—"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"-त्यत्रानेन जीवेनेति वाक्य जीवसमष्टिशरीरकं ब्रह्म सर्वत्रानुप्रवेशे नामरूपव्याकरणे च कर्तृ, इति प्रतिपादयति, नतु जीवब्रह्माभेदम्। न च जीवात्मना प्रवेश, नामरूपव्याकरणं च ब्रह्मण संभवति; जीवस्य तत्राकर्तृत्वात्। सहयोगतृतीया तु सत्या कारकविभक्तौ न प्रसरति। नामरूपव्याकरणे जीवस्य साधकत्वाभावाद् न करणतृतीयाऽपि, इति तेन परामर्श सर्वशरीरकस्य परमात्मन एव, नाद्वितीयस्य तत्त्वस्य; शरीरवाचकाना पदाना शरीरिपर्यन्तत्वं हि मुख्यम्। चिदचित्पदाना तत्र जीवाभिमान्यन्तर्यामिपरत्वेऽपि निष्कर्षकविधया तत्तन्मात्रदृष्ट्या तत्र तत्र प्रयोगो न विरुध्यते। तत्र च प्रकरणादिना व्यवस्था। विशेषणवाचकस्यापि विशिष्टपरत्वसम्भवे तत्र शरीरपरत्वं भाक्तं विशदं प्रतीयते। तत्र जीवादिपरत्वं त्वविशदम्। परन्तु मुख्यम्। अनुगतसंस्थानं विशदं व्यञ्जयति व्यक्तिम्। देवमनुष्यादिशब्दाना मनुष्यादिसस्थानपराणा तत्तज्जीवादिपरत्वमपि स्वीक्रियते मतान्तरेऽपि। तत् कुत ? यदि तयोरभेदात्, तर्हि कथमुभयोर्विविक्ततया ग्रहणम् ? यदि तादात्म्यं कल्पितं भेदघटितमपि, तर्हि कथं तयोर्विरुद्धयोरेकत्र भानम् ? यद्येकस्य मिथ्यात्वेन, तर्हि तत्कल्पनाया प्रमाणाभावात् प्रधानाप्रधानभावेन तयोरविरोध, इत्यपृथक्सिद्धत्वमेव तादात्म्यापरपर्यायं तत्र सम्बन्ध इति स्वीकरणमेव वरम्। तत्र चाप्रधानभेदमादाय विशदं प्रवृत्तं शरीरवाचकपदं शरीरिपरमिति पक्ष एव श्रेयान्, इति जीवपदेन व्यक्तीकृतस्यैवात्मनः आत्मनेतिपदेनापि स्पष्टीकरणं न दोषायेति नात्मपदवैयर्थ्यादि ॥

23. **केवलाद्वैतम्**—"अनेन जीवेनात्मनाऽनुप्रविश्ये"ति वाक्यं ब्रह्मणः स्वस्वरूपजीवात्मना सर्वत्र प्रवेशं बोधयति। तेन च ब्रह्म वस्तुगत्या संविन्मात्ररूपेण जीवाभिन्नम्। जीवत्वं तु तत्रानुप्रवेशप्रयुक्तम्। तथाच सर्वत्रानुप्रविष्टोऽपि जीवात्मा परमार्थदृष्ट्या ब्रह्माभिन्न इत्येवात्र वाक्यार्थः। जीवसमष्टिशरीरकस्यैवानुप्रवेशकर्तृत्वमिति तु बाधितम्; सर्वत्र परमात्मन इव जीवस्यापि विशेषणस्य प्रवेशात्। तृतीयाया अनन्वयस्त्वपरं तत्र दूषणम्। जीवपदस्य जीवशरीरकपरमात्मपरत्वे तत्रात्मनेति पदं वितथम्। आत्मपदमहिम्नैव जीवस्य शरीरत्वं ज्ञाप्यत इति तु न युक्तम्। तथासति ह्यात्मनापदेन शरीरिपरेणैवेष्टसिद्ध्या जीवेनेति वितथम्, चिदचिच्छरीरकस्य ब्रह्मणोऽत्र प्रकरणमिति तु सद्विद्यायामचिच्छरीरकस्याप्रस्तावान्न युक्तम्। सत्पदं तु—

नात्र सर्वशरीरकस्य बोधकम्। यथा च शरीरलक्षणं न सौषुप्तमृतदेहादि-व्यापकम्, तथाऽत्रैव व्यक्तं निबन्धान्ते। न वा तत्रापृथक्सिद्धिः सम्बन्धोऽपि। यदि स सयोगविशेष:, तर्हि न तेन सामानाधिकरण्य-निर्वाहः। अत्यन्ताभेदेऽपि घटो घट इति न सामानाधिकरण्यम्। भेदा-भेदयोस्त्वेकस्य कल्पनां विना न सबन्धत्वम्। यथा च शरीरादीनामात्मना न भेदग्रहः, तथाऽध्यासभाष्ये व्यक्तम्। तत्र च परमात्मनो जीवात्मनाऽभेद· परमार्थत इत्यात्मनेति पदम्, भेदस्तु कल्पनयेति मत्वा जीवेनेति पदमित्य-द्वैतमते सर्वं सुस्थम्। अतोऽनेन जीवेनेति परामर्शोऽद्वैतानुगुण एव॥

शरीरवाचकानां पदानां शरीरिपर्यन्ततावादोऽप्यत एव व्याख्यातः। तत्र हि "अथातो ब्रह्मजिज्ञासे"त्यत्र प्रथमं विशेष्यमात्रस्य जिज्ञास्यत्वप्रतिज्ञा व्याहता। ब्रह्मपदस्य चिदचिद्विशिष्टपरत्वं तु न परमतरीत्याऽपि। शरीरवाचकस्य शरीरिपर्यन्तत्ववद् आत्मपदस्य न शरीरविशिष्टपरत्वम्। "अधीहि भगवो ब्रह्मे"त्यत्र ब्रह्मपदेन सूक्ष्मचिद्विशिष्टस्योपस्थापने न किमपि प्रमाणम्। सत्यं ज्ञानमिति तु न विशिष्टपरम; अन्यथा विशिष्टपरिणामितायास्तद्विकारि-तायाश्च न्यायसिद्धाञ्जनोक्तरीत्या स्वीकारात् सत्यत्वज्ञानत्वादिकं बाधितम॥

स्वरूपज्ञानस्य हि धर्मभूतज्ञानाद्याश्रयत्वं परमते। न च विशिष्टं स्वरूपं ज्ञानाश्रयम्। एतेन जीवात्मस्वरूपमपि व्याख्यातम्; तत्रापि विशिष्टस्यैवाह-मर्थत्वम्, इत्यहमर्थ आत्मानात्मशबलित स्वरूपमित्यद्वैत एव पर्यवसानम्। आनन्दमयाधिकरण आनन्दमयस्य जीवपरत्वपक्षेऽपि तस्य शरीरवाचकाना शरीरिपर्यन्तत्वनयेन परमात्मपरत्वस्यैव सिद्ध्या किं प्रयोजनं तेनाधिकरणेन? आनन्दमयपदस्य, आकाशप्राणज्योतिरादिपदानां च प्रथमप्रथमतृतीयपाद-विषयवाक्यघटकानामपि तदन्तर्यामिपरत्वस्यैव मुख्यत्वात्, अन्तर्यामिणश्च सर्वत्रैक्याच्च कथं तत्र रूढ्या भूताकाशादिपरत्वमादायोत्थितिरपि पूर्वपक्षस्य? शरीरी हि जीवात्मा, अभिमानिदेवता, अन्तर्यामी वेति स्थिते किं वा नियामकम्—जीवाभिमान्यादिपरतायां तत्र तत्र। यदाऽन्तर्यामिपरत्वम्, तदा

जीवात्मादौ गौणत्वमिति विवक्षायान्तु शरीरिण्यपि जीवाभिमानिदेवतायां गौणत्वाद् जीवात्माऽन्तर्यामिपरत्वमात्रं कथं मुख्यम्? आपेक्षिकशरीरमपेक्ष्य जीवाभिमानिपरत्वविवक्षायां तु जीवविशेषणदेवमनुष्यादिशब्दानां न परमात्म-शरीरत्वम्। तच्छरीरत्वे तु न जीवशरीरत्वम्। उभयशरीरत्वं त्वेकस्य व्याहतम्। अन्तर्यामिब्राह्मणस्य, यत्र प्राणादीनामपि शरीरत्वमाम्नायते, तत्र शरीर-पदमुपाधिमात्रपरमिति भाष्यानुसारेण निबन्धमध्य एव विस्तरेण विवेचितम् ॥

यत्तु—आनन्दमयाधिकरणे जीवे समन्वय इति निर्देशो जीवस्य ब्रह्मात्मकत्वं दर्शयतीति भाष्यम्, तन्न, उक्तरीत्याऽऽत्मशब्दस्य मयेत्यर्था-संभवात्, अहंपदेनैव प्रत्यक्त्वस्य लब्धत्वेन मयेत्यस्य व्यर्थत्वात्, अहम्, अनेन मया प्रविश्य व्याकरवाणीत्युन्मत्तवचनतुल्यत्वापत्तेश्च ॥

यदपि—मदात्मकजीवेनात्मतयाऽनुप्रविश्ये'ति भाष्यम्, तदपि न, श्रुतस्य आत्मनेत्यस्यात्मतयेत्यर्थे धर्मे लक्षणापत्तेः, जीवे मदात्मकत्वस्यालाभात्।

यत्तु—जिज्ञासासूत्रे भाष्ये, वेदार्थनिर्णये च "ऐतदात्म्यमिदं सर्वमि"ति चेतनाचेतनोद्देशेन ब्रह्मात्मकत्वमुपदिश्य तत्त्वमसीति जीवविशेष उपसंहृतमित्युक्तम्, तत्रेदं वक्तव्यम् ॥

## ॥ तत्त्वमसिमहावाक्यार्थसंग्रहः ॥*

24. **केवलाद्वैतम्**—एतेन तत्वमसिमहावाक्यार्थोऽपि व्याख्यातः। तत्र परमते प्रधानं दूषणम्—तत्त्वमसीत्यत्र मध्यमपुरुषानुपपत्तिः। तथाहि—

तत्पदेन प्रकृतं ब्रह्म जगत्कारणं सूक्ष्मचिदचिच्छरीरमुक्तम्। त्वमिति च स्वशरीरविशिष्टश्वेतकेतुजीवशरीरकं ब्रह्मैवोक्तमिति सामानाधिकरण्योपपत्ति रित्यानन्दमयसूत्रे भाषितम्। तत्र चासिपदमनन्वितम्; पदार्थैकदेशेनान्वयस्य जघन्यत्वेन शरीरे जीवे तदनन्वयात्, जीवस्य कर्तृत्वकरणत्वोभयशून्यत्वेन

* अत्राद्वैतप्रक्रियामात्रमनूद्यते, येनार्थाद् विशिष्टाद्वैतप्रक्रियाऽपि ज्ञाता स्यात्। तत्र मतद्वयेऽपि 'असि' पदसाधुत्वचर्चैव प्रधाना ॥

'अनेने'ति तृतीयाया दौर्लभ्याच्च । जीवशरीरकस्य परात्त्वाभावेन विशेष्ये ब्रह्मण्यप्यन्वयात् ॥

किंच आत्मशब्द आधेयत्व विधेयत्व-शेषत्वरूपधर्मत्रयात्मकशरीरत्व-प्रतियोग्याधारत्व-नियन्तृत्व-शेषित्वरूपशरीरित्वपर इति पराभ्युपगमः । अत एव "आत्मन आकाशस्संभूत" इत्युपक्रमस्थात्मशब्दबलादेवाकाशाद्यन्नमयान्तानि प्रति ब्रह्मणश्शारीरात्मत्व सिद्धं कृत्वा, प्राणमयेऽपि "तस्यैष एव शारीर आत्मा, यः पूर्वस्ये"ति ब्रह्मैव शारीर आत्मेति व्याख्यातम् । तच्च प्रकृतदेवता-परामर्शिनाऽहंपदेन ब्रह्मणो जीवरूपशरीरस्य तच्छरीरिणश्च लाभादधिकार्था-भावादनुपपन्नम् ॥

यद्यपि परमते प्रथमसूत्रे तत्त्वमसीत्यत्र उद्देश्यविधेयविभागप्रश्नस्य ऐतदात्म्यमित्यनेन प्राप्तत्वाद् नात्र किंचिदुद्दिश्य किंचिद्विधीयत इत्युत्तर-मुक्तम्; तथापि "ऐतदात्म्यमि"त्यनेन पराग्रूपेण सर्वस्यापि परब्रह्मशरीरत्वे ज्ञातेऽहं ब्रह्मशरीरम्, मच्छरीरकं ब्रह्मेति प्रत्यग्रूपेण वेदान्तविधेयाहंब्रह्मोपासन-समानाकारज्ञानं तत्त्वमसीति वाक्यप्रयुक्तमवश्यमंगीकर्तव्यम । उक्त तथैव— "तन्निष्ठस्य मोक्षोपदेशात्" इत्यत्र मुमुक्षोः श्वेतकेतोः तत्त्वमसीति सदात्म-त्वानुसन्धानोपदेश इति । एवं च प्राप्तत्वादनुवादत्वविधेयत्वासंभवेऽपि निर्देश्यगतस्वातंत्र्यपारतंत्र्यरूपोद्देश्यत्वोपादेयत्वभेदविवक्षया वचनव्यक्तिभेदो-ऽवश्यमङ्गीकरणीयः। अन्यथा "त्वं वा अहमस्मि भगव." "अहं वै त्वमसी"ति वाक्ययोः समानार्थकत्वाद् मध्यमोत्तमपुरुषौ न स्याताम्। ततश्च यस्त्वम् त्वच्छरीरकं ब्रह्म, तदेव तत्कारणरूपं ब्रह्मेति वा, यत् कारणभूतं ब्रह्म, तत् त्वच्छरीरकमिति वा वचनव्यक्तिभेदो वाच्यः, उभयथाप्यसिपदस्य वैयर्थ्यं स्पष्टमेव; परसंबोध्यस्य श्वेतकेतोर्जीवस्य कर्तृत्वाभावाद् मध्यमपुरुषो न स्यात् । युष्मच्छब्दार्थमात्रसामानाधिकरण्यविवक्षयापि मध्यमपुरुषाङ्गीकारे 'तवात्मा जानाति' 'अहं त्वं संपद्ये' 'त्वद्भवति मैत्रः' इत्यत्रापि मध्यम-पुरुषापत्तिः ॥

ननु—विकाररूपापत्तौ प्रकृतेः कर्तृत्वात्, मैत्रस्य त्वंशब्दार्थस्य गौणं युष्मदर्थत्वम्, इति गौणमुख्यन्यायेन माऽस्तु मध्यमपुरुषः। तदात्मेत्यत्र तु युष्मच्छब्दस्य लकारसामानाधिकरण्यमेव नास्ति। प्रकृते तु जीवशरीरकब्रह्मण एव मुख्यं युष्मदर्थत्वम्, सर्वेषां शब्दानां चिदचिद्विशिष्टब्रह्मण्येव शक्त्यभ्युपगमात्। ततश्च तत्सामानाधिकरण्ये मध्यमपुरुषो युक्त एवेति—चेत्, न, तथासति 'त्वं पच,' 'त्वं यजस्व,' 'त्वं म्रियस्व' इत्यादिजीवकर्तृकेषु मध्यमपुरुषो न स्यात्, ब्रह्मणो नियोगाविषयत्वात्, त्वंपदस्य जीवे भाक्तत्वेन गौणत्वात्, "चराचरव्यपाश्रयस्त्वि"ति सूत्रे सर्वेषां शब्दानां चिदचिद्विशिष्टब्रह्मपरत्वेन केवलचिदचितोर्भाक्तत्वांगीकारात् ॥

किञ्च छान्दोग्यषष्ठाध्यायोपक्रममारभ्य प्रकृतस्य ब्रह्मात्मकत्वमजानतो श्वेतकेतोर्जीवस्य ब्रह्मात्मकत्वानुसन्धानमुपदेष्टुं प्रवृत्तेऽस्मिन् वाक्ये संबोधितस्य तस्य त्वंपदेन संबोधनरूपेणानिर्देशात्, तस्य ब्रह्मविशेषणत्वात्, ब्रह्मणस्संबोध्यत्वाद् मध्यमपुरुषानुपपत्तिः। अलिङ्गस्संबोधनैकविषयश्च युष्मत्पदार्थः, तादृशार्थसामानाधिकरण्य एव मध्यमपुरुषः। अत एव 'भवान् करोती'ति नालिङ्गसंबोधनासंबोधनसाधारणार्थकभवच्छब्दप्रयोगे न मध्यमपुरुषः, इति युष्मद्युपपदे समानाधिकरणे इत्यत्र सिद्धान्तितम्। एवमन्येऽपि व्याकरणविरोधास्तत्र तत्र द्रष्टव्याः स्फुटीभविष्यन्ति ॥

## ॥ एकविज्ञानेन सर्वविज्ञानोपपत्तिः ॥

25. **विशिष्टाद्वैतम्**—जीवात्मनोऽनात्मन्यात्मबुद्ध्याऽनादिसञ्चितपुण्यपापरूपकर्मप्रवाहहेतुकसुरनराद्यात्मकचतुर्विधदेहप्रवेशकृततत्तदात्माभिमानजनितावर्जनीयभवभयविध्वननाय देहातिरिक्तज्ञानानन्दाद्यात्मकशुद्धप्रत्यगात्मस्वरूपज्ञापनाय प्रवृत्तानि तत्त्वमस्यादिमहावाक्यानि, तत्स्वरूपाणि च भिन्नानि परमार्थदशायामपि। एवंविधचिदचिदात्मकप्रपञ्चोद्भवस्थितिप्रलयससारनिवर्तनैकहेतुरसख्येयकल्याणगुणगण परमात्मा नारायण.। तद्वैभवप्रतिपादनपरा. स्तुतयस्तु तच्छक्ति-तदंश-तद्विभूति-तच्छरीरादिपरं. तत्सामानाधिकरण्येन सर्वेषा तन्नियम्यस्वभावत्वं प्रतिपादयन्ति। एकबिज्ञानेन सर्वविज्ञानं सर्वेषा कारणात्मत्वमेव परमार्थत इति दृष्टया। तेन च कारणज्ञानेन कार्यज्ञानं फलति।

कारणैक्यं हि सर्वेषु कार्येषु द्रव्यैक्यमभिप्रेत्य, न तु स्वरूपैक्यम्। ऐतदात्म्यमित्यपि तदेव बोधयति। तच्च शरीरशरीरिभावेनाप्युपपद्यते। अत एवात्रात्मपदं चेतनपरम्। सर्वत्र सस्थानैक्यं तत्तदवान्तरकारणमात्राभिप्रायेण। मूलकारणदृष्ट्या तु ब्रह्मसस्थानैकत्वम्। अत एवाकृत्यधिकरणन्यायेन शरीरवाचकाना पदानां शरीरिपर्यन्तत्वम्। इदन्तु ज्ञातशास्त्रतत्त्वाना दृष्ट्या, पामरदृष्ट्या तु तत्तच्छरीरमेव तत्तत्पदवाच्यमिति भ्रममात्रेण। अत एव श्वेतकेतोरप्यज्ञानेन प्रश्न सद्विद्याश्रीभाष्यसिद्धान्तमेवोपष्टम्भयति। तत्त्वमसिवाक्यस्याप्येवमेवाशय ॥

प्रकृतेरपीश्वरशरीरत्वात् प्रकृतिशब्दस्तदात्मभूतस्येश्वरस्य तत्प्रकारसंस्थितस्य वाचक। एवं पुरुषशब्दोऽपि तत्प्रकारसंस्थितस्येश्वरस्य वाचक, इति सर्वस्य विकारजातस्यात्मेश्वर। तत्रोपादानत्वप्रयुक्तो विकारस्तु प्रकारमात्रस्य। एवमपुरुषार्थगन्धोऽपि प्रकारस्य जीवस्यैव, न विशेष्येश्वरस्य प्रकार्यंशमात्रे नियन्तृ, सत्यसंकल्पादिक च, इति कारणावस्थ एव तदुपादानककार्यावस्थोऽपि, इति कार्यकारणयोरनन्यत्वम्। नामरूपविभागानर्हसूक्ष्मदशापन्नप्रकृतिपुरुषशरीरकं ब्रह्म कारणावस्थम्। तद्भावापत्ति प्रळय.। नामरूपविभागार्हस्थूलचिदचिद्वस्तुशरीरकं ब्रह्म कार्यावस्थम्। ब्रह्मणस्तथाविधस्थूलभावो जगत· सृष्टिरित्युच्यते। एतादृशं कार्यकारणभावामभिप्रेत्यैव सद्विद्या भार्गवी विद्या च ॥

25. **केवलाद्वैतम्**—निर्विशेषज्ञानमात्रमेव ब्रह्म। तच्च नित्यमुक्तस्वप्रकाशरूपमपि तत्त्वमस्यादिसामानाधिकरण्यावगतशुद्धसंविन्मात्रमनाद्यविद्योपादानवशादज्ञमिव बद्धमिव। परमार्थतस्तु नित्यशुद्धबुद्धमुक्तात्मस्वरूपम्। यावदविद्यमेवैशेशितव्यादिविविधविकल्पस्वरूपं जगत्। तच्च सत्तादात्म्यात, सति कल्पितत्वाद्वा सदिति प्रतीयते। परमार्थतस्तु मिथ्या। बद्धो मुक्त इति व्यवहारमात्रम्। स्थितप्रज्ञा जीवन्मुक्ता वा शास्त्रदृष्ट्या तत्त्वमिदं श्रौतमनुभूयोपदिशन्ति। शास्त्रान्तसर्वमिथ्यादिवादो भाविबाधप्रतीत्या शास्त्रसिद्ध्या। कर्मोपासनाकाण्डानामवान्तरं तत्त्वमर्थशोधनपरतया प्रामाण्यम्। तत्र कारणस्याविद्योपहितस्वरूपस्य तत्कार्यैः, तत्प्रयुक्तैर्वा सविशेषत्वे न विप्रतिपत्तिः, किन्तु तेषां पारमार्थिकत्वमात्रे, एकविज्ञानेन सर्वविज्ञानं नान्यथोपपद्यते। तत्र कारणातिरिक्तस्यापि सत्यत्वे नैकविज्ञानेन सर्वविज्ञानसभवः। अत एव निर्गुणं निरञ्जनमित्यादिश्रुतयः। तत्र तदेककारणत्वं न तदेकशरीरित्वम्। न हि तदा—"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति दृष्टा-

न्तोपपत्तिः । न हि मृत्तिकाया घटशरावादयः शरीरम् । चेतनाचेतनविषयैव व्यवस्थेति चेत्, न चेतनं ब्रह्म परमते मृदिवोपादानभूतं जगत. । न हि मृदिति सदेवेत्युपक्रमात् सर्वमूलकारणपरम्, यदात्मेति मन्यते । अत्रात्मपदं स्वरूपपरम्, तेन च तदतिरिक्तस्वरूपनिषेधः पर्यवस्यति । तेन च मूलकारण-विज्ञानेन ज्ञातव्यं नावशिष्यत इत्येव वाक्यार्थः । उक्त च—

"यज्ज्ञात्वा नेह भूयोऽन्यद् ज्ञातव्यमवशिष्यते"

इति । सूक्ष्मचिदचिद्विशिष्टज्ञानेन सर्वविज्ञानमित्यपि दृष्टान्ताननुगुणमेव । अतः सद्विद्याऽद्वैतसिद्धान्तमेव पोषयति ॥

विशिष्टयोरेव कार्यकारणभावे विशेष्यस्येव विशेषणस्यापि न विकारः, इति जगतः सृष्टिरिति वादोऽसदनुवाद एव स्यात् । विशेषणस्याप्यविकारित्वे तु विशिष्टपरिणामितायां तद्विकारितायां च पर्यवस्यति, इति विशिष्टं विकारि न पारमार्थिकं स्यात् । विशेषणविशेष्यमात्रे तु न पृथग् व्यवहारयोग्यतामपि सहेते । लोकव्यवहारमुल्लंध्य शास्त्रार्थव्यवस्था तु "य एव लौकिकाः शब्दास्त एव वैदिकाः" इति सिद्धान्तविरुद्धा । देवमनुष्यादिपदानामन्यत्रान्यपदप्रयोगस्तु विना भेदाग्रहं प्रवृत्तत्वात् सिंहो देवदत्त इत्यादिवद् नोपचारेण भवितुमर्हति, किन्तु भ्रान्त्यैव, इति देहादीनामात्मन्यध्यास एव । अतः कार्यकारणभावो ब्रह्मजगतोर्ब्रह्मणोऽविकारेण निर्वहणीयोऽद्वैतवादानुगुण एव । तत्र ह्युपाधिभूता विशेषणभूता वा प्रकृतिरुपादानम्, विकारिणी च । ब्रह्म तु विवर्तोपादानम्, अधिष्ठानं वा न कार्यात्मना विकुरुते, किन्तु तथा केवलं भाति, इति ब्रह्मणो-ऽविकारित्वं जगतो विकारित्वं सर्वमुपपद्यते । मृदादिकमपि तत्कारणाविद्यात्मनैव परिणमते, इति सर्वस्याऽऽविद्यकत्वे ब्रह्मैव सत्यम्, जगन्मिथ्येति सिद्धान्त एव पर्यवसानम् । अविद्यापरिणामित्वे हि यावदविद्यं लौकिकपारमार्थिकत्वम्, तनम्तु सर्वात्मना बाध इति सर्वमुपपद्यते ॥

## ॥ शुद्धप्रत्यगात्मैकत्वानेकत्वचर्चा ॥

26. **विशिष्टाद्वैतम्** — जीवात्मानः स्वयमसंकुचितज्ञानस्वरूपाः, कर्मानुरूपज्ञानसंकोचमापन्नाः, तत्तद्देहोचितलब्धज्ञानप्रसराः, तदनुगुणसंसारप्रवाहं प्रपन्नाः देवादिदेहभेदरहितज्ञानैकाकाराः, तेन साम्यमापन्नाः भगवच्छेषतैकरसतया भगवदात्मका भवन्ति। भगवांस्तु हेयप्रत्यनीककल्याणैकतानः सर्वनियामकः सदात्मेति शास्त्रहृदयम्। तत्र जीवात्मानो वस्तुगत्या भिन्ना अपि प्रकृतिविशेषवियुक्तात्मयाथात्म्यज्ञानवन्तः सर्वान् जीवान् समानाकारान् पश्यन्ति। तादृशं साम्यमादाय जीवानां तत्र तत्रैकत्वाम्नानम्, न तु वस्तुगत्या, इत्येकत्वं नानात्वं च न तेषां विहन्यते॥

26. **केवलाद्वैतम्**—ज्ञानस्वरूपेण शुद्धेन जीवानामेकत्वम्, भेदस्तु शरीरभेदमात्रनिबन्धन औपाधिकः। धर्मभूतं ज्ञानं नित्यं संकोचविकासार्हं वाऽऽत्मस्वरूपसमं नोरीक्रियते। तत्स्थानेऽन्तःकरणमेव संकोचविकासशाल्यद्वैतसिद्धान्ते। तत्प्रसरनिबन्धनं साम्यं न जीवात्मनाम्, किन्तु स्वरूपैक्यमेव। तत्र प्रकृतिविशेषसंयोगविभागाभ्यां जीवस्य बद्धमुक्तात्मरूपत्वम्। एकत्वनानात्वे तु स्वरूपोपाधिप्रयुक्ते। तत्रोपाधिविलये सर्वात्मनैकत्वमेव, न त्वेकत्वनानात्वे सार्वदिके। भगवानप्यसंख्येयकल्याणगुणो यावत्कारणतावस्थम्, अनन्तरं तु जीववद् ज्ञानैकरसो जीवाभिन्न एवेति शास्त्रहृदयम्॥

तत्र साधनचतुष्टयस्य ब्रह्मविचारपूर्ववृत्तत्वसंभवासंभवौ, आत्माहमर्थत्वतदनहमर्थत्ववादः, आत्मनो ज्ञातृत्वज्ञेयत्वसंभवासंभवौ, प्रपंचमिथ्यात्वसत्यत्वविचारः, संविन्मात्रजीवेश्वरस्वरूपैक्यसंभवासंभवौ, आत्मनानात्व-तदणुत्वतद्विपरीतत्वादिवादादयश्च द्वैतविशिष्टाद्वैतसाधारणाः, अद्वैतमतविरुद्धाश्च न्यायामृताद्वैतसिद्ध्योर्बहुतरव्याख्योपव्याख्यासंवलितयोर्विस्तरेण समालोचिताः। अद्वैतविशिष्टाद्वैतविप्रतिपन्ना द्वैतसिद्धान्तस्यापि प्रतिपक्षास्तु सर्वज्ञानयाथार्थ्यवादः, ब्रह्माभिन्ननिमित्तोपादानत्ववादः, पूर्वोत्तरमीमांसैक्यवादः, संकोचविकासशालिधर्मभूतज्ञाननित्यत्ववादः, विलक्षणशरीरशरीरिभावः, अपृथक्सिद्धिस्वरूपम्, तत्त्वत्रयवादोऽन्ये च केचन परमार्थप्रकाशिकासमीक्षाप्रसङ्गेन निबन्धेऽत्र तत्र तत्र विशदमुपन्यस्ताः। अयं हि निबन्धोऽद्वैतिनां पारिभाषिकाः

प्रक्रियास्तत्र तत्र यथासंभवमाब्रह्मसिद्धि, आलघुचन्द्रिकं चोपक्षिपति, येनाद्वैतसिद्धान्तप्रक्रिया सम्यगवगता स्यात्। दूषणभूषणादौ तु विचारदक्षाः पण्डितप्रवराः प्रमाणम् ॥

अत्र प्रतितन्त्रसिद्धान्तेषु नित्यसूरिसद्भावादिषु प्रधानतमौ विषयौ दार्शनिकौ शरीरशरीरिभावः, संकोचविकासशालिनित्यधर्मभूतज्ञानं च। उभयं चेदं क्रमेणास्मिन्नेव निबन्धे पृष्ठेषु*सविस्तरं समालोचि। अनादिपरम्परास्वीकृततत्तत्प्रतितन्त्रसिद्धान्तमवलम्ब्य प्रतितन्त्रान्तरनिरसनेन स्वस्वमतस्थापनं युगशतेनापि न सुकरम्, इति श्रीभाष्यशतदूषण्यादिना महासिद्धान्तोपपादनप्रसङ्गेऽद्वैतप्रतितन्त्रव्यवस्थामुल्लङ्घ्य स्वप्रतितन्त्रसिद्धान्तेन महासिद्धान्तोपपादनेन महापूर्वपक्षनिरसनमद्वैतप्रतितन्त्रव्यवस्थाविरुद्धमित्येतन्निष्कर्षणमेवाद्वैतामोदस्य लक्ष्यम् ॥

अस्मिन् प्रसङ्गेऽद्वैतमतस्थापनावसरे श्रीभाष्यप्रतितन्त्रसिद्धान्तस्यापि पदे पदे निरासोऽद्वैतामोदकाराणां यक्षानुरूपो बलिरिति न्यायमेवानुकृत्य, स्वप्रौढिमप्रकाशनमात्रं वा। परमं लक्ष्यं तु स्वप्रतितन्त्रस्थापनमेव। वस्तुतस्तु— नाद्वैतिनां प्रतितन्त्रसिद्धान्तो नाम कोऽपि। तत्तद्दर्शनप्रतितन्त्रेष्वौपनिषदसिद्धान्तपर्यवसायिनं यं कमपि प्रतितन्त्रमद्वैतिनः समाद्रियन्ते। अनिर्वचनीयख्यातिस्त्वद्वैतिनां प्रतितन्त्रसिद्धान्तः, यतः सत्ख्यातिरसत्ख्यातिरात्मख्यातिर्वा परस्परं तैस्तैर्दर्शनकारैः स्वस्वप्रतिसिद्धान्तेन निरस्यन्ते। अद्वैतिनस्तु सर्वेषां दर्शनानां भावमेकीकृत्य तदनुगुणतया वेदान्तवाक्यानि यथार्थयितुमायतन्ते ॥

न चाद्वैतमते व्यवहारे भाट्टनयोऽप्येकान्ततः, न वा सांख्यपातञ्जलादिनयोऽपि। यथासभवं सर्वेषां प्रतितन्त्राणां तत्तद्दर्शनप्रवर्तकाणां यावदुपनिषदन्वयं तत्तत्प्रतितन्त्राः समाद्रियन्ते, न तु शिवद्रोहे तात्पर्येण कोपि प्रतितन्त्रो निरस्यते। अद्वैतामोदकारा अपीमामेव नीतिमवलम्ब्याद्वैतसिद्धान्तं यथायथं निबबन्धुः ॥

---

* २८२-३२७, १९०–१९५।

विश्वसिमः—नामोदकाराणामपि, ये श्रीभाष्यस्य सव्याख्यसटिप्पणस्य सर्वदर्शनसंग्रहादिविविधनिबन्धप्रकाशनेन पण्डितकुलस्योत्तमर्णाः, श्रीभाष्य सिद्धान्तस्य दूषणं लक्ष्यम्, किन्त्वद्वैतमतोपबृंहणमेव ॥

यत्तु—तत्र तत्र स्वकपोलकल्पनजालम्, कुतस्ते बुद्ध्यारूढ भवति, कोऽयं रामानुजीयः पन्था इत्येवमादि तेषां लेखनम्, तत् सर्वमन्येषां केषाञ्चन तत्तत्कालीनानां लेखनसरणिमनुसृत्य ? किं बहुना ? भगवद्रामानुजोऽपि भगवत्पादान् पदवाक्यप्रमाणानभिज्ञान् भाषते । अन्ये च बहव. परमार्थप्रकाशिकाकारपर्यन्तमद्वैतिनः कुदृष्टीन् व्यपदिशन्ति ॥

परमार्थतस्तु—आमोदकाराः, किं बहुना ? सर्वेऽपि—ईषदप्यवान्तरक्षोभमविधाय सौहार्दमाश्रित्यैकरस्येन लोकयात्रां निर्वोढु सर्वतो बद्धपरिकरा विविधग्रन्थविमर्शनमात्रपराः, विना वृथाऽभिनिवेशं वैयक्तिकविद्वेषं च 'न गृहीतमात्रे विश्रममाकलय्य तूष्णीमेव स्थित्वा तत्त्वसरणौ जडीभवितव्यम्' इति सुदृढं विनिश्चिन्वाना एव तत्त्वानुबन्धिनमर्थं प्रबबन्धु, प्रबध्नीम· । नात्र मात्रयाऽपि सौहार्दस्य चिरन्तनस्य लोपः, ग्लानिर्वाऽऽशाम्यते, प्रत्युत वर्धतैव सौहार्दातिशयस्तदीयभूमिकायां परमार्थप्रकाशिकोक्तरीत्या ॥

द्वैतविशिष्टाद्वैतपरस्परविमर्शनपद्धतिर्जयतीर्थीयन्यायसुधायां पञ्चीकरणप्रक्रियया सर्वज्ञानयाथार्थ्य-ब्रह्मोपादानत्वादिविषयेषु केषुचनांशेष्वङ्कुरिता, न्यायसुधापरिमलादावभिवृद्धा महाचार्याणां पाराशर्यविजयपर्यन्तम्—अधिकरणप्रस्थानमधिकृत्य, तदनन्तरं तु प्रायेण सा विचारपरम्पराऽस्तं गतेव ॥

वादप्रस्थानं तु वेदान्तदेशिकानारभ्याङ्कुरिताऽपि केनापि कारणेन तदीयान्तिमचतुस्त्रिंशद्वादानां विलयेऽपि सुरपुरं श्रीवेङ्कटाचार्यद्वारोज्जीवितमपि तदीयस्यापि निबन्धस्य कुत्राप्यलाभेन नाममात्रावशेषमिव ॥

विश्वसिमः—"परैस्तु कलहे प्राप्ते वयं पञ्चोत्तरं शतमि"ति न्यायेन श्रीव्यासतीर्थपादकालमारभ्योभयोरपि द्वैतविशिष्टाद्वैतपक्षयोरद्वैत-

सिद्धान्तेन विवादपरम्परायामेव विशिष्टा दृष्टिरासीत्। ततश्च लघुचन्द्रिकान्ताद्वैतसिद्धान्तनिरसनमात्रे न्यायभास्करकाराणाम्, सहस्रकिरणीकाराणां च दृष्टिराकृष्टा, यस्यापि निरसनेनाद्वैतसिद्धान्तमेव साधु व्यवस्थापयितुं पूज्यश्रीत्र्यम्बकशास्त्रिणाम्, परमश्रद्धास्पदश्रीत्यागराजमखीन्द्रादीनां च न्यायेन्दुशेखरन्यायभास्करखण्डनादीनामस्मत्परमविद्यागुरूणाम्, विद्यागुरूणां महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिपादानामन्येषां चाविर्भावः, येषु केचन मुद्रिताः, केचन मुद्राप्यन्ते। केवलाद्वैतविशिष्टाद्वैतपरस्परया विमर्शपद्धतिर्बहोः कालात् प्रायेणास्तं गतेव, परन्तु सा महामहोपाध्यायकपिस्थलश्रीदेशिकाचार्यस्वामिना व्याससिद्धान्तमार्ताण्डाभिधग्रन्थग्रथनेन कथञ्चनोज्ज्वालिता, यस्य समालोचनसौभाग्यं विधेयस्यास्यावसरमलभताद्वैतमार्तण्डाख्यनिबन्धेन ॥

ततस्तु—तपस्विप्रवरविपर्यैकदृष्टिपरनिन्दासुदूरदृष्टिकोलियालंस्वामिपादा विविधनिबन्धद्वारा तां पद्धतिं सर्वतः प्रसरां प्रस्थापयामासुः, विशिष्य च परपक्षनिराकृतिनाम्ना निबन्धेन, यद्विमर्शनाख्योऽपि निबन्धो भागद्वयात्मको वेदान्तरक्षामणिनामा विधेयेनानेन निबध्य बहिरवातारि, यस्य विमर्शनानुविमर्शनक्रमेण कञ्चन कालमारभ्य विचारपरम्परा तत्र तत्र क्रमते ॥

तदनु—आनन्दाश्रममुद्रापिताद्वैतामोदपरीक्षारूपो निबन्धः परमार्थप्रकाशिकानामाऽस्मत्सुहृद्वराभिनवदेशिकादिबिरुदभूषितोत्तमूरश्रीवीरराघवाचार्यस्वामिनः पूर्वनिर्दिष्टतपस्विप्रवरकोलियालंस्वामिचरणचरणकैङ्कर्यमेव स्वकुलधनं मन्वानस्य तदाज्ञया निबद्धो निबन्धविशेषः, परमार्थप्रकशिका नाम, यस्य परीक्षारूपोऽप्ययं निबन्धः। विश्वस्यतेऽत्रापि निबन्धे सर्वात्मना परनिन्दां विहाय विषयमात्रपरीक्षादृष्टिरेव नीतिरवलम्बिता। लक्ष्यं तु परमस्य गृहीतमात्रे विश्रममाकलय्य तूष्णीं स्थित्वा तत्त्वानुसन्धानसरणौ न जडीभवितव्यमेव," इति तत्त्वानुबन्धिनोऽर्थस्य विचारविनिमयदृष्ट्या यथाशक्ति समालोचनेन स्वबुद्धिविकासनमेव॥

विशिष्टाद्वैतप्रतितन्त्रसिद्धान्तभेदान् कांश्चनाधिकृत्य केवलाद्वैतिनां विचारधारा तु १८ दशशतकमारभ्य विशिष्टाद्वैतभञ्जनादिनिबन्धमारभ्या-

ङ्कुरिता, तथापि तेषां निबन्धानामप्रकाशनेनाद्य यावत् साऽप्युत्पन्नविनष्टेव। प्रकृतो निबन्धस्तु ततोऽपि कांश्चनांशानुद्धृत्य स्वीयं वक्तव्यमुपबृंहयति स्वबुद्धि-विकासमात्रं लक्ष्यं मत्वा। विश्वस्यते विचारविनिमयमात्रदृष्ट्या श्रीभाष्यलघु-महापूर्वपक्ष-सिद्धान्तोपष्टब्धतत्तत्प्रतितन्त्रसिद्धान्तानां सम्यग् विमर्शनेन, परीक्षया वा तत्तत्सिद्धान्तानुसारिणः पण्डितप्रवरा आत्मानं कृतार्थयिष्यन्तीति ॥

न हि सांप्रतिकानां तत्त्वबुभुत्सूना तत्तद्बुद्धितारतम्यबलमात्रेण प्रतिभान्तः प्रकाश्यमाना उच्चावचाः सिद्धान्तार्थभेदा मात्रयाऽपि पूर्वाचार्य-प्रवर्तितसंप्रदायमन्यथयितुमीशते, इति स्वस्वसंप्रदायरक्षणमेव सांप्रतिकाना तत्त्वबुभुत्सूनां लक्ष्यम्। न हि सांप्रतिकाः, अवतारपुरुषाः पूर्वाचार्या इव प्रभवन्ति सप्रदायविशेष प्रवर्तयितुम्, निवर्तयितुं वा। निबन्धेऽत्रानया नीत्या निबद्धे साध्वसाधुविवेकविचक्षणास्तु पण्डितप्रवराः ॥

एतन्निबन्धप्रकाशने यथासंभवं विशिष्टसाहाय्यमाचरितवतां श्री-पि. एस्. सुब्रह्मण्यार्याणां सुसुहृदाम्, श्रीमतां भगवत्पादकैङ्कर्यमेव कुलधनं मन्वानानां ए. के. लक्ष्मणार्यमहोदयानाम्, जयंमुद्रणालयाध्यक्षाणां श्रीमतां मण्यार्यवर्याणाम्, के. एम् सुब्रह्मण्यार्यवर्याणाम्, स्वनामधन्यवाचस्पतिमिश्रकुल-भूषणानां श्रीहरिगोविन्दमिश्राणामन्येषां चाहमधमर्णः। एतन्निबन्धसंस्करणेऽपि शतभूषणीसम्करण इव संशोधनविषये महान्तमुपकारमाचरितवतां पण्डित-प्रवरश्रीरामकृष्णशास्त्रिणां चाहमाजीवमधमर्णः ॥

त्यागरायपुरम,
मद्रास्.
१६—६—५८.

इति सुधीजनविधेयः
अनन्तकृष्णशर्मा

## ॥ अद्वैततत्त्वशुद्धिविषयानुक्रमणिका ॥

| विषयाः | पृष्ठ-संख्या |
| --- | --- |

| विषयाः | पृष्ठ-संख्या |
|---|---|
| अपेक्षामात्रेण शास्त्रैक्य आस्तिकनास्तिकसर्वदर्शनैक्यापत्तिः ॥ | १३२ |
| घटब्रह्मसाक्षात्कारयोर्विशेषः, श्रवणाङ्गित्वपक्षे शाब्दापरोक्षवादोपपत्तिश्च ॥ | १३४ |
| रज्जुतत्वब्रह्मसाक्षात्कारयोर्विशेषः ॥ | १३६ |
| रज्जुतत्त्वज्ञानेनापि प्रथमेनाप्रामाण्यज्ञानास्कन्दितेन नाज्ञाननिवृत्तिरिति प्रामाण्यनिश्चयार्थं सर्वत्र मननाद्यपेक्षा ॥ जीवन्मुक्तानां भूमिकाभेदेन व्यवहारभेदादिकम् ॥ | " |
| प्रथमभ्रमबाधात्पूर्वं तत्रैव रजतभ्रमान्तरेऽप्यनिर्वचनीयरजतान्तरमेव भातुमर्हति, न तु पूर्वोत्पन्नमेव ॥ | १३९ |
| "आत्मा वा अरे द्रष्टव्य" इत्यत्र दर्शनं साक्षात्कार एव, न तु दर्शनसमानाकारा ध्रुवानुस्मृतिः, तस्या मोक्षसाधनत्वायोगात् ॥ | १४२ |
| "यमेवैष वृणुते" इति श्रुत्यर्थविचारः ॥ | १४५ |
| कर्मोपासनयोस्समुच्चयेऽपि न ज्ञानकर्मणोः समुच्चयः ॥ | १४९ |
| सविशेषनिर्विशेषवाक्ययोः सामान्यविशेषन्यायाद्यनुसारेणाविरोधायोगः ॥ | १५१ |
| ब्रह्मणः सर्वात्मत्वम्=तद्व्यतिरेकेण सर्वाभावः ॥ | १५३ |
| सद्विद्यायास्तत्रैव तात्पर्यम् ॥ | १५५ |
| "स एको ब्रह्मण आनन्दः" इत्यत्र ब्रह्मपदार्थो न परमोपक्रान्त ब्रह्मस्वरूपम् ॥ | १४६ |
| "यतो वाचो निवर्तन्ते" इति निर्विशेषानन्दस्वरूपपरम्, न तु सगुणपरम् ॥ | १४७ |
| निर्गुणवाक्यापेक्षितनिषेध्यसमर्पकतया सगुणवाक्यानामुपयोगः ॥ | १५८ |
| विशेषाभावेन निर्विशेषत्वविरोधशङ्कानिरासः ॥ | १६० |



# ॥ अद्वैततत्त्वशुद्धिः ॥

## ॥ अद्वैतामोदादिपरीक्षा ॥

### ॥ प्रमाणपरिच्छेदः ॥

### ॥ तत्र प्रत्यक्षप्रमाणम् ॥

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाः। तत्रार्थकामयोः पुरुषार्थत्वं धर्माविरोधेन, न स्वतः। उक्तं च भगवता—"धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ।" इति। तत्राद्यास्त्रयो न नित्याः; जन्यत्वात्, स्वर्गे नित्यत्वाम्नानमाभूतसंप्लवस्थायित्वेन । तथाचोक्तम्—"आभूतसंप्लवस्थानममृतत्वं हि कथ्यते।" इति। नित्यस्तु पुरुषार्थो मोक्षो नाम। स च वेदान्तमतेषु भिन्नभिन्नरूपः॥

तत्र केचन वैकुण्ठादिलोकावाप्त्या भगवता भोगसाम्यं मोक्षः—इति वदन्ति। अद्वैतिनस्तु—निर्विशेषब्रह्मभाव एव मुक्तिः—इति। व्यक्तीकरिष्यते चेदं प्रयोजनपरिच्छेदे। तत्साधनं तु साधनपरिच्छेदे, विषयपरिच्छेदे तु जीवेश्वरादिस्वरूपं बद्ध-मुक्त-साधारणम्। प्रथमं तु तत्र सर्वमूलत्वात् प्रमाणपरिच्छेदः प्रवर्तते। तत्राद्वैतसिद्धान्ते व्यवहारे भाट्टनयेन षट् प्रमाणानि—प्रत्यक्षानुमानोप-

मानागमार्थापत्त्यनुपलब्धिरूपाणि फलभेदं प्रतीयमानमादाय। फलाभेदे तु प्रत्यक्षानुमानागमैरपि निर्वाहात्, न नामभेदमात्र आग्रहः। तत्र सर्वेषां प्रमाणानां यथासंभवमद्वैतसिद्ध्यन्तरङ्गोपाये द्वितीयमिथ्यात्वे, साक्षाद्ब्रह्मस्वरूपनिर्णये चोपयोगः॥

तत्र प्रत्यक्षप्रमा शब्दजन्यापि भ्रमबाधिका, बाधस्वरूपानुपलब्धिर्वा फलतः प्रत्यक्षप्रमा साक्षाद् द्वितीयमिथ्यात्वं व्यञ्जयति। एवमनुमानम्, अर्थापत्तिश्च। शब्दस्तु साक्षान्निर्विशेषं ब्रह्मापि सविशेषमिव बोधयन् साक्षात् ब्रह्मस्वरूपे, तथा द्वितीयमिथ्यात्वे च प्रमाणम्। उपमानफलं तु साम्यमिव वैधर्म्यमपि। तेन च द्वितीयस्य ब्रह्मविलक्षणत्वव्यञ्जनद्वारा सद्विविक्तत्वरूपं मिथ्यात्वं व्यज्यते। एवमद्वैतासाधारणे द्वितीयमिथ्यात्वे, ब्रह्मनिर्विशेषत्वे च यथासंभवं सर्वाणि प्रमाणान्युपयुज्यन्ते। न केवलमत्रैव, किन्त्वद्वैतिनामसाधारणेऽज्ञाने भावरूपेऽपि तान्युपयुज्यन्ते, इति यथासभवं प्रमाणानामुपयोगः॥

तत्रानधिगताबाधितार्थविषयकं ज्ञानं प्रमा, तत्करणं प्रमाणमिति सामान्यतः प्रमा-तत्करणस्वरूपम्। तत्र तद्वति तत्प्रकारकज्ञानत्वं प्रमात्वमिति भ्रमप्रमासाधारणं प्रामाण्यम्। अनधिगताबाधितार्थविषयकज्ञानत्वं तु प्रमाऽसाधारणं प्रामाण्यम्। तेन च नानिर्वचनीयख्यातिविरोधः। मिथ्यात्वेनानिश्चीयमानार्थ-विषयकज्ञानत्वम्, तद्वति तत्प्रकारकज्ञानत्व वा स्वतोग्राह्यं प्रमात्वमिति तु विवेकः। तेन च वेदान्तपरिभाषायाम्—अनधिगताबाधितार्थविषयकज्ञानत्वं प्रामाण्यमिति प्रामाण्यं प्रथमतो निरूप्य, स्वतः प्रामाण्यवादे—"तद्वति तत्प्रकारकज्ञानत्वं प्रामाण्यमित्युपपादनं न विरुध्यते॥

तत्र प्रत्यक्षप्रमाकरणं प्रत्यक्षप्रमाणम्। प्रत्यक्षप्रमा च पञ्चविधा—(१) चैतन्यमात्रम्, (२) अबाधितविषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यम्, (३) प्रमातृचैतन्याभिन्नाबाधितविषयत्वम्, (४) जीवसाक्षी (५) ईश्वरसाक्षी चेति। तत्र चैतन्यस्वरूपं प्रमात्वं सर्वसाधारणम्। अन्यत् सर्वं तत्तदसाधारणम्।

तत्राद्यम्, तुरीय-पञ्चमे च नित्ये, द्वितीय-तृतीये प्रमात्वे तु प्रमाणजन्यवृत्त्यपेक्षत्वात् प्रमाणजन्ये, न नित्ये ॥

तत्र घटादिज्ञाने, तदाकारवृत्त्यवच्छिन्ने घटदेशेऽन्तःकरणसंयोगवशात् घट-तदाकारवृत्त्योरेकदेशस्थत्वेन तदवच्छिन्नचैतन्यस्य तदाकारवृत्त्यवच्छिन्नचैतन्यस्य च भेदाभावादभेदोपचाराल्लक्षणसमन्वयः। अत्र वृत्त्यवच्छिन्नेत्यत्र वृत्ति-तदवच्छिन्नान्यतरस्य ग्रहणात् ब्रह्मज्ञाने तदाकारवृत्तिमात्रे प्रमाणजन्ये लक्षणसमन्वयः। एतेन—विषयप्रत्यक्षत्वमपि—व्याख्यातम्; प्रमातृचैतन्यपदेन साक्षिचैतन्यस्य विवक्षणाद् ब्रह्मणश्च साक्ष्यभेदाल्लक्षणसमन्वयः ॥

एतेन[1]—द्विविधस्य प्रत्यक्षप्रमाणलक्षणस्य ब्रह्मज्ञाने ब्रह्मणि चाव्याप्तिशङ्का—परास्ता।

यत्तु—वृत्त्यवच्छिन्नचैतन्यस्य यदवच्छिन्नचैतन्याभेदाद् ज्ञानप्रत्यक्षत्वम्, तस्य विषयस्यैव प्रत्यक्षत्वं विषयप्रत्यक्षत्वमित्येकप्रकारस्यैव सुवचत्वात् प्रमातृचैतन्याभेदो विषयप्रत्यक्षत्वमिति विभागः कुतः? ज्ञानप्रत्यक्षत्वे वा प्रमातृचैतन्यस्यैव विषयावच्छिन्नचैतन्याभेदः कुतो नोच्यते? विषयव्यापिविषयाकारवृत्त्यवच्छिन्नमित्येतावताऽलम्, इति विषयावच्छिन्नचैतन्याभेदकल्पनमपि मुधा, अविद्याप्रतिबिम्बजीववादे चान्तःकरणवृत्त्यवच्छिन्नचैतन्यमादाय जीवस्य प्रमातृत्वं दुर्घटम्। चैतन्यात्मकस्य जीवस्य सर्वव्यापित्वेन स्वत एव घटसंबन्धाद् घटावभासः स्यात्। अन्तःकरणवृत्तिश्च किमर्था? न चान्तःकरणवृत्तिः स्वच्छा घटस्य जडस्य स्वच्छतामापादयति। ततश्च घटः स्वावच्छिन्नं चैतन्यमभिव्यनक्तीति तस्य चैतन्यस्य घटावभासकत्वमिति—वाच्यम्, घटस्य चैतन्याभिव्यञ्जकत्वेऽन्तःकरणस्येव घटस्यापि चेतनत्वेन प्रतीत्यापत्तिः— इति ॥

तत्र विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यत्वं ज्ञानप्रत्यक्षत्वमिति स्थाने प्रमातृचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यं ज्ञानप्रत्यक्षमिति न युक्तम्; परोक्षज्ञानातिव्यापकत्वात्। अविद्याप्रतिबिम्बो जीव इति पक्षेऽप्यन्तःकरणोपहितत्वेनैव जीवस्य साक्षित्वम्, इत्यन्तःकरणवृत्तिं विना घटादेः प्रमाण-

1. अत्र सर्वत्र एतेन—शंका—परास्तेति परमार्थप्रकाशिकाशंका विवक्ष्यते ॥

चैतन्याभेदस्य बाधितत्वात् विषयस्य प्रमातृचैतन्याभेदाभिव्यक्त्यर्थमन्तःकरण-वृत्तिर्नियतेत्यद्वैतिनां प्रक्रिया तत्र तत्राद्वैतनिबन्धेषु विशदा। अतः प्रमातृचैतन्याभेद एव विषयस्य प्रत्यक्षत्वमिति वक्तव्यम्। वृत्त्यवच्छिन्नचैतन्या-भिन्नविषयत्वस्यैव विषयप्रत्यक्षत्वे तु घटमहं जानामीति त्रिपुटीभानस्य त्रितय-प्रत्यक्षरूपस्य न निर्वाहः। अत एव विषयस्य प्रत्यक्षत्वं सविदभेदादिति पूर्वाचार्याः। सवित्पदार्थश्चात्र प्रमातृचैतन्यमिति तदीयं विवरणम्॥

एतेन—विषयव्यापित्वमात्रं वृत्तेरास्ताम्, किमिति तत्रावच्छिन्नचैत-न्याभेदकल्पनमिति—परास्तम्॥

विषयव्यापित्वं च यदि स्वविषयविषयकत्वम्, तर्हि परोक्षज्ञानेऽति व्यापकम्। यदि तु संयोगमात्रम्, तर्हि वृत्तिनिर्गमो दुर्निवारः॥

तत्र वृत्तेरज्ञाननिवर्तकत्वं तत्र चैतन्यप्रतिफलनेन; चैतन्यस्यैवाज्ञान-विषयत्वादिति चैतन्यावच्छेदकत्वेनैव घटादेः प्रत्यक्षत्वात् तत्रावच्छिन्नचैतन्या-भेदव्यवस्था, इति विषयावच्छिन्नचैतन्याश्रितमज्ञानं तदाकारवृत्त्यवच्छिन्नचैतन्या-भेदं विना कथम्? घटतदाकारवृत्त्योरेकदेशस्थत्वेन हि घटावच्छिन्नचैतन्यगत-मावरणम्, अज्ञानविषयत्वं वा निवर्तते। अन्तःकरणवृत्तिर्हि स्वच्छा घटा-वच्छिन्नचैतन्यमनावृतयति, स्वच्छयति वा। वृत्त्युपहितो घटस्तु स्वच्छचैतन्या-वच्छेदकत्वमात्रेण स्वच्छवदेव। ततश्च वृत्तिरेव चैतन्यं स्वच्छयति, न घटः, इति कथं घटस्यापि चेतनत्वापत्तिः? यथा चान्तःकरणवृत्तिनिर्गमाभावे प्रत्यक्षत्वपरोक्षत्वादिविवेकानुपपत्तिः, तथाऽभेदाभिव्यक्त्यर्था वृत्तिः, चिदुपरागार्था वृत्तिः, आवरणाभिभावार्था वेत्यत्र तत्र तत्र प्रकरणग्रन्थेषु विस्तृतम्॥

वृत्तिनिर्गमो नामान्तःकरणस्य विकासमात्रम्—विषयदेशसम्बद्धविक-सितान्तःकरणभागविशेष एव। अत एव घटादीनामन्तःकरणावच्छिन्नचैतन्य-रूपप्रमातृचैतन्याभेदः, अन्यथा वृत्त्यन्तःकरणयोर्भिन्नदेशस्थत्वात् कथं प्रमातृ-चैतन्याभेदेन विषयप्रत्यक्षत्वम्? अधिकं न्यायरत्नावल्यादौ। नचायमनुभवा-

गोचरः। कथमन्यथा परमार्थप्रकाशिकामते विषयप्रत्यक्षत्वनिर्वाहः। यदि स धर्मभूतज्ञानविकासेन, तर्हि किमयं सर्वजनानुभवगोचरः? धर्मभूतज्ञानसंकोचविकासकथा हि श्रीभाष्यसिद्धान्तासाधारणीः, कस्य वा नरस्यानुभवगोचरः? अन्तःकरणवृत्तिर्हि चैतन्यावच्छेदेनैवोत्पद्यते, स्वप्रकाशा च, इति कथं तस्यास्तूलाविद्याऽपरिणामिन्याः प्रातिभासिकरजतवत् मिथ्यात्वमनुभूयमानायाः, प्रतीतिसमसत्ताकाया व्यवहारदशायामपि? प्रतिभाससमसत्ताकत्वेनौपचारिकप्रातिभासिका हि सुखादयोऽन्तःकरणवृत्तिप्रतिबिम्बविशेषाः प्रातिभासिका अपि न तत्र मिथ्याभूताः। तथाच विमतम्, मिथ्या, इत्यनुमाने प्रतीतिसत्तासमसत्ताकत्वस्य नोपाधित्वम्; अप्रयोजकत्वात्। अत एव प्रपञ्चमिथ्यात्वेऽपि सर्वव्यवहारोपपत्तिः; यावद्बाधं व्यवहारस्याविरोधात्। तदेवं प्रत्यक्षत्वं चिदाभासव्याप्तिनिबन्धनं फलव्याप्यानाम्; ब्रह्मणस्तु तदाकारवृत्तिविषयतामात्रेणेति पूर्वमेव निरूपितम्॥

तत्र सर्वात्मनाऽनावृतचिन्मात्रमेवाखण्डं तत्त्वमसिवाक्यजन्यवृत्तिविषयः। न त्वेकत्वं नाम किमप्यन्यत्तत्र विषयः, इति तत्रैकत्वं ब्रह्मातिरिक्तं वा, नवा, इत्यादिविकल्पा नावसरन्ति। तत्राखण्डस्य ब्रह्मणो वृत्त्याकारत्वं तत्संबन्धमात्रम्। नच विषयत्वं घटादाविव। इयान् विशेषः—यद् घटादौ विषयत्वम् = तदवच्छिन्नचैतन्याभिन्नचैतन्यावच्छेदकत्वम् तच्च तद्द्वारकम्। ब्रह्मणस्तु तद्विषयत्वमात्रम्। इदमेवाभिप्रेत्याहुः—

> फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्।
> ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते॥

इति। स्वरूपज्ञानस्य ब्रह्मणोऽज्ञानाविरोधित्वात्, वृत्तेरेवाज्ञानविरोधित्वाच्च न वृत्तिं विनाऽज्ञाननिवृत्तिः स्वप्रकाशतायामपि। यथाहि धर्मभूतं ज्ञानं श्रीभाष्यमतेऽजडम्, एवमन्तःकरणवृत्तिरद्वैतमते। जडत्वं त्वस्वप्राकाशत्वम्। नच वृत्तिः स्वप्रकाशा धर्मभूतं ज्ञानमिव जडा नाम, येन तस्या अज्ञाननिवर्तकत्वायोगः।

सति चैवं विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यं ज्ञानप्रत्यक्षमित्यादि-विभागोऽद्वैतिनां निराबाधः ॥

वृत्तिश्चेयं त्रिविधा—अन्तःकरणवृत्तिः, मायावृत्तिः, पल्लवाविद्यावृत्तिरिति। तत्र मायावृत्तिमादाय सर्वेश्वरस्य सर्वविषयप्रमातृत्वम्, अन्तःकरणवृत्तिमादाय जीवानां घटादिविषयप्रमातृत्वम्। शुक्तिरूप्यादिप्रत्यक्षत्वं शुक्तिरूप्याकारपल्लवाविद्यावृत्तिमादाय ॥

तत्र ज्ञानप्रत्यक्षत्वं सूपपादम्; विषय-तदाकारवृत्त्योरुभयोरप्याविद्यकत्वाद् एकदेशस्थत्वाच्च तदुभयावच्छिन्नचैतन्याभेदात्। विषयप्रत्यक्षत्वं तु शुक्तिरूप्यस्य प्रमातृचैतन्याभिन्नशुक्त्यवच्छिन्नचैतन्याध्यस्तत्वात् प्रमातृचैतन्याभिन्नत्वादनपोहम्। तत्रेदं रजतमिति भ्रमदशायामपि रजताकाराविद्यावृत्तेरपि शुक्त्याकारवृत्त्यवच्छेदेनोत्पन्नतया शुक्त्याकारवृत्तेरन्तःकरणवृत्तिरूपायाः प्रमात्वात्तदवच्छिन्नचैतन्याभिन्नरूपत्वेन प्रत्यक्षप्रमात्वमेव यावद्बाधोदयम्। भाविबाधमादायैव रजत-तदाकारवृत्त्योर्भ्रान्तिविषयत्वव्यपदेशः ॥

तत्र चेन्द्रियसन्निकर्ष एव परम्परया प्रमावृत्तेः कारणमिति वस्तुस्थितिः। अत एव भ्रमकाले रजतस्यापि चाक्षुषत्वमानुभविकं सर्वेषाम्। तत्र चेदन्त्वस्य पारमार्थिकत्वस्य च शुक्तिगतस्य रजतेऽन्यथाख्यातिः, इति न तत्रानिर्वचनीयत्वम्, भ्रमकालेऽपि बाधितत्वं चेति। तत्र पारमार्थिकत्वांशे भ्रम इत्यादिवादोऽपि न विकल्पसहः। न हि भ्रमसमये पारमार्थिकत्वमपि बाधितं प्रतीयते। भाविबाधप्रतीतिमादाय बाधितत्वं तु शुक्तिरूप्यस्यापि समानम् ॥

तथाच-शुक्तिरूप्यादिस्थले इन्द्रियजन्यशुक्तिवृत्त्यपेक्षया रजतविषयकाविद्यावृत्तेरतिरिक्ततया स्वीकरणस्यापि कस्यचिद्वाच्यतया प्रमाणषट्कविभागभङ्गप्रसङ्ग इति—परास्तम् ॥

रजताकाराविद्यावृत्त्यंशमात्रे प्रमात्वस्यानङ्गीकारात। तद्वति तत्प्रकारकत्वेन प्रामाण्यं हि रजतांशेऽनिर्वचनीयख्यातिवादे यावद्बाधमेव। तदा त्विन्द्रियजन्यशुक्त्याकारवृत्त्यभेदादेव प्रमात्वव्यपदेशः, न तु रजतवृत्तिमात्रे, येन-

**इदं रजतमिति ज्ञानस्य रजते पारमार्थिकत्वांशे भ्रमत्वेऽप्यनिर्वचनीयरजतोत्पत्तिस्वीकारेण वर्तमानरजतावगाहिन्या वृत्ते रजतत्वविशिष्टधर्म्यंशे प्रमात्वादिति वाचोयुक्तेरवसरः स्यात् ॥**

भ्रमाः सर्वे धर्म्यंशे प्रमा इति राद्धान्तस्तु भाविबाधाभावाद् बाधकज्ञानविषयत्वाद्वा शुक्त्यादिधर्म्यंशाभिप्रायः, न तु रजतत्वविशिष्टधर्म्यंशाशयः ॥

तत्रैकसत्तावादे रजतस्य न प्रातिभासिकमपि सत्त्वम्, किन्तु सत्तादात्म्यमेव, इति न रजतत्वविशिष्टांशे प्रमात्वशङ्काऽपि, अबाधितत्वरूपसत्ताया भ्रमदशायामग्रहणात्। सत्तात्रैविध्यमते तु—प्रातिभासिकं सत्त्वं प्रतीयते। तेन च यावत्प्रतिभासं स्वतो ग्राह्यं प्रमात्वमपि, इति पूर्वमेवोपपादितम्—स्वतोग्राह्यं प्रमात्वं भ्रमप्रमासाधारणमितिनिरूपणेन न्यायरत्नावल्युक्तरीत्या। तथाच बाधितत्वं गृह्यमाणप्रकाराभाववत्त्वम्। अबाधितत्वं गृह्यमाणप्रकाराभाववदन्यत्वमित्यादि यदि तद्वति तत्प्रकारकज्ञानत्वं प्रमात्वम्, तदभाववति तत्प्रकारकत्व भ्रमत्वमिति प्रमाप्रमालक्षणाभिप्रायेण, तर्हि पूर्वोक्तविधया भ्रमकाले गृह्यमाणप्रकाराभाववत्त्वं न कुत्रापि भ्रमे वर्तते। भाविबाधप्रतीतिमभिप्रत्य हि भ्रमत्वव्यपदेशः। नहि भ्रमकाले पारमार्थिकत्वाभावो रजताभावो वा गृह्यते ॥

एतेन—सत्तात्रैविध्यमपि—व्याख्यातम्। त्रिविधा सत्ता—प्रातिभासिकी, व्यावहारिकी, पारमार्थिकी चेति। तत्र यावत्प्रतिभासकालमात्रमबाध्यत्वं प्रातिभासिकं सत्त्वम्, यावद्ब्रह्मसाक्षात्कारपूर्वक्षणमबाध्यत्वं व्यावहारिकसत्त्वम्। तच्च भाविबाधप्रतीतिं लोकसिद्धां शास्त्रसिद्धां वाऽभिप्रेत्य। कादचित्कबाधप्रतियोगित्वे प्रातिभासिकत्व-व्यावहारिकत्वे, कालविशेषावच्छिन्नबाधाभावस्तु पारमार्थिकत्वं ब्रह्मणो लोकतः शास्त्रतो वा भाविबाधाभावादिति विवेकः। व्यवहारदशायामबाध्यत्वं व्यावहारिकत्वमिति तु निष्कर्ष ॥

एतेन—१४-१६ व्यवहारकालिकमबाध्यत्वं न व्यावहारिकत्वम्;
जगतस्तत्त्वज्ञानबाध्यत्वेन बाध्यत्वसामान्याभावरूपाबाध्यत्वस्य विशेष्यस्य

तत्र दुर्वचत्वेन विशिष्टाभावस्य तत्राभावात्, यत्किंचिद्बाध्यत्वप्रतियोगिकाभावस्तु शुक्तिरजतेऽपि शुक्तिज्ञानबाध्येऽतिप्रसक्त इति—परास्तम् ॥

यावद्ब्रह्मसाक्षात्कारं बाध्यत्वेनानिश्चीयमानत्वं व्यावहारिकत्वं घटादीनाम्, तत्त्वबाधितम्, शुक्तिरूप्यादीनां तु ब्रह्मसाक्षात्कारपूर्वक्षणावच्छेदेन बाध्यत्वनिश्चयात् नेदं शुक्तिरूप्यादि साधारणम्। नहि भ्रमकाल एव तत्त्वज्ञानबाध्यत्वनिश्चयः, येन जगतस्तत्त्वज्ञानबाध्यत्वेन बाध्यत्वसामान्याभावरूपाबाध्यत्वस्य तत्र दुर्वचत्वम् ॥

सप्रकारकज्ञानबाध्यत्वं प्रातिभासिकत्वम्। निष्प्रकारकज्ञानबाध्यत्वं व्यावहारिकत्वम्। तच्च भाविबाधनिश्चयाधीनमेव, नतु भ्रमकालीनवस्तुगतिमनुसृत्य। अत—अबाध्यत्वमेव सत्तेति न व्याहतमिदम् ॥

निष्प्रकारकब्रह्मज्ञानाव्यवहितपूर्वप्रातिभासिकं तु देहात्म्यैक्यमिव, जलौष्ण्यत्वमिव वा व्यावहारिकमेव। निष्प्रकारकज्ञानबाध्यमूलाज्ञान-तत्कार्यान्यतरत्वं वा व्यावहारिकत्वम्, सप्रकारकज्ञानबाध्यतूलाज्ञान-तत्प्रयुक्तान्यतरत्वयोग्यत्वं प्रातिभासिकत्वमिति तु विवेकः। ब्रह्मज्ञानाव्यवहितपूर्वप्रातिभासिके तु तूलाज्ञानस्यापि मूलाज्ञानावस्थाविशेषस्य मूलाज्ञानप्रयुक्तत्वात् मूलाज्ञाननाशप्रयुक्तनाशप्रतियोगित्वाद् व्यावहारिकत्वं न विरुद्ध्यते। सप्रकारकज्ञानबाध्यत्वं हि पल्लवाज्ञानतत्प्रयुक्तान्यतरत्वरूपमेव, इति न ब्रह्मप्रमाव्यवहितपूर्वप्रातिभासिकेऽतिप्रसक्तिरुक्तस्य प्रातिभासिकत्वस्य। एकस्मिन्नेवाबाध्यत्वाख्ये सत्त्वे विशेषणभेदाद्भेदो न विरुद्ध्यते ॥

वस्तुतस्तु—सत्तात्रैविध्यवादे जगतः सत्त्वं नाबाध्यत्वम्, किन्त्वर्थक्रियाकारित्वम्। तच्च यावद्बाधमेव, ब्रह्मणस्त्वबाध्यत्वमिति नैकस्यामेव सत्तायां परमार्थप्रकाशिकोक्तरीत्या त्रैविध्यम् ॥

अत एव भिन्नविषयकत्वात् प्रत्यक्षागमयोर्न विरोधः, इति प्रत्यक्षबाधोद्धारे व्यवस्था ॥

एतेन—सतो जगत उत्पत्तिश्रुतिरपि—व्याख्याता ; विवर्तवादाभिप्रायत्वाद् श्रुतेः। कारणविषमसत्ताकः खलु विवर्तो नाम। कालविशेषावच्छिन्नबाधाविषयत्वं पारमार्थिकसत्त्वम्। ब्रह्मसाक्षात्कारपूर्वक्षणावच्छिन्नबाधविषयत्वं व्यावहारिकत्वम्, तत्पूर्वक्षणावच्छिन्नबाधविषयत्वं प्रातिभासिकसत्त्वम्, बाध्यत्वव्यवहारस्तु भाविबाधप्रतीतिमादायैवेति पूर्वमेव विवेचितम् ॥

सति चैवम्—अबाध्यनिष्ठा सत्ता पारमार्थिकसत्ता, व्यवहारकालाबाध्यनिष्ठा सत्ता व्यावहारिकसत्तेति प्रकारान्तरसभावनाद्युत्प्रेक्षणम्, तन्निरसनं चाकाण्डताण्डवमेव ॥

अत्र बाध्यत्वाबाध्यत्वव्यपदेशः — अधिष्ठानसाक्षात्कारप्रयुक्तबाधत्तदभावावभिप्रेत्यैव, नतु बाधितशब्दव्यपदेश-तदभावमात्रमाश्रित्य, इति न जगतोऽप्यबाधितत्वम्। बौद्धेन ब्रह्मणोऽपि बाध्यत्वाङ्गीकारादिकथा निरालम्बा। बौद्धकल्पितबाध्यत्वव्यपदेशो हि सगुणब्रह्मणोऽपि समानः, जगतश्च। स च न श्रौताधिष्ठानसाक्षात्कारमादाय। नहि शून्यं नाम चतुष्कोटिविनिर्मुक्तं तत्त्वं बौद्धमतेऽप्यधिष्ठानं नाम। नहि निषेधमात्रं बाधः, किन्तु तत्त्वज्ञानप्रयुक्तनाशप्रतियोगित्वमेव, इति न बौद्धानां बाधितव्यपदेशो मुख्यः सभवति। अतो न सत्तात्रैविध्यविभागोऽनुपपन्नोऽद्वैतिनां श्रुतिशरणानाम् ॥

तदेवं भ्रमप्रमाविभागो भाविबाधतदभावावाश्रित्येति मतमास्थाय, वस्तुगत्या भ्रमज्ञानस्यापि प्रमात्वमादाय प्रमालक्षणं सत्तात्रैविध्यमादायोपपादितम्। भाविबाधनिश्चयेन भ्रमदशायामप्यंशविशेषे बाधितत्वमादाय लोकसिद्धभ्रमप्रमाव्यवहारपक्षे तु सर्वं सप्रकारकं ज्ञानं धर्म्यंश एव प्रमाणम्। प्रकारांशे तु भ्रम एव। इदमेवाभिप्रेत्य सन्मात्रविषयकं ज्ञानं प्रमा, विकल्पांशे तु सर्वं ज्ञानं भ्रम एवेति ब्रह्मसिद्धितत्त्वशुद्धिकारादीनां सिद्धान्तः। विकल्पाप्रामाण्यवाद इत्यपि तस्य नामान्तरम्। विकल्पपदार्थस्तु धर्म्यतिरिक्तः ; धर्म्यंशवदेकरूपत्वाभावात्। अधिष्ठानं हि सर्वत्रैकरूपमेव, नतु भिन्नम्, प्रकारांश इव। तत्र प्रकारांशोऽपि धर्मिरूपेणैकरूप एव, स्वरूपेण भिन्नभिन्नोऽपि। उक्तं च—

कार्यात्मना तु नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥

इति । अत्र हेमात्मनेति परिणामिकारणाभिप्रायेण प्रयुक्तमपि विवर्तकारणात्मनेत्यस्याप्युपलक्षणम् । तथाच विवर्तरूपेण विकल्पानां भेदः, सद्रूपेण त्वभेदः । अत एव "सर्वं खल्विदं ब्रह्म" इति सामानाधिकरण्यम् ॥

एतेन—१०१ सर्वप्रत्यक्षाणां सन्मात्रावगाहित्वस्वीकारे बहुविधभेदप्रत्यक्षतद्व्यवहारादिसर्वव्यवस्थापह्नवप्रसङ्ग इति शंकापि—परास्ता ॥

कार्यात्मना भेदव्यवहारादिसर्वव्यवस्थोपपत्ते । शास्त्रं हि सर्वात्मनाऽनावृतमखण्डं ब्रह्म बोधयितुमेव, नतु किंचिद्रूपेण ज्ञानमात्रं बोधयितुम्, इति सर्वस्य प्रत्यक्षस्य सन्मात्रावगाहित्वेऽपि न शास्त्रवैयर्थ्यम् । तथाच प्रकाराणां सर्वेषां द्वितीयानां शुक्तिरजतदृष्टान्तेनानिर्वचनीयत्वाद् अद्वितीयं निर्विशेषं च ब्रह्मैव तत्त्वमस्यादिमहावाक्यविषय इत्यद्वैतसिद्धान्तः ॥

(२६-२७) यत्तु—शुक्तिरजतादिकं न प्रामाणिकम्-इति । यदि तत् तस्य स्वरूपतः, पारमार्थिकत्वेन वा बाधाभावमभिप्रेत्य, तर्हि नेदं रजतमिति भाविबाधोपपत्तिविरुद्धम् । तस्य बाध्यत्वं च पल्लवाज्ञानप्रयुक्तत्वेन ; न ह्यन्यथा तत्प्रत्यक्षत्वनिर्वाहः । देशान्तरस्थन्तु रजतं सन्निकृष्टस्थल एवान्यथाख्यातिस्वीकारात् स्मरणमात्रत्वे चाक्षुषत्वानुभवविरोधाच्च नात्र भासेत । तच्चाक्षुषत्वं तु शुक्त्याकारवृत्त्यवच्छेदेन तदविद्यावृत्तिस्वीकाराद् उभयावच्छिन्नचैतन्याभेदात् प्रमात्रभेदाच्च ज्ञानप्रत्यक्षत्वस्य विषयप्रत्यक्षत्वस्य निर्वाहाच्च न विरुध्यते ॥

प्रतिभासमात्रकालिकस्यापि तस्यैकसत्तावादे स्वरूपतः पूर्वक्षणे, प्रतीतिक्षणे, बाधक्षणे चाभावात् त्रैकालिकनिषेधप्रतियोगित्वम् । एवमेव जगतोऽपि ब्रह्मभिन्नस्य सर्वस्य । सत्तात्रैविध्यवादे तु ब्रह्मवदबाध्यत्वाभावात् । पारमार्थिकत्वेनाभावो नाम जगत. पारमार्थिकत्वाभाव एव । अबाध्यत्वाभाव इति यावत्, इति न सत्यत्व-

मबाध्यत्वरूपं तस्य समस्ति, स्वरूपेण कारणात्मना वा विनाशित्वं बाध्यत्वम्, तदभावः सत्यत्वमिति चानर्थान्तरम् ॥

बाध्यस्यापि प्रपञ्चस्यार्थक्रियाकारित्वरूपं सत्त्वं सत्तात्रैविध्यवादे यावत्प्रतीति न विरुध्यते। स्वाप्नार्थोऽपि तत्प्रतीतिदशायां स्वत एवार्थक्रियाकार्येव। नच तत्र ज्ञानमेव सत्यमर्थक्रियाकारि; तत्र ज्ञानस्याप्यविद्यावृत्तिरूपस्यासत्यत्वात्। भाविबाधप्रतीत्यैव सर्वत्र बाध्यत्वमिथ्यात्वव्यपदेशः, न तु प्रतीतिदशायामिति पूर्वमेवोपपादितम्। सति चैवं कथं वाऽसत्यात् सत्योत्पत्तिवादाक्षेपोऽद्वैतसिद्धान्ते प्रसरमपि लभते ॥

(२९–३०) यत्तु–स्वाप्नरथादीनामपि सत्यत्वात् स्वाप्नभोगप्रदकर्माभिव्यक्तिबलाद् रथादिसृष्टिः स्वप्ने श्रुतिसिद्धेति भवन्तोऽपि मन्यन्ते। तत्र चेश्वरस्यैव कर्मफलप्रदत्वात् तत्र तत्स्रष्टृत्वाभ्युपगम एव युक्तः। नहि शुक्तिरजतादौ जीवकल्पिते सृष्टिव्यवहारः—इत्यादि।

तत्रेश्वरसृष्टत्वे स्वाप्नरथादीनां तेषां स्वप्नदृङ्मात्रानुभाव्यत्वचाक्षुषत्वादि कथमुपपद्यते ? जीवकल्पितत्वे तु चाक्षुषत्वादिकमपि चक्षुराद्युपरमात् कल्पितम्, स्वप्नदृङ्मात्रानुभाव्यत्वं चोपपद्यते। स्वाप्नरथादीनामीश्वरसृष्टत्वे "वैधर्म्याच्च न स्वप्नादिवत्" इति कथमुपपद्यते ? ईश्वरशक्तिवैचित्र्यविशेषात् सर्वोपपत्तिस्तु तद्वशेनैव जागरादिसृष्टेरपि सम्भवात् किमन्तर्गडुना सूक्ष्माचिता प्रकृत्या वा परिणामिकारणेन ? लौकिकोपादानाद्यनपेक्षविलक्षणसामग्रीजन्यत्वं मतद्वयेऽपि समानम्। सा चैश्वरविचित्रशक्तिः, तुलाविद्या वा जीवगतेति तु विशेषः। स्वप्नदृङ्मात्रानुभाव्यत्वं जीवाविद्याकार्यत्वे सुलगति ॥

यत्तु रत्नसारिण्या तत्वसारव्याख्यायाम्—मृषावादिनां योगाचाराणां चार्थमिथ्यात्वाभ्युपगमस्याविशेषान्न दोष इति। तदुक्तं भट्टसुदर्शनपादैः—"प्रतीतत्वे सति बाधार्हत्वस्योभयाभिमतत्वाच्च" इति, "कारणदोषबाधप्रत्यययोरनिर्वाच्यपक्षेऽप्युपाधित्वोपपत्तेरविशिष्टत्वात्" इति च। तथा चण्डमारुतेऽप्युक्तम्—"जागरितप्रत्ययः, निरालम्बनः, वेदनत्वात्, स्वाप्नप्रत्ययवत्" इति बौद्धानुमानम्" "वैधर्म्याच्च न स्वप्नादिवत् इति

सूत्रभाष्ये भगवता दूषितम्। मायिना 'प्रपञ्चः, मिथ्या, दृग्विषयत्वात्; शुक्तिरजतस्वाप्नादिवत्' इत्युक्तम्। एवं च ज्ञानत्वेन मिथ्याविषयत्व-साधनस्य ज्ञानविषयत्वेन मिथ्यात्वसाधनस्य चाविशेषात्, ज्ञानत्वहेतु-दूषणान्येव तद्विषयत्वहेतोरपि भवन्ति" इति ॥

तत्र योगाचाराद्वैतसिद्धन्तयोर्विशेषः—प्रथमे ज्ञानत्वेन निर्विषयत्व-साधनमर्थस्य ज्ञानाकारत्वमात्रसाधनम्—स्वप्ने जागरे च, द्वितीये तु दृग्विष-यत्वेन विषयमिथ्यात्वसाधनमिति स्वयमूरीकृतम्, तावता च ज्ञानातिरिक्त विषयसत्त्वासत्त्वाभ्यां विशेष ऊरीकृत एव। एवं च स्वप्नेऽपि ज्ञानातिरेकेण विषयो वर्तते, परंतु स बाधितः, इत्यनिर्वचनीयार्थसत्त्वमद्वैतमते, परत्र तु विषयस्यात्यन्तासत्त्वम्, प्राचीनवासनामात्रमर्थाकारः। तच्च ज्ञानं क्षणिकम्, नाद्वैतमत इव स्थिरमज्ञानाश्रयविषयः अधिष्ठानं वेत्यादिविशेषा विवरणादौ विवेचिता एव। अत एव दृग्विषयत्वेन मिथ्यात्वसाधनम्, न तु ज्ञानत्वेन। तत्र योगाचारमतेऽपि विषयस्य ज्ञानत्वेन न मिथ्यात्वसाधनम्, विषये ज्ञानत्वा-भावात्, किन्तु ज्ञानत्वेन ज्ञानस्य निरालम्बनत्वसाधनमेव। बाधितत्वाबाधि-तत्वाभ्यां वैधर्म्यं खलु सूत्रेण प्रतिपाद्यते, तत्र श्रीभाष्यमते सत्ख्यातौ, यत्रेश्वर-सृष्टत्वम्, 'मायामात्रमि'ति सूत्रेण विवक्ष्यते, तत्र किं बाधितम्? किं वाऽबाधितम् स्वाप्नजागरयोरीश्वरसृष्टत्वाविशेषे? अद्वैतसिद्धान्ते तु तूलाविद्याकार्यत्वं स्वाप्ना-नाम्; मूलाविद्याकार्यत्वं च जागराणां शुक्तिरूप्यादिव्यतिरिक्तानाम्। तत्र च बाधितत्वाबाधितत्वाभ्यां वैषम्यमुपपन्नतरम्, इत्यद्वैतमत एव "वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रस्वारस्यम्। श्रुतप्रकाशिकायाम्—कृत्वा चिन्तयेदं सूत्रमिति श्रीसूक्तेः का वा गतिरन्यथा?

एतेन—श्रुतिप्रामाण्ये स्वप्नस्य तत्काले वर्तमानत्वं, श्रुत्यनादरे तु कालान्तरस्थस्य वस्तुनः स्मृतिरिति न प्रातिभासिकत्वे प्रमाणमिति—परास्तम् ॥

नहि स्वाप्नप्रातिभासिकतावादिनोऽपि स्वप्नकाले वर्तमानतां स्वाप्निका-नामपह्नुवन्ति। किं स्वाप्नसत्यतावादिनोऽपि जागरादिवर्तमानतामीश्वरसृष्टानाम-

परेषामिवोरीकुर्वन्ति ? प्रातिभासिकाः शुक्तिरूप्यादयोऽपि यावत्प्रतिभासं वर्तन्त इति खल्वद्वैतराद्धान्तः। तन्मिथ्यात्वन्तु कालान्तरे बाधमादाय ! ईश्वरस्यैव कर्मफलप्रदातृत्वं को वा वारयति ? नहि कुलालादिसृष्टानां नेश्वरसृष्टत्वम्। साधारणकारणं हि कालः, ईश्वरादिश्च। कर्मफलप्रदत्वं स्रष्टृत्वं च नैकम्। ईश्वरसृष्टत्वे च स्वाप्नानाम्, किं तत्र परिणामिकारणम् ? यदि विचित्रा शक्तिः, सा किं सूक्ष्माचितोऽतिरिक्ता, उत सैव। आद्ये—"माया तु प्रकृतिं विद्यादि"ति मायायाः प्रकृतित्वं कथं श्रौतमुपपद्यते ? तस्य ब्रह्मगतत्वे तु ब्रह्मपरिणामितावादप्रसङ्गः। द्वितीये स्वप्नदृङ्मात्रानुभाव्यत्वविरोधः। सर्वथा तु स्वाप्नप्रातिभासिकतापक्षेऽपि नासत्यात्सत्योत्पत्तिः। असत्यात्सत्योत्पत्तिवादो हि भाविबाधादसत्यत्वमादायैव। इदन्तु व्यावहारिकस्यापि समानम्। रेखागवयादिदृष्टान्ता अपि सर्वेऽपि भाविबाधमादायासत्यत्वं नार्थक्रियाकारित्वविरोधीत्यभिप्राया एव। भाविबाधोपपत्तिस्तु सांप्रतिकामिथ्यात्वनिश्चयेन तन्निबन्धनप्रामाण्येन च न विरुध्यते; अन्यथा सांप्रतिकवैकुण्ठाद्यनिश्चयेऽपि श्रुत्या तद्भाविकालनिश्चयः कथमुपपद्यते ? अधिकं तु भाविबाधोपपत्तिप्रकरणेऽद्वैतसिध्यादौ व्यक्तम्॥

एतेन "सूचकश्च हि श्रुतेराचक्षते" इति सूत्रमपि स्वाप्नगजविज्ञानस्यैव सूचकत्वमुपपादयति, नतु रथादेरिति—परास्तम्॥

स्वाप्नरथादिज्ञानं नान्तःकरणवृत्तिः, न वा विकासितधर्मभूतज्ञानम्। धर्मभूतज्ञानस्य प्रत्यक्षाकारस्य तदा बहिरप्रसरात्, अन्यथा जागरिकार्थस्मरणादेरपि न कथं प्रत्यक्षत्वम् ? तदपीश्वरशक्तिवैचित्र्यनिबन्धनम्, इति न प्रामाणिककल्पनम्। तथाच स्वाप्नरथादिदृष्टान्तेन, किं बहुना ? शुक्तिरूप्यादिदृष्टान्तेन वा नासत्यात्सत्योत्पत्तिवादो निह्नोतुमलम्॥

स्वाप्नादिप्रत्यक्षत्वं तु विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यत्वेन, प्रमात्रभिन्नत्वेन वेन्द्रियोपरमेऽपि न विरुध्यते। न हीन्द्रियजन्यमेव प्रत्यक्षमित्यद्वैतिनां सिद्धान्तः। अत एवाजन्यं साक्षिप्रत्यक्षं जीवेश्वरसाक्षिभेदेन द्विविधं

पूर्वमुपपादितम्। स्वप्नेऽपि साक्षिचैतन्यं वर्तते, तत्सम्बन्धादेव सुखादीनामिव प्रत्यक्षत्वमद्वैतराद्धान्त उपपद्यते। अन्तःकरणवृत्तिनिर्गमो हि बाह्यानां साक्षिसम्बन्धस्य द्वारमात्रम्। तत्र विषयावच्छिन्नचैतन्यं वृत्तिप्रतिबिम्बितं सत् विषयस्य भासकमिति प्रक्रियायामद्वैतसिद्धायां कथं न तयोरभेदः ?

यत्तु—(३०-३१) चिदाभासस्य विषयावच्छिन्नचैतन्याभेदो न सभवति; विषयचैतन्यं नाम विषयावच्छिन्नचैतन्यम, न त्विदं प्रतिबिम्ब चैतन्यम्, अस्वच्छे घटे प्रतिबिम्बासभवात्। एवं च वास्तवचैतन्यस्य प्रतिबिम्बचैतन्यस्य चाभेदकथानमयुक्तम्—इति ॥

तत्र घटाकारवृत्तौ सत्यां वृत्त्युपहिते घटादौ जललिप्तायां भित्तौ मुखादीव घटावच्छिन्नमेव चैतन्यं प्रतिबिम्बतां भजति, इति विठलेशीयादौ व्यक्तम्, इति विषयावच्छिन्नमेव चैतन्यं वृत्तिप्रतिबिम्बमपि भवति; उभयत्राप्यवच्छिन्नचैतन्यविवक्षणात्। उभयोरेकदेशस्थत्वेन तु तदवच्छिन्नचैतन्याभेदः ॥

यत्तु—(१८) एवं सति रूपवान् घट इति प्रत्यक्षे परिमाणादे प्रत्यक्षत्वापत्ति। न खलु परिमाणावच्छिन्नचैतन्यस्य घटावच्छिन्नचैतन्यस्य च भेदोऽस्ति—इति ॥

तत्र रूपघटयोरिव परिमाणघटयोरपि भिन्नदेशस्थत्वाद् नैक्यसंभावनापि, अन्यथा घटप्रत्यक्षतादशायां तद्रूपतदेकत्वादिप्रत्यक्षं कथं वार्यते। अथ यदि रूपप्रत्यक्षतादशायां परिमाणप्रत्यक्षतापत्तिरिति मन्यते, नहि तत्तदाकारवृत्त्युपहितप्रमातृभिन्नत्वस्यैव विषयप्रत्यक्षत्वात् तदा परिमाणाकारवृत्त्यभावेन न तस्य प्रत्यक्षत्वापत्तिः। तत्र परिमाणाकारत्वं परिमाणविषयकत्वम्, न तदधीनाकारत्वम्, न वाऽन्यः सम्बन्धविशेषः। विषयविषयिभावो हि सर्वत्र धर्मभूतज्ञानतत्सम्बन्धिनोरेव, नतु स्वरूपज्ञानस्यान्येन। नहि वृत्तिरपि धर्मभूतज्ञानापरपर्याया, धर्मभूतज्ञनवदस्वप्रकशा, जडा वाऽद्वैतमते। पराक्रान्तं चात्र परिभाषादौ। नहि रूपाकारवृत्तिदशायां परिमाणाकारवृत्तिर्नियता; उभयाकारवृत्त्युत्पत्तौ तूभयप्रत्यक्षत्वमिष्टमेव ॥

इदं च प्रत्यक्षं नेन्द्रियादिद्वारकमिति नियमः, 'पर्वतो वह्निमानि' त्यादौ सन्निकृष्टस्थले पर्वतांशेऽनुमानेनापि प्रत्यक्षम्, एवं 'दशमस्त्वमसी' इत्यादौ दशमत्वांशेऽपि। अयमेव न्यायः—'सोऽयं देवदत्त' इत्यादावपि, शाब्दापरोक्षवादस्वीकारात्, तस्य चादुष्टत्वात्। व्यक्तीकरिष्यते चेदमागम-प्रमाणविचारावसरे ॥

इदं च प्रत्यक्षं सविकल्पक-निर्विकल्पकभेदेन द्विविधम्। निर्विकल्पकत्वं च प्रत्यक्षस्य प्रकारांशाविवक्षया। अविवक्षा च विद्यमानत्वेऽपि भवति, बाधित-त्वेन तत्रासत्त्वेऽपि। तत्र शाब्दे प्रत्यक्षे निर्विकल्पके शब्दतात्पर्यानुसारिणी व्यवस्था। तत्र 'तत्त्वमसी' इत्यादौ जीवत्वेश्वरत्वयोर्धर्मयोर्बाधादविवक्षा, 'सोऽयं देवदत्त' इत्यादौ विद्यमानस्याप्यविवक्षामात्रेणेत्यन्यदेतत् ॥

यत्तु—विविध (९३-९४) कल्पो विकल्प =अनेकप्रकार.। तथाचानु-वृत्तितद्भिन्नद्विविधप्रकारावगाहि सविकल्पकम्। अतथाविधं किंचित्प्रकाराव-गाहनेऽप्यनुवृत्त्यग्राहि निर्विकल्पकम्। गवादिषु प्रथमपिण्डग्रहणे सस्था-नस्यानुवृत्ताकारता न प्रतीयते। द्वितीयादिग्रहणेषु तु तदेवेदं सस्थानम्' इत्यनुवृत्तिधर्मविशिष्टत्वं प्रतीयत इति द्वैविध्यम्। सस्कारोद्बोधसहकृतेन्द्रिय-जन्यज्ञानं सविकल्पकम्, तद्रहितं प्रत्यक्षं निर्विकल्पकमिति निष्कर्ष इत्यादि—परास्तम् ॥

प्रमाणबाधितप्रकाराविवक्षया शब्दजन्यनिर्विकल्पाङ्गीकारो हि नोक्त-निष्कर्षविरोधी। एकप्रकारकत्वनियमस्तु नोपपद्यते। नहि सविकल्पकज्ञानं सर्वं द्विप्रकारकम्; इयं गौरिति द्वितीयज्ञाने सस्थानस्यैव गां प्रति प्रकारत्वात्, अनुवृत्तेः सस्थानप्रकारत्वेऽपि विशेष्याप्रकारत्वात्। नच शब्दाबोधि-तानुवृत्ति. शाब्दे प्रकार इति संभवति। अभिलापकशब्दोऽपि शब्द एव। नच तत्रानुवृत्त्यभिलापक. कोऽपि शब्दोऽस्ति, इत्यगत्याऽभिलापकप्रतीतेरभिलप्य-मानप्रतीतितुल्यत्वात्, अभिलापकप्रतीतेः प्रकारद्वयानवगाहित्वेनाभिलप्यमान-प्रतीतेरप्यनुवृत्त्यप्रकारत्वात् को वा विशेषो निर्विकल्प-सविकल्पयोः? इति

निष्प्रकारक ज्ञानं निर्विकल्पकम्, सप्रकारकं ज्ञानं सविकल्पकमित्येव विशेष स्तयोः, न त्वेकप्रकारकत्व-द्विप्रकारकत्वाभ्यां तयोर्विशेषः; व्यभिचारात् ॥

प्रत्यक्षत्वं नेन्द्रियप्रयुक्तम्, किन्तु विषयाकारासत्त्वाभानापादकाज्ञान-निवर्तकवृत्तिविषयत्वम्, प्रमातृचैतन्याभिन्नत्वं वेति निर्विकल्पकाखण्डाकारा-सत्त्वापादकाभानापादकानानन्दतापादकाज्ञाननिवर्तकज्ञानजनकत्वेन शब्दोऽप्य-परोक्षं जनयतीत्यङ्गीकारे न काऽपि बाधा। असत्त्वापादकाज्ञानाविषयत्व-प्रयोजकविशिष्टचैतन्यं परोक्षज्ञानम्, असत्त्वाभानापादकाज्ञाननिवृत्तिप्रयोजक-विशिष्टमपरोक्षज्ञानमिति हि व्यवस्था। तत्त्वमसीत्यादिवाक्यानि हि सर्वविधा-ज्ञाननिवर्तकं ज्ञानमेव जनयन्ति। प्रत्यगात्मा हि सदा विशिष्टः, उपहित इव चोपलक्षितोऽप्यपरोक्ष एव। तस्य परोक्षत्वं परोक्षोपाध्युपधानेनैव, सर्वोपाधि-विरहेऽप्यपरोक्षत्वमेव तस्य स्वभावः। त्वंपदार्थ इव तत्पदार्थोऽपि प्रत्यगात्मेत्यु-भयसंप्रतिपन्नम्। सति चैवं तत्त्वमसीति वाक्यं सर्वोपाधिविरहितशुद्धप्रत्यगात्म-ज्ञानं कथं नापरोक्षमेव जनयति? स्वतोऽपरोक्षस्वभावस्य स्वप्रकाशस्य वा प्रत्य-गात्मनोऽपरोक्षयोग्यत्वमेव, नतु धर्मादीनामिव शब्दमात्रगम्यानां परोक्षमात्रत्वम्; अन्यथा शुद्धप्रत्यगात्मसाक्षात्कारः, ईश्वरसाक्षात्कारो वा भक्तेरपि कथं फलं स्यात् ॥

यत्तु—विकल्पराहित्यमपि दुर्भणम्, ज्ञानस्य ज्ञातृज्ञेयनिरूप्यत्व-नियमादित्यादि ॥

तत्र वृत्तिज्ञानविषयस्योक्तनियमस्य यावद्वृत्तिज्ञानं प्रवृत्त्याऽखण्डाकारवृत्ति-काल एवाज्ञाननिवृत्त्या तन्निबन्धनज्ञातृज्ञेयादिनिवृत्त्या न विरोधलेशोऽपि। यथा-चाखण्डाकारवृत्तेस्तत्रोपाधित्वमेव, नतु विशेषणत्वम्। तत्र ब्रह्ममात्रस्य विषयत्वेऽपि न निर्विकल्पत्वविरोधः। ज्ञाता त्वन्तःकरणाद्युपलक्षित एव तदा भाति, नतु तद्वि-शिष्टः, इति न त्रिपुटीभानमखण्डाकारवृत्तिदशायाम्, तथा न्यायरत्नावल्यादौ व्यक्तम् ॥

तदेवं सविकल्पकनिर्विकल्पकभेदेन प्रत्यक्षद्वैविध्यम्, निर्विकल्पकज्ञानस्यैव प्रामाण्यम्। सविकल्पेऽपि निर्विशेषसन्मात्र एव प्रामाण्यम्। विकल्पांशे तु सर्वेषां ज्ञानानामप्रामाण्यम्। विशेषतस्तु प्रत्यक्षस्येति विवेचितम्। तेन च प्रत्यक्षविरोधाच्छ्रुतेरप्रामाण्यमिति कथाया नोत्थितिरपि। नच प्रत्यक्षप्रमाणेन शब्दप्रमाण बाध्यते; भिन्नविषयत्वात् श्रुति-प्रत्यक्षयोः। श्रुतिप्रामाण्यमसन्दिग्धं श्रुत्यविरोधे विषयस्याबाधितत्वे च स्वत एव। नचैवं संभावितपुरुषदोष प्रत्यक्षम्—इति। नचात्र विनिगमनाविरहः, येन प्रत्यक्षविरुद्धत्वाद् श्रुतेरेवाप्रामाण्यं प्रसञ्जयितुं शक्येत। अधिकमागमपरिच्छेदे ॥*

॥ इति प्रत्यक्षपरिच्छेदः ॥

---

## ॥ अनुमानप्रमाणम् ॥

ज्ञातसंबन्धस्यैकदेशदर्शनादेकदेशान्तरे ज्ञानमनुमानम्। तस्य प्रयोजनमद्वैतसिद्धान्ते द्वितीयमिथ्यात्वनिर्णयद्वाराऽद्वैतसिद्धिः। तदुक्तम्—"अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वाद् द्वैतमिथ्यात्वं प्रथममुपपादनीयम्—इति। इदं च श्रुत्यर्थे विप्रतिपत्तिनिरसनेन श्रुत्युपष्टम्भकतयैव तत्र प्रमाणम्, न तु श्रुत्यनपेक्षम्। अत एव "मन्तव्यः" इति मननविधानम्। श्रुत्या संभावितमेव द्वितीयमिथ्यात्वमनुमानेनोपबृंह्यते, न तु स्वतन्त्रं साध्यते। तेन चानुमानेऽपि श्रुताविव प्रत्यक्षविरोधेनाप्रामाण्यशङ्काया नोत्थितिः। तेन च निर्विशेषत्वसिद्धिर्ब्रह्मणः फलम् ॥

श्रुतिर्हि—ब्रह्म सत्यम्, तद्व्यतिरिक्तं च सर्वं मिथ्यैवेति ज्ञापयति। तत्र कानिचन सद्वितीयं ब्रह्म प्रस्तुत्य तदद्वितीयमिति बोधयन्ति। तानि

---

* यत्तु—तृतीये पृष्ठे पञ्चमपङ्क्तौ वृत्त्यवच्छिन्नचैतन्येत्यत्र वृत्तितदवच्छिन्नान्यतरस्य ग्रहणात्—इति, तत्र वृत्तिपदेनावरणाभिभवमात्रप्रयोजनवृत्तिमात्रविषयत्वं विवक्ष्यते। वृत्तितदवच्छिन्नेत्यत्र वृत्त्यवच्छिन्नचैतन्य-वृत्त्यन्यतरस्येति पठनीयम्ः अतो नातिप्रसङ्ग।

यथा—(१) "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्," (२) "नेह नानास्ति किञ्चन" (३) "यत्तदद्रेश्यमग्राह्यमचक्षुःश्रोत्रं तद्भूतयोनि परिपश्यन्ति धीराः," (४) "न दृष्टेर्द्रष्टारं पश्येः" (५) "आत्मा वा इदमग्र आसीत् नान्यत्किंचन मिषत्," (६) वाचारम्भणं विकारो नामधेय मृत्तिकेत्येव सत्यम्," (७) सर्वं खल्विदं ब्रह्म," (८) अपहतपाप्मा विजरो विमृत्युः," इत्यादीनि, येषामुपष्टम्भकानि—(१) "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" (२) "मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादित्यादीनि सूत्राणि। कानिचन ब्रह्मव्यतिरिक्तस्य ज्ञाननिवर्त्यत्वबोधकानि द्वितीयस्य भीतिकारणत्वबोधकानि च यथा—"तमेवं विद्वानतिमृत्युमेति," "द्वितीयाद्वै भयं भवति," "उदरमन्तरं कुरुते। अथ तस्य भयं भवति" इत्यादीनि। तत्र श्रुत्युपष्टब्धानि मिथ्यात्वानि—(१) सदसद्विलक्षणत्वम्, (२) प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्, (३) ज्ञाननिवर्त्यत्वम्, (४) स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वम्, (५) सद्विविक्तत्वमित्यादीनि, येषां साधनार्थमनुमानानि—विमतम्, मिथ्या, जडत्वात्; जगत्, अपरमार्थम्, व्यावर्तमानत्वात्; सन्, परमार्थः, अनुवर्तमानत्वादित्यादीनि ॥

तत्र—"सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम्" इत्युपक्रम्य प्रवृत्ता सद्विद्या तत्पदवाच्यार्थजगत्कारणं प्रथमत उपक्षिप्य तस्याध्यारोपापवादन्यायेन सजातीय-विजातीय-स्वगतभेदराहित्यं मृत्पिण्डादिदृष्टान्तेन कारणातिरिक्तकार्याभावरूपमिथ्यात्वं चोपपाद्य तस्य त्वंपदार्थेनाभेदं प्रतिपादयन्तीति निर्विशेषात्मवादे प्रमाणम्—इत्यद्वैतामोद उपन्यस्यति ॥

परमार्थप्रकाशिका तु—इयं श्रुतिर्निर्विशेषात्मतत्त्वं प्रतिपादयतीतीदं शाङ्करभाष्यविरुद्धम्, असंभावितं च। तथाच तत्रत्यं भाष्यम्—एकमेवेति स्वकार्यपतितमन्यन्नास्तीत्युच्यते अद्वितीयमिति—मृद्व्यतिरेकेण यथा मृदोऽन्यद्घटाद्याकारेण परिणामयितृ कुलालादि निमित्तकारणं दृष्टम्, तथा न सद्व्यतिरेकेण सहकारिकारणं द्वितीयं वस्त्वन्तरमिति प्रतिपाद्यते। अनेन च

सृष्टिकालिकं भावि यद्बहु 'बहु स्याम्' इत्युपरितनवाक्यदर्शितम्, तदभाव एव गम्यते। तथाऽद्वितीयपदं लोकदृष्टप्रक्रिययोपादानातिरिक्तनिमित्तकारणशङ्कायां तद्यवच्छेदार्थमिति च स्पष्टम्। एवं च बहुभवनरूपविकारराहित्यस्य, निमित्तकारणभूतविजातीयराहित्यस्य च प्रतीतावपि सकलसजातीय-स्वगतभेदराहित्यरूपं निर्विशेषत्वं न प्रतीयते। उपरि च "असदेवेदमग्र आसीत्। एकमेवाद्वितीयमि"त्यस्य व्याख्यानावसरे कथं पुनरसत 'आसीदि'ति प्राक्कालसम्बन्ध, एकमिति सङ्ख्यासम्बन्ध इत्याक्षिपतो भाष्यकृत· सत्कारणवाक्य इत्थमनुपपत्तिर्न भवितुमर्हतीत्याशयस्य स्पष्टमवगम्यमानतया नात्यन्तनिर्विशेषत्वमत्र सङ्ख्याकालादिसंबन्धिन सुवचमित्यादिना कारणत्वादिविशेषबोधनान्न निर्विशेषवादे भाष्याशय· ॥

एवं जगन्मिथ्यात्ववादिमते ब्रह्म साम्प्रतमपि निर्विशेषमासीदित्यर्थवर्णनानौचित्यादपि नास्य निर्विशेषपरत्वमित्यादि—वदति ॥

इद च यदि प्रळयावस्थायां निर्विशेषत्वनिरासाभिप्रायम्, तर्हि स्वागतम्, आवृतावस्थायां ब्रह्मणस्तत्पदवाच्यस्य कारणस्य सविशेषत्वं चाध्यारोपेण। अनावृतावस्थायां खलु तत्पदलक्ष्यार्थस्य निर्विशेषत्वमित्यद्वैताशय·। तत्र कारणावस्थायामनभिव्यक्तनामरूपेदंतादात्म्यम्, "सदेव सोम्येदमग्र आसीत्" इति वाक्येनोपक्षिप्य तस्य वस्तुगत्या सजातीयविजातीयस्वगतभेदराहित्यम्— "एकमेवाद्वितीयमि"ति संबोध्य पुनस्तदेव सदेव कारणं प्रस्तुत्योपादानत्वं "बहु स्यामि"त्युपन्यस्य "तत्तेजोऽसृजते"ति निमित्तकारणत्वमप्युपपाद्यते। तथाचैकमेव स्वकार्यपतितमन्यन्नास्तीत्युच्यते, इत्येकमेवपदप्रस्तुतोपादानत्वं ब्रह्मण एवाविकारेणोपादानत्वरूपं विवर्तोपादानतापरपर्यायं "बहु स्यामि"ति वाक्यार्थ इति भाष्याशय· ॥

तेन च "सदेवेदमि"ति प्रस्तुतं सामानाधिकरण्यं बाधायामेव, न विशेषणविशेष्यभावे, अत्यन्ताभेदे, प्रतीकादाविवाध्यासे, न वाऽन्यथेत्येव भाष्याशयः फलति। न हि विवर्तोपादानत्वमन्तरा स्वकार्यपतितस्यान्यस्य तद्यतिरेकेणाभावः सभवति। अत्र कार्यप्रपञ्चस्य ब्रह्मव्यतिरेकेणाभावबोधनेन कार्यप्रपञ्चसूक्ष्मावस्थारूपपरिणामिका·णाविद्याबाधोऽपि सूच्यते, न ह्यन्यथा तद्यतिरेकेणाभावो भवति।

विवर्तकारणता हि ब्रह्मणि सर्वस्य कल्पितत्वेन, इति सर्वं ब्रह्ममयमेव भवतीति विजातीयस्वगतसर्वनिषेधोऽर्थसिद्ध एव। सतः कारणस्य प्रळयावस्थस्य सृष्ट्यवस्थस्य चैकत्वं कालसंबन्धो वा नाद्वैतिभिरपि वार्यते ॥

जगन्मिथ्यात्वन्तु भाविबाधप्रतीतिमादायैव न तु ततः प्रागपि इति बहुश आवेदितमधस्तात्, इति ब्रह्मणः सप्रत्यपि निर्विशेषतावादो निरालम्बः। आवृतावस्थाया सृष्टिस्थितिसंहारकारणस्य सविशेषत्वं व्यावहारिकं कल्पनामात्रेण। अनावृतावस्थायान्तु परमार्थतो विशेषाभावान्निर्विशेषत्वमिति तु निष्कर्ष, इति किं सृष्टौ पारमार्थिकविशेषवत्त्वं ब्रह्मणोऽस्तीत्यादि विकल्प्य, तद्दूषणानि न क्षोदक्षमानि ॥

अत्र "सदेवे"त्यत्र सत्पदेनासद्रूपत्वं व्यावर्त्यते, एकपदेन प्रळयावस्थायां निवृत्तानामप्यबाधात् मायोपहितकारणात्मना सर्वस्यास्तित्व बोध्यते। उपादानेन सह नाशः खलु बाधो नाम। नचावृतावस्थायां बाधसभावनापि। तत्राविद्याया एव सूक्ष्मावस्थात्वेऽपि तस्या ब्रह्माश्रयविषयकतयैव प्रळयकाले सत्त्वात् तस्य ब्रह्मसम्बन्धस्य चानादित्वात् स्वतन्त्रतया मायासत्त्वं निषेद्धुमेव "सदेवे"त्येवपदम् ॥

अविद्या हि ब्रह्मावृण्वती सत्येव स्वप्रकाशेन ब्रह्मणैव स्वोपहितेन भास्यते, यावत्स्वसत्त्वं तत्सम्बन्धस्तु तिरोधानमात्रेण, न तु शरीरतयेति त्वन्यदेतत्। ब्रह्मणो व्यापित्वकारणत्वादयोऽपि धर्मा व्यावहारिका एव, न पारमार्थिकाः, इति न तैः परमार्थतो निर्विशेषत्वस्य क्षतिः ॥

तत्र द्रष्टृदृश्ययोर्दृशिसत्ताधीनसत्ताकत्वं तयोरुपाधिद्वारा, स्वतश्चाध्यासात्, इति न ताभ्यामपि ब्रह्मणो निर्विशेषत्वस्य हानिः। द्रष्टृत्वं हि दृशेरेवान्तःकरणोपाधिसम्बन्धादौपाधिकजीवभावावस्थायाम्, न तु सविन्मात्रतयेत्याद्युत्तरत्र विशदीभविष्यति, इति न दृशेरेव सकर्तृकतया, सकर्मकतया चाश्रयविषयाऽऽकांक्षा नियता। अन्तःकरणवृत्तिर्हि ज्ञाधात्वर्थः सत्त्वपरिणामः सकर्तृका,

सकर्मका चाश्रयविषयनियताकाङ्क्षा, न तु संविन्मात्रम्, इति संविन्मात्रस्य सविशेषत्वनियमकथा कथामात्रमेव ॥

यथाच वृत्तिरपि स्वप्रकाशा, सविषया च न जडा, परमते धर्मभूतज्ञानवत्, तथा बहुश आवेदितम्, इति तस्या एव ज्ञाधात्वर्थत्वं न विहन्यते। यदा तु वृत्त्यवच्छिन्नचैतन्यमेव घटादौ विषये सकर्तृकम्, सकर्मकं च, तदा न कोऽपि विरोधः। तस्य सोपाधिकं ज्ञानस्वरूपत्वम्, वृत्तेस्तु चैतन्यावच्छेदकत्वेन। तत्राद्यस्य प्रमाणजन्यत्वमौपाधिकम्, द्वितीयस्य तु ज्ञानत्वमौपचारिकमिति विशेषः। अज्ञाननिवर्तकं हि ज्ञानं नाम तत्त्वं तु वृत्तेरेवान्तःकरणस्येवाहमादिस्थले, इति तत्संविद्रूपत्वपक्षोऽपि न विरुध्यते ॥

जगत्कारणत्वं हि ब्रह्मण उपादानत्वेन। तदपि न परिणामित्वेन, न वा समवायिकारणत्वेन। सति चैवं भ्रमाधिष्ठानत्वरूपविवर्तोपादानत्वं ब्रह्मणि सर्वस्य कल्पितत्वं विना नोपपद्यते ॥

न च शरीरशरीरिभावः, कार्यकारणभावश्चैकः, येन शरीरशरीरिभावनिबन्धनमेव सामानाधिकरण्यं "सर्वं खल्विदं ब्रह्मे" त्यादौ सुवचम्। "तज्जलानि" नि हि कार्यकारणभावनिबन्धनमेव सामानाधिकरण्यं "मृद् घट" इत्यादाविव प्रतीयते। "सदेवेदम्" "सदद्वितीयमि"ति च कथमन्यथोपपद्यते? कार्यकारणभावनिबन्धनं सामानाधिकरण्यमन्यत्, शरीरशरीरिभावनिबन्धनं च तदन्यत्, उतैकम्? आद्ये सामानाधिकरण्यद्वयकल्पने गौरवम्। द्वितीये तु सर्वाधिष्ठानत्वापरपर्यायं विवर्तोपादानत्वमेव सर्वस्य ब्रह्मणा सामानाधिकरण्यप्रयोजकमिति फलति। तच्च सर्वस्य ब्रह्मणि कल्पितत्वं विना नोपपद्यते ॥

तत्राविद्याया ब्रह्मणाऽनादिराध्यासिकः सम्बन्ध.। तत्र ब्रह्मण· "सदेवेदमि"ति बाधायां सामानाधिकरण्यम् ॥

एतेन—साद्यध्यासस्थले सामानाधिकरण्यमपि—व्याख्यातम्। तत्र विवरणमतेऽविद्यायाः परिणामिकारणत्वाज्जगतः सूक्ष्मावस्थात्वम्। भामतीमते

तु ब्रह्मण एव सूक्ष्मावस्थात्वम् । तत्राद्ये "सर्वं खल्विदं ब्रह्मे" त्यादावविद्याद्वारा जगतः ब्रह्मणा तादात्म्यम्, भामतीमते तु साक्षात् । अत एव ब्रह्मणः कारणत्वात् सर्वत्रानुगम. साक्षात्, तत एव व्यापकत्वं च । शुक्तिरजतादिस्थले ह्यविद्याविषयेणाधिष्ठानेन विवर्तोपादानेनैव तादात्म्यं दृश्यते, सामानाधिकरण्यं वा, न तु परिणामिकारणेनाविद्यया। अयमेव ब्रह्मप्रपञ्चयोरपि। मृद्घटादिस्थले हि सदात्मना, मृदात्मना चोभयात्मना सामानाधिकरण्यमुभयोरमि परिणामित्वेन न संभवति, इति सतो विवर्तमानत्वेन, मृदः परिणामित्वेन चोपादानत्वमिति दृष्टचरम् । अयमेव न्यायो ब्रह्मप्रपंचयोरपि । अत्रापि जाड्याद्यनुवृत्त्या मायोपादानत्वम् । सदात्मनाऽनुवृत्त्या विवर्तोपादानत्वम्, नचात्र सत्ता घटस्यैव धर्मः ; व्यभिचारात्, बाधाच्च, किन्तु मायाया एव । अतो ब्रह्मविवर्तत्वमकामेनाप्यूरीकर्तव्यम् । इदमेवाभिप्रेत्योक्तम्—

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्" ॥

इति । अत्राचेतनानां स्वरूपतो ब्रह्मणि कल्पितत्वेन ब्रह्मोपादानकत्वम् । चेतनाना तूपाधिद्वारा तत्र कल्पनेनौपाधिकं ब्रह्मविवर्तत्वम् ॥

अत एव "सर्वं खल्विदमि"त्यत्र बाधायाम्, "अहं ब्रह्मास्मी" त्यादावभेदे सामानाधिकरण्यमिति व्यवस्था, इत्युपाधिमिथ्यात्वात् सर्वोपाधिविरहितप्रत्यगभिन्नसंविन्मात्रनिर्विशेषत्वमेव वेदान्तमहातात्पर्यविषयः परमं तत्त्वम् । तत्र "मृद् घट" इत्यादौ कार्यकारणभावस्थले कार्यगतविशेषराहित्यमविप्रतिपन्नम्, इति तेन न्यायेन ब्रह्मणोऽपि सर्वकार्यगतविशेषराहित्यम् ॥

इयान् विशेषः—यत् परिणामिकारणत्वान्मृदः कार्यगतविशेषराहित्येऽपि न सर्वविशेषराहित्यम्, ब्रह्मणस्तु विवर्तोपादानत्वादनावृतचिन्मात्रावस्थायां सर्वविशेषराहित्यम् । आवृतावस्थायां तु तत्तद्विशेषवत्त्वमपि । अपरोऽयं विशेषः—यत् परिणामिकारणस्य येन केनचन रूपेण कार्यविशेषरूपेण.

स्वरूपेण वा विशेषवत्तानियमः, विवर्तोपादाने तु भाविबाधोपपत्त्या सर्वतद्विवर्त-राहित्यम्—नष्टे विवर्तोपादानताप्रयोजक आवरणे; अन्यदा तु सविशेषत्व-नियमः—इति ॥

अत एव कारणसमसत्ताकं कार्यं परिणामः, कारणविषमसत्ताकं कार्यं विवर्तः, अभेदस्तूभयत्र समान इति विभागः। अत एव यत्र सविशेषत्वम्, तत्राधिष्ठाने तदारोपमात्रं कार्यत्वमिति नियमात् सविशेषत्वपरमार्थत्वे कार्यत्वस्या-नित्यत्वप्रयोजकत्वनियमव्याहतिः। न ह्यारोप्यस्यैवाधिष्ठानस्याप्यधिष्ठानापेक्षा सम्भवति ॥

अधिष्ठानत्वं हि किञ्चिद्रूपेणाज्ञानम्, किञ्चिद्रूपेण ज्ञानं चापेक्षते। न चारोप्यस्याधिष्ठानत्वम्। अत एव परस्पराध्यासेऽधिष्ठानस्य न स्वरूपतोऽध्यासः, किन्तु तत्संसर्गमात्रस्येति तत्र तत्र व्यक्तम्। अत एव सविशेषब्रह्मभावोऽवा-न्तरमुक्तिरेव, न परमा मुक्तिरित्यद्वैतिनः ॥

न हि निर्विशेषं ब्रह्म कारणम्, किन्तु मायोपहितमेवेति हि राद्धान्तः, इति न सर्वदा कार्यभावप्रसङ्गः; सविशेषस्यैव कारणत्वात्। तथाचानादावपि समारे तत्तज्जीवाज्ञाननिवृत्तौ न परममुक्तिविरोधः ॥

> यत्तु—अविद्या सविशेषा वा, निर्विशेषा वेति विकल्प्य सविशेषत्वे कार्यत्वेन तस्या मूलकारणत्वासिद्धिः—इति ॥

तत् परमतेऽपि प्रकृतेः सविशेषाया मूलकारणत्वाङ्गीकाराद् न क्षोदक्षमम्। ब्रह्मणोऽप्येवं सविशेषस्य मूलाधिष्ठानानपेक्षेति तु तदैव स्यात्, यद्युभयमप्यु-पादानं स्यात्। न चोभयोपादानत्वं परमते, अद्वैतमते तु चिन्मात्ररूपेण ब्रह्मणः, मायायाश्चोपादानत्वस्वीकारात् सविशेषस्याप्यनाद्यध्यस्तरूपस्य स्वीकारात् सविशेषस्य मूलाधिष्ठानापेक्षा न विरुध्यते। यथाच प्रकृत्युपादानत्वातिरिक्तं सविशेषस्य नोपादानत्वं परमते, तथा तदीयनिबन्धेषु व्यक्तम् ॥

सर्वथा तु निर्गुणसाक्षात्कारान्तरङ्गोपायसविशेषोपासनस्याद्वैतसिद्धान्तेऽपि स्वीकारात् सविशेषेऽप्यवान्तरतात्पर्यं वेदान्ताना नानभिप्रेतम् , विप्रतिपत्तिस्तु तत्र वेदान्तानां पर्यवसान एव । श्रुतिर्हि " अथात आदेशो नेति नेति " " एकमेवाद्वितीयमि " त्यादिरेकविज्ञानेन सर्वविज्ञानप्रतिज्ञापरा बिशेषनिषेधेन निर्विशेषमेव परिशेषयति । अत एव सप्तमाध्याये—

" यद् ज्ञात्वा नेह भूयोऽन्यद् ज्ञातव्यमवशिष्यते "

इति प्रतिज्ञाय—" ज्ञानी त्वात्मैव मे मतम् ", " नच मत्स्थानि भूतानि " इत्यादिना निर्विशेपत्मवादमेव भगवान् समर्थयति ॥

अत एव सजातीयाद्विजातीयात्स्वगताच्च भेदनिषेधपरा"ण्येकमेवाद्वितीयम्", " अथात आदेशो नेति नेती"त्यादीनि ॥

यत्तु—सजातीयादिसत्त्वे तद्भेदस्यावश्यकत्वम्—इति, को वाऽत्र विप्रतिपद्यते–सजातीयवत् तद्भेदस्यापि सत्त्वे । उभयं चेदं ब्रह्मणि कल्पितमूरीक्रियत एव, परमार्थतः खलु ब्रह्मणि तयोरुभयोरपि निषेधोऽध्यारोपापवादनयेनाद्वैतसिद्धान्ते ॥

एतेन—निर्विशेषत्वमपि—व्याख्यातम् ; अध्यारोपेण प्रसक्तविशेषनिषेधपरत्वाद् निर्विशेषपदस्य । सत्यमत्र भेदवद्भेदराहित्यमपि मिथ्या , किमेतावता ? न चैतावता भेदसत्यत्वापत्तिरत्रेति मिथ्यात्वमिथ्यात्वेऽपि न प्रपञ्चसत्यत्वमिति प्रकरणे व्यक्तं सिद्धान्तलेशसङ्ग्रहादौ ॥

वस्तुतस्तु—भेदराहित्यस्य ब्रह्मस्वरूपत्वात् पारमार्थिकत्वपक्षोऽप्यद्वैतसिध्यादौ व्यक्तः । तथाच सजातीयाद्विजातीयात्स्वगताच्च भेदनिषेधेन पञ्चमीनिर्देशेऽपि स्वगतशब्देन भेदस्यापि विवक्षणात् भेदनिषेधोऽपि विवक्षित एव ॥ अत एव तत्र तत्र ब्रह्म निर्विशेषमिति श्रुतिः ॥

इयं च विभ्रमविशेषराहित्यमेव बोधयतीति परमार्थप्रकाशिका ॥

तत्र विभ्रमविशेषपदे यदि कर्मधारयसमासः तर्हि विशेषपदस्य श्रुतिगतस्य सङ्कोचेन लक्षणा। यदि तु सर्वस्य विशेषस्य विभ्रमत्वं भ्रमसिद्धत्वं वा तेन विवक्ष्यते, तर्हि स्वागतमेव; ब्रह्मणि विशेषाणां सर्वेषामध्यारोपाङ्गीकारात् ॥

"तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम्।
निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ॥"

इति ब्रह्मसिद्धिरप्यत एवोपपद्यते ॥

अत्र प्रथमं निर्विकल्पपदं निर्विशेषपरम्, द्वितीयं तु निर्विकल्पज्ञानविषयत्वपरम्, इति न पौनरुक्त्यं परमार्थप्रकाशिकोक्तरीत्या ॥

"यतो वाचो निवर्तन्त" इति श्रुतिरपि ब्रह्मणो निर्विशेषस्य लक्षणयैव बोधः, न तु शक्त्येत्यर्थपरेतीष्टसिद्धिः। तत्र यच्छब्देन लक्ष्यस्वरूपानुवादः, "वाचो निवर्तन्ते" इत्यादिभिरगोचरपदेन वा शक्तिनिषेधः। तेन च विनापि शक्तिं लक्षणेक्षुक्षीररसादिमाधुर्यादाविवेति ज्ञाप्यते, येनावाच्येऽप्रमेये वा न लक्षणेति शङ्कापि निरस्ता। आकृत्यधिकरणेन व्यक्तेरशक्याया अपि लक्षणया बोधो विशदः। प्रमाणान्तराप्रमेयत्वं सगुणब्रह्मणोऽप्यविशिष्टम्। निरपेक्षप्रमाणे श्रुतौ, तदर्थे वा प्रमाणान्तरप्रमेयत्वकथा कथामात्रम्। श्रुतिप्रमेयत्वं तु निर्विशेषस्यापि समानम्। अतो न मम माता वन्ध्येति न्यायावसरः ॥

निर्गुणनिरञ्जनादिपदान्येव निर्गुणत्वनिरञ्जनत्वादिविशेषणवैशिष्ट्यपराणीति न विशेषणराहित्यं तदर्थः, आरोपितसर्वविशेषशून्यपरत्वात् तेषां पदानाम्। अत एव निरञ्जनमिति पदान्तरम्। तेन हि विशेषाणां तत्र कल्पनामात्रम्, न तु तैर्ब्रह्मणः संबन्धलेशोऽपीति सूच्यते। तथाच भाष्यमध्याससमर्थनानन्तरं—"तत्रैवं सति तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि

स न सम्बध्यते"—इति । "यस्सर्वज्ञः सर्ववित्" इति श्रुतिरप्यद्रेश्यत्वादिना निर्विशेषतया प्रस्तुतस्यैवारोपेण भूतयोनित्वं यदुपक्षिप्तम्, तस्यैवोपपादनपरा कल्पितमेव सविशेषत्वमनुवदति, न तु वस्तुगत्या ; तटस्थलक्षणविषयैवास्य वाक्यस्य प्रवृत्तिरिति हि जन्माद्यधिकरणे भगवत्पादा विशदयन्ति। कारणवाक्यानि कानिचित् सद्वितीयं प्रस्तुत्य निर्विशेषमुपसंहरन्ति—"यतो वा इमानि भूतानि जायन्ते"—आनन्दो ब्रह्मेति व्यजानात्"; "सदेव सोम्येदमग्र आसीत्" एकमेवाद्वितीयम्" "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः—"नेह नानास्ति किञ्चन" इत्यादीनि, यानि—प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वं विवेचयन्ति, कानिचन निर्विशेष प्रस्तुत्य- सविशेषपरतया, यथा परविद्यायाम्—"यत्तदद्रेश्यमग्राह्यम्" –"भूतयोनिं परिपश्यन्ति धीराः" "यस्सर्वज्ञः सर्वविदि"त्यादीनि, येन स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वं मिथ्यात्वं निरूप्यते। इदमेव मिथ्यात्वं तुरीयतयाऽद्वैतसिध्यादौ समर्थ्यते। अतः "यस्सर्वज्ञ" इत्यादिवाक्यं न सविशेषमात्रपरमार्थतापरम्, येन तदनुसारेण निर्गुणादिपदानां हेयगुणादिनिषेधपरतया सङ्कोचो युज्येत। "नात्र रजतं" इति बाधवद् निर्गुणादिपदं बाधपरमेव, यद्धि भ्रान्तिप्रसक्तं निषेधति, न तु प्रमाणप्राप्तम। तेन च पारमार्थिकत्वभ्रमो निरस्यते। यथाच पारमार्थिकत्वेन निषेधेऽपि न व्युत्पत्तिविरोधः, तथा लघुचन्द्रिका-विठ्ठलेश्यादौ व्यक्तम्। व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्थले सर्वत्रेयमेव गतिः। "विना हेयैर्गुणादिभिः" इति हि सर्वानपि ब्रह्मणि प्रसक्तान् गुणान्, दोषान् निवारयन्ती, आदिपदप्रयोगात् सर्वविशेषनिषेधमेवाभिप्रैति। गुणत्वं हेयत्वं च व्याहतम् ॥

न चात्र गुणशब्देन सत्त्वादिगुणविवक्षा, तेषां ब्रह्मणि भ्रान्त्याऽप्यप्रसक्तत्वेनाप्रसक्तप्रतिषेधापत्तेः। अत एवात्र न "—अग्नीषोमीयं पशुमालभेत" "न हिंस्यात्सर्वा भूतानी" ति न्यायावसरः, गुणविशेषविधानाभावात्, सर्वज्ञादि वाक्यानामनुवादपरत्वेन विध्यभावात्। "यस्सर्वज्ञस्सर्ववित् तस्मादेतद्ब्रह्म

नाम रूपमन्नं च जायते, अतः स भूतयोनिः, योऽद्रेश्यत्वादिना सर्वविशेषरहित इति हि तत्र योजना। निर्गुणश्रुतेः सङ्कोचेन नयन हि जीवो निर्गुण इति प्रयोगस्यापि यत्किञ्चिद्गुणनिषेधपरतया साधुत्वापत्त्या न युक्तम्। न च तथा प्रयोगो दृश्यते॥

यत्तु—कामं स्यात्, प्रकरणानुसारेण हि वाक्यार्थ—इति॥

तदिदमप्रसक्तप्रतिषेधापत्त्या प्रकरणानुसारेण वाक्यार्थवर्णने कारणवाक्यं प्रस्तुत्य प्रवृत्तनिषेधवाक्यानामपि तद्गतसर्वनिषेधपरतया विवरणस्यैव युक्तत्वेन च न युक्तम्॥

यत्तु—जीवेऽपहतपाप्मत्वादिस्वभावे गुणराहित्ये सत्यपि सत्त्वादिगुणप्रकृतिसम्बन्धयोग्यताऽस्ति, ब्रह्मणि तु साऽपि नास्तीति पुष्कलं निर्गुणत्वम्—इत्यादि॥

तत्र शुद्धस्य प्रत्यगात्मनो जीवस्वरूपस्यापि सत्त्वादिगुणराहित्यस्य गीतादिषु प्रतिपादनात् तत्रापि न निर्गुणपदप्रयोगोऽसाधुः स्यात्। अद्वैतमते तु तत्रापि शुद्धस्य निर्गुणत्वमव्याहतम्। को वा विप्रतिपद्यते—गुणपदं सत्त्वादिगुणपरमपीति? इदमेव तु विप्रतिपन्नम्, सत्त्वादिगुणपरमेव ब्रह्मणि निर्गुणपदे गुणपदमिति। गुणसामान्यनिषेधपरत्वे का वाऽनुपपत्तिः? यदि सत्यकामत्वादिगुणाम्नानात् तथा, तर्हि सत्यकामादिविशिष्टाद् अन्यत् निर्गुणं ब्रह्मेति कुतो न विषयविवेकः? प्रत्याम्नायन्यायेन हि विधिनिषेधयोर्व्यवस्था—प्रकृतौ विधिः, विकृतौ निषेधः—इति। सत्यपि गुणनिषेधेऽप्रसक्तप्रतिषेधो न कथम्?

उक्तं चानुपदमेव "जीवे सत्त्वादिगुणप्रकृतिसंबन्धयोग्यताऽस्ति, ब्रह्मणि न साऽपीति पुष्कलं निर्गुणत्वमिति। अतो ब्रह्मणो मायोपहितस्य सगुणत्वम्, तदनुपहितस्य निर्गुणत्वम्। मायोपहितस्य त्वनादिसिद्धमाया-तत्संबन्धादिनिबन्धनं सगुणत्वमित्येव साधुः पन्थाः। न चाविद्यास्वरूपे, तस्य ब्रह्मणा संबन्धे च विप्रतिपत्तिः, किन्तु तस्या आवरणशक्तौ, शुद्धब्रह्मणि मायाया आश्रय-

विषयतयोरेव। व्यवस्थापयिष्यन्ते चाविद्यायां प्रमाण-तद्भावरूपत्व-तदनिर्वचनीयत्व-ब्रह्म-जीवाश्रयत्व-ब्रह्मविषयकत्व-तन्निवर्तकतन्निवृत्तय उत्तरत्र। तदेवं सर्वात्मना सर्वविशेषराहित्य ब्रह्मण उपपादितमद्वैतामोदसिद्धान्तितम् ॥

तत्र "सत्यं ज्ञानमनन्तं ब्रह्म" "प्रज्ञानं ब्रह्मे"त्यादिकं ब्रह्मस्वरूपपरमिति संप्रतिपन्नम्। तत्र ज्ञानपदस्य अर्शआद्यजन्तत्वे ज्ञानवत्त्वं ब्रह्मणो लक्षणं स्यात्, न तु ज्ञानस्वरूपत्वम्। तथाच न्यायवैशेषिकादिमत इव ब्रह्मणोऽचेतनत्वापत्तिः। अथ यदि तद्वारणार्थं स्वरूपपरत्वं विवक्ष्यते, तर्हि न ज्ञानगुणवत्त्व सिध्यति। अर्थद्वयविवक्षा त्वेकस्यैव तन्त्रेणावृत्त्या वा सति प्रमाणे भवति। न च ज्ञानस्वरूपत्त्वं ज्ञानवत्व चोभयं बोधयदेकमप्यस्ति प्रमाणम्, इति परा‍ते स्वरूपज्ञानसिद्धान्तकथैवास्तमियात् ॥

"प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम्।
वचसाम्, आत्मसंवेद्यं तज्ज्ञानं ब्रह्मशब्दितम् ॥"

इत्यादिवचनानि तु ज्ञानस्वरूपत्वमेव ब्रह्मण. प्रतिपादयन्ति, न तु ज्ञानाश्रयत्वम्। "तदैक्षते"त्यादिकं तु ब्रह्मण औपाधिकमीक्षणं प्रतिपादयति, न तु स्वाभाविक ज्ञानाश्रयत्वम्; अन्यथा सृष्टिस्थितिसंहाराणां तत्तत्सङ्कल्पवशात् सार्वदिकत्वं स्यात्, तेन च सुन्दोपसुन्दन्यायेनैकमपि न स्यात् ॥

"विज्ञानघनः" इत्यादिश्रुतयोऽप्यत एव व्याख्याताः। तद्घनत्वं नाम तदेकस्वरूपत्वम्, रसघनादिशब्दा अप्युपचारेण रसैकस्वरूपत्वस्यैव बोधकाः। अत एव "विज्ञानं ब्रह्मेति व्यजानात्" "आनन्दो ब्रह्मेति व्यजानात्" इत्यादिश्रुतयः। "प्राणो ब्रह्मेति व्यजानात्" इत्यादाविव स्वरूपमात्रमेव हि विज्ञानशब्दो गोचरयति। अत एव "आनन्दो ब्रह्म" त्यत्र 'आनन्द'पदं पुंलिङ्गम्। स्वयंज्योति.पदप्रयोगस्तु ब्रह्मणि नान्यथोपपद्यते ॥

"ज्ञोऽत एवे'ति सूत्रं तु जीवस्यैव कथञ्चन ज्ञानस्वरूपत्वं तदाश्रयत्वं च विषयीकरोति, न तु ब्रह्मण.। अत ईक्षणादिकमपि मायोपादानप्रयुक्त

ब्रह्मणो न स्वाभाविको धर्म । सति चैवं "विज्ञातारमरे केन विजानीयात्" इति स्वाभाविकविज्ञातृत्वनिषेधेन ज्ञानस्वरूपत्वमात्रमुपपादयतीति वक्तव्यम् । विज्ञातृत्वमात्रविवक्षायामस्य स्वरूपज्ञानत्वसिद्धान्तः किंनिबन्धनः ? अतो विज्ञानस्वरूपस्यैव ब्रह्मणोऽज्ञानेनावृतस्य विवर्त एव सर्वोऽपि प्रपञ्च इति ब्रह्मणो ज्ञानस्वरूपत्वप्रतिपादनपराण्यपि वचनानि निर्विशेषत्वस्यैवोपबृंहकाणि ॥

अत एव "सर्वं खल्विदं ब्रह्मे"ति सामानाधिकरण्यम् । इदं हि बाधायामेवेदंरजतमितिवदिति पूर्वमेवोपपादितम् । तेन चाद्वितीयपदेनाप्येकवाक्यता । निर्विशेषत्वं चात्रार्थिकम् ॥

इदमत्र सहृदयो भूत्वा भवान् पश्यतु—इदं रजतमित्यादौ किमिदंरूपं तदभिन्नं वा रजतमस्ति सत्ख्यातिवादेऽपि । कि पुरोवर्ति रजतकार्यं करोति ? किं तयोरभेदोऽन्यथाख्यातिवादे, अख्यातिवादे, असत्ख्यातिवादे, अन्यत्र वाऽनिर्वचनीयख्यातिं विहाय । अनिर्वचनीयख्यातिवादे यावद्बाधं रजतलाभनिबन्धन आनन्दलाभः सर्वानुभवसिद्धः । तथाच भाष्यम्—तथाच लोकेऽनुभवः—"शुक्तिका हि रजतवदवभासते" इति रजतवदिति वत्कारपुरस्सरम् ॥

शुक्लो घट इत्यादि तु विशेषणविशेष्यभावे समानाधिकरणम् । अतस्तस्मादस्य विशेषः । न चात्र मृद् घट इतिवत् कार्यकारणभावप्रयुक्तमपि सामानाधिकरण्यम्, मृद इव ब्रह्मणोऽपि विकारित्वापत्तेः । अत एव भास्करमतात् श्रीभाष्यसिद्धान्तस्यापि विशेषः, अन्यथा तन्मतप्रवेशापत्तिः । अविकृतब्रह्मोपादानतावादो हि शुक्तिरूप्यादिस्थलदृष्टान्तानुसारेणाद्वैतमत एव, नान्यत्र ॥

> एतेन—ब्रह्मणि रावकाराङ्गीकारे निर्विकारश्रुतिविरोध इति चेत्, नन्वियमपि श्रुतिरेव । अस्या परमन्यथाकरणं कथमिति चेत्, तदपि श्रुतिरेव दर्शयतीति—परास्तम् ॥

अन्यथानयनेन श्रुत्युपष्टम्भो हि सर्वत्र समानः, इति कथं विशिष्टाद्वैतमेव तत्त्वमिति समीक्षतां भवान् ॥

अद्वैतपदं हि केवलं भगवत्पादानां सिद्धान्ते, श्रीभाष्यसिद्धान्ते तु विशिष्टपदघटितम्। तत्र ब्रह्माद्वैतमिति केवलब्रह्मपदेन समन्वितं कथं विशिष्टाद्वैतपदं बोधयेत्। एकत्वमद्वैतपदार्थः, ब्रह्माद्वैतं हि ब्रह्मैकत्वपरम्, न चिदचिद्विशिष्टब्रह्मपरतामर्हति ; विशेषणभेदप्रयुक्तत्वाद् विशिष्टभेदस्य, अत एव-- ब्रह्मणो ज्ञानरूपतायाः, सन्मात्रतायाश्च---

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसाम्, आत्मसवेद्यं तज्ज्ञानं ब्रह्मशब्दितम्॥"

इति वचनसिद्धाया अनुपपत्तिः परमते। न हि सतो ज्ञानरूपत्वं सन्मात्रातिरेके युज्यते। सन्मात्रातिरिक्त ज्ञानं धर्मभूतं ज्ञानं जन्यं नित्यं वा नात्र निषेधामः, किन्तु सन्मात्रस्य स्वरूपज्ञानातिरेकमात्रम्। यथाच धर्मभूतज्ञानमात्रस्य सन्मात्रस्योरीकारे ब्रह्माचेतनत्वापत्तिः, तथोपपादितमधस्तात्॥

सन्मात्रं हि ब्रह्म न सत्ताविशिष्टम्, येनाद्वैतभङ्गः स्यात्। न हि घटादिसाधारणं सन्मात्रम् ; तेषामेकसत्तावादे सन्मात्रतादात्म्येऽपि सद्रूपत्वाभावात्। सत्तात्रैविध्यवादेऽपि घटादिसत्त्वविलक्षणमेव सत्त्वं सन्मात्रत्वं ब्रह्मणः। सत्तात्रैविध्यप्रक्रिया चाधस्तादेव प्रापञ्चि॥

यद्यपि "सदेव सोम्येदमि"ति मायोपहितं सन्मात्रमुच्यते, न तु निर्विशेषम् ; मायोपहितस्यैव कारणत्वात्, तथापि सत्पदं न सत्ताविशिष्टपरम् ; "सत्यं ज्ञानमित्यादिना ब्रह्मणः सन्मात्रत्वबोधनात्। न ह्यबाध्यत्वातिरिक्तं सत्त्वं ब्रह्मणोऽसाधारणं रूपम्। सत्तावैशिष्ट्यं हि घटादिसाधारणम्॥

एतेन---'आसीत्' इतिपदमपि-- व्याख्यातम्। मायोपहितस्य कालसंबन्धाविरोधात्। अत एव 'अग्रे' इति पदम्। न च तन्निर्विशेषम्॥

तत्र प्रकृतिविशिष्टस्योपादानत्वं न प्रकृतिमात्रोपादानत्वेन, किन्तुब्रह्मोपादानत्वेनापि। तत्र प्रकृतिः परिणामिकारणम्, ब्रह्म विवर्तोपादानम्। अत

एव "सर्वं खल्विदं ब्रह्मे"ति बाधाया सामानाधिकरण्यम्। अन्यथा कथं ब्रह्मोपादानत्वनिर्वाहः ?

यत्तु—प्रागवस्थाविशेषस्यैवोपादानपदार्थतया तस्य विशेषण इव विशेष्येऽपि सत्त्वात् न ब्रह्मणो गौणमुपादानत्वम्—इति ॥

तत्र विशिष्टोपादानतायां विशेषणमात्रस्य परिणामित्वेऽपि विशेष्यस्यापि परम्परयाऽऽश्रयत्वेनाश्रयत्वमात्रादुपादानशब्दवाच्यत्वमिति भवदाचार्योक्त्या साक्षाद्विशेषणस्येव विशेष्यस्य प्रागवस्थावैशिष्ट्यं बाधितम्। प्रागवस्था हि स्थूलकार्यदृष्ट्यैव, न तु प्रकारेण। न च स्थूलकार्यप्रागवस्थारूपत्वं साक्षात्तदपरिणामिनो ब्रह्मण. सम्भवति, इति कथं मुख्यमुपादानत्वं ब्रह्मणः ? इत्यगत्या तदुपादानत्वनिर्वाहाय शुक्तिरजतन्यायेन विवर्तोपादानत्वमेव स्वीकार्यम्। नियामकत्वमात्रेणोपादानत्वकथा हि ब्रह्मणः श्रीजयतीर्थीयन्यायसुधायामप्यनूद्य निराकारि ; ब्रह्मनिमित्तकारणतामात्रसिद्धान्तसाधारण्यात् ब्रह्मनियामकतायाः ॥

यदा तु—"आत्मा वा इदमग्र एवासीदि"ति श्रुत्यन्तरानुसारेण सत्पदमप्यात्मपरमेव। अत एव चेक्षत्यधिकरणमपि, तदा मायोपादानत्वमपि विहाय ब्रह्मोपादानत्वमात्रं विशेषणांशस्य मायाया निमित्तकारणत्वमात्रविवक्षया, इति विवर्तोपादानत्वं विना नान्या गतिः ॥

अद्वैतामोदस्तु—सद्विद्याया उभयोपादानतापरतायामपि विशेष्यांशस्य तदुपादानत्वेनैवोपादानत्वं परम्परयेति मतनिरासार्थम्—'आत्मा वा इदमि'ति वाक्ये केवलात्मोपादानत्ववर्णनमद्वैतमेव व्यवस्थापयतीत्यभिप्राय एव, न तु तयोर्भिन्नवाक्यत्वाभिप्रायः। तत्र "कारणवाक्यानामैकार्थ्याभावादि"त्युक्तिस्तु सर्वत्र न विशिष्टकारणत्वमेव, किन्तु विशेष्यमात्रकारणत्वाम्नानमपि वर्तत इत्याशयेन। न हि सदात्मशब्दयोर्विशिष्टपरयोः परमते तदभिमतचिदचिद्विशिष्टपरत्वम्—सत्पदेनाचिद्विशिष्टस्य, आत्मपदेन चिद्विशिष्टस्य च ग्रहणेऽपि चिदचिद्विशिष्टकारणस्याबोधनात्। न हि सूक्ष्माचिद्विशिष्टग्रहणमात्रेण, तादृशचिद्विशिष्ट-

मात्रग्रहणेन वैकेन सर्वविज्ञानप्रतिज्ञोपपद्यते। अद्वैतमते तु निर्विशेषब्रह्ममात्र-विज्ञाने एकविज्ञानेन सर्वविज्ञानं सूपपादम् ॥

वस्तुतस्तु— एकविज्ञानेन सर्वविज्ञानमेकस्य चिदचिद्विशिष्टस्य ग्रहणेन सूपपादम्। कारणविज्ञानेन कार्यविज्ञानं हि साक्षात्परम्परया वा परिणामि-कारणविज्ञानेन न सम्भवति। परिणामिकारणतायां हि—कार्यकारणयोर्ना-त्यन्ताभेदः कारणरूपेण कार्यरूपेण च। "कार्यात्मना तु नानात्वमभेदः कारणात्मने"ति सिद्धान्तात्। न हि मृदात्मना जगतीतलवर्तिनां सर्वेषां विकाराणां ज्ञानं भवति, अद्वैतमते तु ब्रह्मविवर्तमानताया विवक्षणात् तत्र चो-पादानव्यतिरेकेण कार्यस्वरूपस्यैवाभावाद् नान्यत् ज्ञातव्यमवशिष्यत इति विधयैकविज्ञानेन सर्वविज्ञानम्। इदमेवाभिप्रेत्य भगवान् गायति—

"ज्ञानं विज्ञानसहितं प्रवक्ष्याम्यनसूयवे।
यत् ज्ञात्वा नेह भूयोऽन्यद् ज्ञातव्यमवशिष्यते" ॥

इति। भक्तियोगविषयस्य सविशेषस्यापि सर्वविशेषरहितनिर्विशेषज्ञान एव मुख्यं पर्यवसानम्—इति च। अत एव—" ज्ञानी त्वात्मैव मे मतम्," "नच मत्स्थानि भूतानि" इत्यादि ॥

अत एव कुत्रचन मायोपहितस्य, कुत्रचनात्ममात्रस्य, "तम आसीत् तमसा गूढमग्रे प्रकेतम्" "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाम्" इति प्रकृतिमात्रस्य च कारणत्वाम्नानम्। तदेवमुभयोरप्युपादानत्वाम्नानं तटस्थलक्षणविधया विवर्तोपादानशुद्धनिर्विशेषपरत्वमेव गमयति। एवं स्वतन्त्रोपादानताप्रकारभेदे सति गुणोपसंहारनयेन शाखोपसंहारनयेन वा किमिति सर्वत्र चिदचिद्विशिष्टपरत्वं लक्षणया स्वीकर्तव्यम्? तत्र तम आसीदि-त्यादौ तमःपदस्य अचित्परस्य चिदचित्परत्वं कथं विना लक्षणया? गुणोपसंहारादिन्यायो हि ज्ञेयं स्वरूपं सर्ववाक्यैकवाक्यतया व्यवस्थापयति, न त्वन्यत्र श्रूयमाणस्यान्यपरस्य पदस्य सर्वार्थपरत्वमपि शक्त्यैव ॥

"आत्मा वा इदमग्र आसीत्। स ऐक्षत लोकान्नु सृजा" इत्यत्रात्मपदं मायोपहितपरमेव, न चिदचिद्विशिष्टपरम्; प्रमाणाभावात्, अनुपयोगाच्च। तत्राद्वैतमतेऽपि यद्यपि कारणवाक्यानि विशिष्टपराण्येव, तथापि तत्रैकविज्ञानेन सर्वविज्ञानं न विशिष्टविज्ञानेन, किन्तु विशेष्यमात्रविज्ञानेन; तस्यापि कारणत्वात्। निर्विशेषं हि ब्रह्म प्रधानतमं विज्ञेयं तटस्थलक्षणविधया मायाद्वारैव प्रथमं बुद्धावारोपयितुं शक्यते। न हि शास्त्रमिदन्तया निर्विशेषं बोधयति; अविद्यानिवृत्तिपरत्वाच्छास्त्रस्य॥

अत्र सदेवेति वाक्ये मायोपहितग्रहणं न सच्छब्दस्यैव विशिष्टपरत्वमाश्रित्य, किन्त्विदंपदसामानाधिकरण्यमहिम्नेदंपदार्थविशिष्टस्यैव। इदमर्थोऽनभिव्यक्तावस्थनामरूपात्मको मायाया एव तत्कारणस्य तत्सूक्ष्मरूपत्वात् सूक्ष्माचिदेव॥

तत्र तत्र सत्पदेन विशिष्टग्रहणवर्णनमप्येतदाशयमेव। सत्पदं तु शक्त्याऽऽत्मपरमेव। "आत्मा वा इदमग्र आसीत्" इत्यत्रात्मपदमप्यनेन न्यायेन विशिष्टपरम्। तत्रेदमर्थमायाया इव सदात्मशब्दार्थब्रह्मणोऽप्युपादानत्वमपि सद्विद्यादितात्पर्यविषय उभयोरप्युपादानत्वाभिप्रायेणेति तु तत्त्वम्। केवलब्रह्मकारणतापराणि—"यतो वा इमानि भूतानि जायन्ते—आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादीन्यपि हि वाक्यान्याम्नायन्ते। तथा केवलप्रकृतिकारणतामात्रपराणि, उभयोपादानपराणीति तु निष्कर्षः। तत्राद्वितीयमित्यविद्याया अपि निषेधो भाविबाधप्रतीत्या पूर्वोक्तरीत्योहनीयः; "अविद्या सह कार्येण नासीदस्ति भविष्यति" इति वचनात्॥

अनभिव्यक्तनामरूपात्मकाविद्यानिषेधेनार्थसिद्ध एव, नामरूपात्मककार्यरूपजगतोऽपि सः। अतोऽविद्यानिषेधे न जगतो निषेधाभावः। न हि वाक्यप्रतिपन्नत्वमात्रेण प्रामाणिकत्वम्; अन्यथा "जर्तिलयवाग्वा वा जुहुयाद् गवीधुकयवाग्वा वे"ति प्रतीतस्य "अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसा-

ऽग्निहोत्रं जुहोति" इति च वाक्यद्वयस्यापि प्रामाण्यापत्तेः। अतो न प्रतीतं प्रामाणिकम्, न वाऽबाध्यम् ॥

तत्र यदि दृष्टान्ते पूर्वत्र तात्पर्याभावात्, निषिद्धत्वाच्च न तात्पर्यम्, उत्तरवाक्यार्थ एव तु तात्पर्यम्, तर्हि प्रकृतेऽपि "सदेवेदमि"ति प्रतीतस्याद्वितीयमिति निषेधात्, पूर्वत्राविद्यासबन्धांशेऽनुवादमात्रत्वादविद्यानिषेधो न विरुध्यते ॥

शास्त्रप्राप्तस्य शास्त्रेण निषेधायोगस्तूभयोरपि तात्पर्यविषयत्वविवक्षायामेव, यत्रोभयप्रामाण्यम्, यथा—"अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाति" इत्यादौ। "यजतिषु येयजामहं करोति नानूयाजेषु" इत्यत्रापि तन्न्यायस्तु न प्रवर्तते; पर्युदासविषया विरोधपरिहारात् ॥

सगुणवाक्यानि तूपासनापराण्यप्युपास्यासत्यतायामपि नाप्रमाणानि, आरोपितरूपेणाप्युपासनासम्भवात्, इति सगुणवाक्यानां न गुणेषु तात्पर्यम्, किन्तु निषेधापेक्षितनिषेध्यसमर्पकत्वमेव ॥

सगुणनिर्गुणवाक्ययोरविरोधो हि यथाश्रुतमुभयप्रामाण्येनाद्वैतमते निर्वहति, अन्यत्र तु निर्गुणवाक्यानामपि सगुण एव सङ्कोचेन प्रामाण्यस्वीकारात् यथाश्रुतार्थाविवक्षणात् निर्विशेषांशेऽप्रामाण्यमेव ॥

तत्र सामान्यविशेषन्याय उभयोरपि विधित्वेन प्रामाण्यनिश्चयेनान्यतरस्यानुवादत्वे, यथा—"आहवनीये जुहोति" "पदे जुहोति" इति। तत्र ह्युभयोरपि सावकाशत्वम्। सगुणनिर्गुणवाक्ययोरुभयोरपि सगुण एव तात्पर्ये तु निर्गुणवाक्यं न स्वतन्त्रं प्रतीयमानेऽर्थे प्रमाणम् ॥

उपसंहारन्यायोऽपि सामान्यविधेरस्पष्टत्वे, विशेषविधेः स्पष्टत्वे च। स च विध्योरेव; यथा—"आग्नेयं चतुर्धा करोति" "पुरोडाशं चतुर्धा करोति" इत्यादौ। न चात्र सोऽपि; एकशाखागतत्वादुभयोः, उभयोरपि स्पष्टत्वात्,

एकप्रकरणगतत्वाच्च। "सदेवेदमि"ति "एकमेवाद्वितीयमि"त्यत्र नान्यत्रान्यतरस्योत्कर्षकथापि ॥

"न हिंस्यात् सर्वा भूतानि" इति निषेधः पुरुषार्थः, "अग्नीषोमीयं पशुमालभेते"ति तु क्रत्वर्थः, इति विषयभेदात् नात्र सामान्यविशेषन्याय इत्यन्यत्र विस्तरः ॥

"सदेव सोम्येदमग्र आसीदि"ति "एकमेवाद्वितीयमि"ति च वाक्यभेदेऽप्येकवाक्यत्वात् पुरोवादानुवादपरतया योजनमेव युक्तम्, न तु स्वतन्त्रमेकत्वादिविध्यन्तरपरत्वम्। तत्र चानुवादापेक्षया पुरोवाद एव बलवानिति जर्तिलयवाग्वादिन्यायेनानूदितेदंपदार्थनिषेधतात्पर्यकत्वमेवाद्वितीयपदस्य। तच्च विवर्तवादपक्षे कार्य-कारणयोर्विषमसत्ताकत्वात् प्रसक्तेदंपदार्थनिषेधो भ्रमप्रसक्तस्य 'नेदं' रजतमित्यनेनेव युज्यते ॥

तत्र द्वितीयादिराहित्यं नात्रोपदेष्टव्यमपि। चिदचिद्विशिष्टस्य सत्पदेन ग्रहणात् सृष्टेः पूर्वं सूक्ष्मचिदचिद्बाह्यस्य कस्यापि स्वतन्त्रस्याभावात् कस्य वा निषेधः स्वतन्त्रस्याद्वितीयपदेन? एवं विशिष्टे विशेष्यस्य प्राधान्यात् तद्बोधकस्यैवपदस्यापि किं कृत्यम्?

कथं चात्रैकविज्ञानेन सर्वविज्ञानम्? एकविज्ञानेन सर्वविज्ञाने साक्षादुपादानमेव मृत्तिका दृष्टान्ततयोपात्तम्, न तु विशिष्टम्, इति कथं विशिष्टोपादानतापक्षे तत्स्वारस्यम्? अद्वैतसिद्धान्ते तु साक्षात्कारणविज्ञानेन सर्वविज्ञानाद् न दृष्टान्तानुपपत्तिः ॥

तत्र यद्यपि मृत्तिका परिणामिकारणमेव दृष्टान्तः, न तु विवर्तोपादानं शुक्तिरज्ज्वादि; तथापि विवर्तोपादानतायाः परिणाम्युपादानाविद्यासापेक्षत्वात् तटस्थलक्षणविधया तदुपस्थापनपर्यन्तं व्यापार इति स्वीकर्तव्यम्, साक्षादपरिणाम्युपादानत्वं वा ब्रह्मणः। न च परिणाम्युपादानत्वं साक्षाद्ब्रह्मणः परस्यापीष्टम् ॥

तत्र "मृत्तिकेत्येव सत्यमि"ति मृत्तिकापदस्योपलक्षणविधया ब्रह्म-पर्यन्तोपस्थापनार्थमेवेतिपदम् । न हि घटादिकं प्रति मृत्तिकादिरेवोपादानम्, सत्ताभानप्रीत्यनुगमबाधात्, किन्तु तदुपलक्षितं चैतन्यमपि । तत्र च मृत्तिकामात्रं न सर्वकार्योपादानम्, तदुपलक्षितं चैतन्यं तु सर्वोपादानम् । अतश्चैतन्य-मात्रोपस्थापन एव तटस्थविधया तात्पर्यम् ॥

अत एव "वाचारम्भणं विकारो नामधेय" मिति कार्यस्य घटस्य न ग्रहणम्, किन्तु विकारमात्रस्य । तस्यापि वाचारम्भणत्वनिर्देशस्तु विवर्तो-पादानताऽविवक्षायां नोपपद्यते । मतान्तरे तु सर्वमिदं नोपपद्यते ॥

अत्र "वाचारम्भणं विकारो नामधेयम्, मृत्तिकेत्येव सत्य" मित्यत्र नामधेयपदस्य मृत्तिकापदेनाप्यन्वयात् मृत्तिकायाः तदुपलक्षितायाः प्रकृतेरपि नामधेयत्वमात्रम्, वाचारम्भणत्व च ज्ञाप्यते, तेन चाविद्यायामपि निवृत्ताया परिशेषितं चिन्मात्रमेव सत्यम्, तद्विज्ञाने नान्यत् ज्ञातव्यमवशिष्यत इति फलति । शुक्तिरज्ज्वादिदृष्टान्ते तु तद्वद् घटादीनामपि प्रातिभासिकत्वमेव स्यात्, ततश्च स्वप्नदृष्टान्तेन विज्ञानवादप्रवेशापत्तिरिति शङ्का स्यात् । ततस्तन्निराकरणार्थं 'वैधर्म्याच्च न स्वप्नादिवदि' ति सूत्रितं वैधर्म्यमपि ज्ञापितं भवति ॥

"प्रकृतिश्च प्रतिज्ञदृष्टान्तानुपरोधात्" इत्यधिकरणमप्येतदाशयमेव । प्रकृतित्वं ह्युपादानत्वमद्वैतमते, भास्करमते, शुद्धाद्वैतमते च ब्रह्मणः स्वरसम्; साक्षात् ब्रह्मण उपादानत्वस्वीकारात् । तत्र भास्करादिमते परिणामिकारणत्वम् । तत्तु निरस्तमेव श्रीभाष्यकारैरपि ॥

परिणामपदं च अन्यथाभाव इवान्यथाभानेऽपि प्रयुज्यते, विवर्तपरि-णामपदयोरुभयत्र प्रयोगात् । अन्यथा भासमानस्य सत्ताभेदो विवर्तवादे, परिणामवादे तु तदैक्यम् । कार्यकारणयोरभेदस्तूभयत्र समानः । एतदेवाभिप्रेत्य भाष्यवार्तिके "परिणामात्" इति विवर्तादिति व्याख्यातम् । दृश्यते

च तत्र तत्र कापिलप्रस्थानेऽपि विवर्तपदप्रयोगः परिणामे, तथा परिणामपदं च विवर्तेऽद्वैतनिबन्धेषु । भास्करादिमतेऽपि मृत्तिकेति पदं लोकदृष्टान्तेन ब्रह्मोपलक्षणमेव ॥

रज्जुसर्पादिस्थले तु न ब्रह्म शुद्धमुपादानम्, किन्त्ववच्छिन्नं चैतन्यमेव। अतस्तस्य दृष्टान्ततयोपादानं न ब्रह्मविज्ञानेन सर्वविज्ञानोपपादनक्षमम्। परमते तु "मृत्तिकेत्येव सत्य"मिति 'मृद् घट' इति ज्ञानस्य प्रमात्वनिरूपणरं कथमेकविज्ञानेन सर्वविज्ञानोपपादकम्? कथंतरां च ब्रह्मप्रकृतित्वोपपादकौ प्रतिज्ञादृष्टान्तौ?

प्रकृतित्वम्, परिणामश्च तस्य परम्परयेति कुतोऽत्रावगम्यते? प्रकृतित्वं हि परिणामितयैव प्रसिद्धमिति परिणामिकारणस्यैव विवक्षणे किमर्थं "परिणामा"दिति सूत्रम्? कार्याभेदपरेण परिणामपदेन कथं विवर्तवादस्य व्यावर्तनं विवर्तवादस्य प्रमाणान्तरसिद्धत्वे? तदभावे तु किमर्थमिदं सूत्रम् ॥

सूक्ष्मचिदचिद्विशिष्टयोरुपादानोपादेयभावो विशेषणयोरुपादानोपादेयभाव एव मुख्ये यदि पर्यवस्यति, तर्हि विविच्यताम्—कुत एवमिति? यदि विशेष्ये साक्षादभावात्, तर्हि ब्रह्मानुपादानतायामेव पर्यवसानात् घट्टकुट्यां प्रभातम् ॥

तत्र 'मनुष्यो जातः' इत्यादावात्मनो जन्मप्रतीतिरौपाधिकी, न तु स्वाभाविकी। वस्तुगत्या तु न जन्यत आत्मेति खलु गीयते, श्रूयते च—"न जायते म्रियते वा कदाचित्" इति। तत्र यदि तेन न्यायेन प्राक्तनावस्थाविशेषरूपेण प्रकृतेः कारणत्वं मन्यते, ब्रह्मणश्च तद्विशिष्टत्वेन, तर्हि तावता किमायातम्? ब्रह्मणोऽप्यात्मन इव हि स्वाभाविकमनुपादानत्वम्, किंत्वौपाधिकमेव तद् गौणमेव, न मुख्यमिति। न ह्यात्मनो जन्म मुख्यमिति कस्यापि सिद्धान्त आस्तिकस्य ॥

शरीरवाचकानां पदानां शरीरिपर्यन्तत्वेन कारणवाचिशब्दस्य विशिष्ट-परत्वेनापि किमायातं ब्रह्मकारणताया मुख्यायाः ? तत्र हि चिदचिद्विशिष्ट-कारणताया यदि विवक्षा, तर्हि विशिष्टस्य विशिष्टरूपेण कारणत्वमवगम्यते, न तु मुख्यं विशेषणमात्रस्य, तद्वशाद् विशेष्यस्यापि ॥

तत्र "सदेव सोम्येदमि"त्यत्र सच्छब्दार्थो यदि शरीरवाचकानां पदानां शरीरिपर्यन्तत्वमिति नियमेन सूक्ष्मचिदचिद्विशिष्टम्, तर्हि सच्छब्दः प्रकृति परस्सन् तद्विशिष्टब्रह्मपर इति वक्तव्यम् ॥

तत्र च ब्रह्मणः सत्त्वमपि बाधितम्, कथञ्चात्र सांख्यमतस्योत्थानमपि ? सच्छब्देन प्रधानविवक्षाया एवासम्भवात् । 'असदेवेदमग्र आसी'दिति शङ्काया अपि नोत्थानम् । न हि ब्रह्मासच्छरीरकमपि, न वा सद्विशिष्टप्रति-द्वन्द्वि केवलम्, 'असदि'ति कथं वा असत्कारणतावादस्य प्रत्युत्थानमपि । सच्छब्देनात्मानात्मसाधारणार्थविवक्षायां खलु तस्य प्रत्युत्थानसम्भावनाऽपि ॥

इदं च शरीरवाचकानां पदानां शरीरिपर्यन्तत्वनियमाभाव एव युज्यते । सदाख्यशरीरविशिष्टो ह्यात्मैव भवति, नानात्मा, इति—"गौणश्चेन्नात्मशब्दात्" इत्यादिसूत्राण्यप्यत्र वितथान्येव ॥

सर्वथा तु विशिष्टकारणत्वं विशेषणविशेष्योभयकारणत्वेनैव युज्यते, न तु विशेषणमात्रकारणत्वेन, अन्यथाऽपृथक्सिद्धविशेषणस्य प्रकृतेः कारणत्वमपि विशेष्यकारणत्वमादायैवेति विशेषणप्रकृतिकारणत्वकथा कथं न भज्येत ? कथं च ब्रह्ममात्रकारणतावाद एव न परिशिष्येत प्रकृतेर्निमित्तकारणतामात्रेण भामतीसिद्धान्ते पर्यवसानेन ? ब्रह्मपरिणामसिद्धान्तपर्यवसानेन वा ?

किञ्च सत्पदेनैव तद्विशिष्टस्य ब्रह्मणो ग्रहणे "अग्रे इदमासीदि"ति श्रूयमाणेदंपदेन सामानाधिकरण्यं कथं सत्पदस्य ? इदंपदेन स्थूलचिदचिद्वि-शिष्टस्य ग्रहणात् सामानाधिकरण्यं सृष्टेः प्राक् स्थूलचिदचितोरभावादनुपपन्नम् ॥

"उत तमादेशमप्राक्षी"रित्यत्र आदेशपदम्, उपदेशपदं च पर्याय एव। अत एव—"एष आदेश. एष उपदेशः, एषा वेदोपनिषत्" इत्यादेशोपदेशब्रह्मविद्यानामैक्येनोपसंहारः। उपदेशपदस्य सामान्यतो भावार्थपरस्याप्युपदेशमप्राक्षीरिति कर्मतयाऽत्र निर्देशात् "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायेनोपदेशयोग्यस्यैव वस्तुनोऽत्र विवक्षा। पराक्रान्तं चात्र दीक्षितेन्द्रैः सद्विद्याविलासे ॥

एकविज्ञानेन सर्वविज्ञानप्रश्नोपपादकत्वं ह्यप्रमेयस्य, तथाप्यज्ञाननिवृत्तिमात्रेणानावृतस्वयंप्रकाशस्य तत्त्वस्योपदेशमात्रगम्यस्योपदेशपदेन विवक्षायामेवाऽऽदेशपदस्वारस्यम्। तथाचोपदिश्यमानवस्तुविज्ञाने सर्वविज्ञानमिति कार्यकारणभावोऽप्यत्र न विरुध्यते। ज्ञातव्यान्याभावेन हि सर्वविज्ञानमत्र विवक्षितं सर्वस्य ज्ञातात्मतत्त्वविवर्तत्वेन। अत एव "सदेवेदमि"ति बाधायां सामानाधिकरण्येनोपक्रमः ॥

तत्र "येनाऽश्रुतं श्रुतं भवती"ति श्रूयमाणार्थातिरेकेणार्थान्तराभाव एव विवक्ष्यते, यथा रज्जुतत्त्वविज्ञानेन रज्जुस्वरूपातिरिक्तज्ञातव्यसर्पाभावः। रज्जुज्ञानेन हि सर्प-तज्ज्ञानतदुपादानानां सर्वेषामपि तद्व्यतिरेकेणाभावरूपो बोध एव, न तु सर्पज्ञानादिनिवृत्तिमात्रम्। तत्र तत्र रज्जुज्ञानेन सर्पज्ञानादिनिवृत्तिव्यपदेशोऽप्येतदाशय एव ॥

सन् घट इत्यादौ घटादीनां सत्त्वप्रतीतिर्हि न कम्बुग्रीवादिमद्घटसत्यत्वाभिप्रायेण; घटस्य सद्बुद्धिव्यभिचरितत्वात्। इदमेवाभिप्रेत्य श्रूयते "वाचारम्भणं विकारो नामधेयम्, मृत्तिकेत्येव सत्यमि"ति ॥

अत्र मृत्तिकापदेन सदेव विवक्ष्यते; तस्य सर्वत्रानुवर्तमानत्वात्, तस्यैव प्रकृतत्वाच्च। एतदर्थमेव मृत्तिकेत्येवेतीतिपदम्। नचात्र मृद् घट इति ज्ञानस्य प्रमात्वबोधनं प्रकृतम् ॥

अस्तु वा कथंचन मृद् घट इति ज्ञानस्य प्रमात्वमेवात्र प्रतिपिपादयिषितम् । तावताऽपि तस्य मृदंश एव किमव्यभिचरितार्थबोधकत्वेन प्रमात्वम्, उत घटांशे, आहोस्विद् उभयत्रापीति । तत्र मृदंश इव घटांशो नाव्यभिचरितः; घटान्तरप्रतीतावेतद्घटप्रतीत्यभावात्, किन्तु मृदंश एवाव्यभिचरितः; सर्वासु घटप्रतीतिषु विशेष्यतया प्रतीयमानत्वात् । तथाच "मृत्तिकेत्येव सत्य"मिति वाक्यमनुवर्तमानस्य सत्यत्वम्, व्यावर्तमानस्य नाममात्रत्वमिति न्यायं बोधयितुमेव, तेन च सन् घट इत्यादिप्रतीतिपरीक्षायां सत एवानुवर्तमानत्वम्, तद्व्यतिरिक्तस्य तु व्यावर्तमानत्वम्, इति सद्व्यतिरिक्तस्य सर्वस्य नाममात्रत्वमित्येवात्र प्रकरणार्थः ॥

एतद्वाक्यार्थोपबृंहणार्थमेव—

नासतो विद्यते भावो नाभावो विद्यते सत. ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥

इति गीयते भगवता । व्यक्तं चैतद्भाष्ये, तद्व्याख्यायां चानन्दगिरिकृतायामिति तत एवाधिकमवगन्तव्यम् ॥

नहि शरीरशरीरिभावव्यवस्थायामेव सद्विद्यायास्तात्पर्ये—'तदैक्षते' त्यारभ्य सतः कारणत्वोपदेशः, वाचारम्भणं विकारो नामधेयमिति कार्यकारणयोः कारणस्य सत्यत्वोपदेशश्च दृष्टान्तविधया सङ्गच्छते। सत्यं दृष्टान्तदार्ष्टान्तिकयोर्न सर्वथा साम्यं सर्वत्र, केनचन रूपेण साम्यं तु वक्तव्यमेव। केन वा रूपेणात्र साम्यं विवक्षितमिति सहृदयो भूत्वा विवेचयतु । मृत्तिकेत्येव सत्यमितीतिकरणं मृत्तिकाया अत्र तदधिष्ठानसद्रूपब्रह्मोपलक्षणार्थम्, न तु मृत्तिकायाः परिणामिन्या एवात्र विवक्षा, येन तदनुपपत्तिः स्यादिति सूचनार्थम् ॥

न चात्र—'सदेवाग्र एकमेवासीदि'ति वाक्ययोजना; वाक्यभेदात्, किन्तु—अग्रे इदं सदासीत्, तच्चैकम्, अद्वितीयं चेति । तत्र प्रथमं वाक्यमुद्देश्यपरम्, द्वितीयं तु विधेयपरम्, उभयं मिलित्वा तु महावाक्यं वाक्यैक-

वाक्यतयेति हि वस्तुस्थितिः। तत्र उद्देश्यस्य सत एव बहुभवनसङ्कल्पः, न त्वेकत्वविशिष्टस्य। तत्रैकत्वं हि सजातीयाभाव एव, न त्वेकत्वसंख्या; ब्रह्मण्यनेकत्वशङ्काया एवाभावात्। कथं चैकस्य बहुभवनम्? यदि विभक्त-नामरूपावस्थावत्त्वेन, तर्हि विविच्यताम्—अवस्थान्तरप्राप्तिः किं साक्षात्? उत परम्परयेति? आद्ये परिणामिकारणतापत्तिः, द्वितीये तु स्वतो न विभक्तनाम-रूपावस्था ब्रह्मणः स्वाभाविकी, किं त्वौपाधिकी, गौणी वा। सदेवेत्येवकारस्तु सदितरसत्तानिषेधार्थः। तेन चाविद्यादीनामनादीनां षण्णामपि सद्व्यतिरेकेणा-भावो ज्ञाप्यते, "एकमद्वितीयम्" इत्यादिना तु तत्कार्यजातस्य सद्व्यतिरेकाभावो ज्ञाप्यते।

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा या प्रस्तुता, सा न केवलं सद्विद्या, किन्तु परविद्याऽपि। तत्र तु—"अद्रेश्यमग्राह्यमचक्षुःश्रोत्र" मित्यादिना न शरीरित्वेन ब्रह्म प्रस्तुत्यैकविज्ञानेन सर्वविज्ञानमुपक्षिप्यते। तथा भूतयोनिमिति केवलभूतयोनित्वम्, न तु भूतशरीरित्वम्, विशिष्टयोः कार्यकारणभावो वा। अत्र प्रथमतो निर्विशेषतयोपक्रमात्, तस्य भूतयोनित्वविधानाच्च निर्विशेषस्य मायोपधानमात्रेणैव भूतयोनित्वम्, न त्वनावृतचिन्मात्रत्वेनेति ज्ञाप्यते। "अक्षरात्परतः पर" इति प्रकृतेरपि परत्वम्, तद्धर्मशून्यत्वेन, तदवस्थया-ऽवस्थाशून्यत्वं च प्रतिपाद्यते॥

तथाच मायोपहितस्य नित्यत्वविभुत्वभूतयोनित्वसर्वगतत्वसुसूक्ष्मत्व-कारणत्वाद्याम्नानम्, अशरीरत्वाम्नानमुभयं चोपपद्यते। नित्यत्वं सत्यत्वं च भिन्न-मित्युभयसंप्रतिपन्नम्। तत्तु मायाया आब्रह्मसाक्षात्कारमनुवर्तमानत्वात्, तस्या इव तदुपहितस्याप्यौपाधिकम्, ब्रह्मस्वरूपं तु न तथेत्यक्षरपदेनैव सूच्यते॥

अभावस्याधिकरणात्मकत्वाद् अदृश्यत्वादयो न ब्रह्मधर्माः, सद्विद्यैक-वाक्यतया सद्रूपत्वे निर्णीतेऽद्रेश्यत्वादिमात्रेण नासत्त्वापत्तिः, येनासत्त्वापत्ति-वारणार्थं भावधर्मा अपि स्वीकर्तव्याः। तुच्छं हि शून्यं नाम सदसत्-

सदसत्-सदसद्विलक्षणात्मकचतुष्कोटिविनिर्मुक्तम् । ब्रह्म तु प्रथमा सत्कोटिः । अतो न शून्यत्वापत्तिशङ्काया अवसरलेशोपि ॥

एवंरूपत्वं तु धीरैकविज्ञेयम् । मूढास्तु सविशेषमेव सत्यमिति पश्यन्तीति परविद्यातात्पर्यम् ॥

अत्र परिपश्यन्तिपदार्थः सर्वात्मना दर्शनम्, न तु विविधविशेषण-विशिष्टरूपेण दर्शनम्, येन सविशेषत्व एव पर्यवसानं स्यात् । ततश्च "यत्त-दद्रेश्य" मित्यादिनेतरनिषेधमुखेन निर्विशेषतात्पर्येणैव परविद्यार्थः । सर्वात्मत्वं बाधायां सामानाधिकरण्येन ब्रह्मव्यतिरेकेण तद्व्यतिरिक्तसर्वाभाव एव । परि-दर्शनं ह्युपदेशमात्राधीनसाक्षात्कारः । स च परतत्त्वस्यैव, नापरतत्त्वस्य ॥

अत एव परविद्येति नामापि । "अक्षरात्परतः परः" इति वाक्यशेषो विगलितमायादिसम्बन्धं निर्विशेषविद्यात्वमभिप्रेत्यैव । सगुणविद्या तु कर्मकाण्ड-वदपरविद्यैव ॥

अपरपदार्थो हि यस्मादन्यः परः प्रकरणे निर्दिश्यते, स एव । अत्र च "यस्सर्वज्ञः सर्वविदि"त्यादिना प्रस्तुतं मायोपहितमेवापरशब्दार्थः, तदनुपहितं च परशब्दार्थः । "यस्मात्परं नापरमस्ति किञ्चित्" इति वाक्यं तु यदि सविशेष-परम्, तर्हि तस्य स्तुत्यर्थमेव तस्य सर्वतः परत्ववर्णनम् । अतो न तदनुसारेण परविद्यार्थनिर्णयो युज्यते ॥

"सत्यं ज्ञानमनन्तमि"ति वाक्यमपि ब्रह्मणः सत्यज्ञानाद्यभेदं बोधयत् सत्यत्वादिविशेषणांशाविवक्षया सच्चिदाद्यभेदं बोधयच्चाभेदे सामानाधिकरण्यमेवा-भिप्रैति । न चात्र विशेषणविशेष्यभावे सामानाधिकरण्यम्; धर्मधर्मिणोर्भेदस्य जागरूकत्वात् । त्रिविधपरिच्छेदराहित्यरूपानन्तत्वं नान्यथा तत्रोपपद्येत ॥

इदं हि कारणवाक्योक्तब्रह्मस्वरूपलक्षणमेव । न चास्य धर्मधर्मिभावेन लक्षणत्वम् । स्वरूपमप्यसङ्कीर्णं सङ्कीर्णस्वरूपव्यावर्तकतया लक्ष्यतामर्हति कल्पितेन

धर्मधर्मिभावेनेत्यद्वैतसिद्धयादौ व्यक्तम् । असत्यादिव्यावर्तकत्वेनासङ्कीर्णब्रह्म-स्वरूपं ह्यत्र विवक्ष्यते ॥

इद हि सत्यत्वादिविशेषणस्य न लक्षणम्, किन्तु विशेष्यमात्रस्येति संप्रतिपन्नम् । विशेष्यमात्रं च निर्विशेषमेव, न तु सविशेषम्, इति कथमस्य सविशेषलक्षणत्वम्? सविशेषं ह्युपास्यं कल्पितेनापि रूपेणोपास्यतामर्हति, इति व्यावहारिकतत्प्रामाण्येऽपि न कापि क्षतिः । न च परमाण्वादयोऽपि सविशेषा नित्या इत्यद्वैतिनः, विशिष्टाद्वैतिनो वा मन्यन्ते ॥

सत्यशब्दो हि सत्पर्याय इति सम्प्रतिपन्नम् । सत्त्वं चात्राबाध्यत्वम्, कालविशेषावच्छिन्नबाधाऽयोग्यत्वमेव । तच्चाधिष्ठानरूपं सर्वबाधस्वरूपं स्वतोऽबाध्यं च । कथं सत् ब्रह्म सविशेषम्? सविशेषत्वं ब्रह्मण औपाधिकम्, विशेषाणां ब्रह्मणि कल्पितानां बाधाद् बाध्यतामेवार्हति । सा चौपाधिकीति त्वन्यदेतत्, इति कथमबाध्यत्वरूपं सत्यत्वं सविशेषस्य?

बाधोऽपि विकारविशेष एव, इति तस्य निर्विकारत्वमपि, इति निर्विकारं सत्यं वस्तु निर्विशेषमेव, न सविशेषम् ॥

ज्ञानपदं तु यदि सविशेषपरम्, अर्शआद्यजन्तत्वविवक्षया, तर्हि ब्रह्मणः स्वरूपज्ञानत्वे प्रमाणाभावात् नैयायिकादिमत इव तस्याचेतनत्वापत्तिरित्यादि पूर्वमेवोपपादितम् । निर्विशेषा निराश्रया च स्वरूपचिदात्मिकाऽनुभूतिः स्वप्रकाशान्या, सविशेषं साश्रयं च जन्यं ज्ञानमन्यदित्यन्यत्र व्यक्तम् । अतो नात्रानुभूतिमत्तापि विवक्षिता । विशेषणभूता ह्यनुभूतिः सकोचविकासशालिधर्म-भूतज्ञानं वा भवतु, अन्तःकरणवृत्तिर्वा; उभयथाऽपि ज्ञानमुत्पन्नं नष्टमित्यनुभवात् न नित्या, नतरां सत्या । धर्मिमात्रसत्यत्वविवक्षायां तु सत्यपदेन सामानाधि-करण्यं स्वरूपमात्रस्य, न तु विशिष्टस्य, इति परत्र सत्यपदसामानाधिकरण्यानु-पपत्तिः । अतोऽवश्यमूरीकर्तव्यमत्र ज्ञानपदं स्वरूपमात्रपरम्, न तु तद्विशिष्ट-परम्—इति ॥

"सत्यं ज्ञानमि"त्यत्र स्वरोऽपि भावार्थानुगुण एवाध्ययनसंप्रदायसिद्धः, अन्यथा स्वरविवक्षया श्रुत्यक्षरानुगुण्यव्यवस्थायां तु न प्रमाणम्। प्रमाणत्वेऽपि सत्यज्ञानपदयोः सामानाधिकरण्यश्रुत्यनुपपत्त्या लक्षणयापि स्वरूपमात्रपरत्वमेव युक्तम्, न तु विशिष्टपरत्वम्, लक्षणाऽपि हि लौकिकीति शबरस्वामिनः॥

जगत्कारणत्वं हि ब्रह्मणस्तटस्थलक्षणम्, सत्यज्ञानादि तु स्वरूपलक्षणमिति हि संप्रदाय.; शाखा चन्द्र इति तटस्थलक्षणात् पृथक् प्रकृष्टप्रकाशश्चंद्र इति लक्षणवत्। तत्र च स्वरूपलक्षणावसरे तटस्थलक्षणस्यापि लक्ष्यनिष्ठत्वं न विवक्षितुं शक्यते; बाधात्, इति जगत्कारणत्वबाधेन स्वरूपलक्षणलक्षणं न दोषाय॥

यदा तु—जगत्कारणत्वमपि—जगदात्मना परिणममानाविद्याविषयत्वं तदधिष्ठानत्वरूपं विवक्ष्यते, तदा जगत्कारणत्वमपि स्वरूपलक्षणमेव शुद्धस्य ब्रह्मणः;

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला॥

इति संक्षेपशारीरकवचनात्। न च लक्षणान्तरवैयर्थ्यम्; लक्षणस्य लक्षणान्तरादूषकत्वात्॥

तत्र सत्यत्वमबाध्यत्वमित्येकः पक्षः। तेन च बाध्याद्व्यावृत्त्या लक्षणत्वम्। व्यावृत्तेर्ब्रह्मरूपातायामपि व्यावृत्तित्वोपलक्षितरूपेण पूर्वं ब्रह्मणोऽज्ञातत्वाद् न लक्षणवैयर्थ्यम्। भावाद्वैतवादे त्वभावधर्मवत्त्वं नाद्वैतविरोधीति त्वन्यदेतत्। सर्वथा तु—न "एकमेवाद्वितीयमि"ति श्रुतिव्याकोपः॥

यत्तु—प्रवृत्तिनिमित्तभेद एव सामानाधिकरण्यम्, न त्वभेद—इति,

तदिदं विशेषणविशेष्यभावे सामानाधिकरण्याभिप्रायम्, अन्यथा "अध्न्ये! देवि! सरस्वति"! इत्यत्र प्रवृत्तिनिमित्तभेदाभावेऽपि कथं सामानाधिकरण्यम्? न हि नामधेयेषु तत्र शक्यतावच्छेदकभेदोऽस्ति॥

यत्तु—तत्रापि तत्तत्पदवाच्यत्वरूपप्रवृत्तिभेदोऽस्ति, यदृच्छाशब्दाना तत्तच्छब्दस्वरूपप्रवृत्तिनिमित्तवत्—इति,

तदिदं शब्दगतं सामानाधिकरण्यं यद्यर्थभेदविवक्षायामविरोधाभिप्रायम्, तर्हि सत्यज्ञानादिवाक्येऽपि स्वरूपाभेदविवक्षायाः सामानाधिकरण्यस्य चाविघातकम् । तत्र यदि नामधेयातिरिक्तस्थले शब्दस्वरूपातिरिक्तप्रवृत्तिभेदो नियतः, तर्हि "नामन्त्रिते समानाधिकरणे सामान्यवचनम्" इत्यस्य पर्यायपदप्रयोगमात्रविषयत्वमिति फलति । सर्वथा तु सामानाधिकरण्यं नियमेन न प्रवृत्तिनिमित्तभेदगर्भमिति नागोजिभट्टसिद्धान्तः ।

एतत्सूत्रमात्रविषयविषयं सामानाधिकरण्य विनापि प्रवृत्तिनिमित्तभेदमिति यदि तात्पर्यम्, इदं च पर्यायपदप्रयोगमात्रविषयमिति चाभिप्रेयते, तर्हि तत्र "नामन्त्रिते पर्याये" इत्येव सूत्र्येत, न तु समानाधिकरणपदघटितम् । तत्रापि कस्यचनार्थस्य यौगिकस्य विवक्षया सामानाधिकरण्यव्यवस्था तु "न पर्यायपदप्रयोगेऽस्य सूत्रस्य प्रवृत्तिरि"ति महाभाष्यविरोधादयुक्ता । न हि धर्मभेदेन योगलब्धेन पर्यायत्वं नाम । शक्यतावच्छेदकैक्ये खलु पर्यायत्वम्, न तु तद्भेदे । प्रतीयमानेन धर्मभेदेन पर्यायत्वेऽपि सहप्रयोगः सम्भवति पर्यायशब्दानाम्, अन्यथा 'पङ्कजं सरसिजम्' इति वाक्यस्यापि बोधकत्वापत्तिः । पर्यायशब्दानामपि सामानाधिकरण्यादिति कैयटोक्तिरपि विना प्रवृत्तिनिमित्तभेदमपि सामानाधिकरण्यमेव नागेशाभिप्रेतं साधयति ॥

यत्तु—नागोजिभट्टोऽपि—सामानाधिकरण्यं चैकार्थविशेष्यबोधजनकत्वमेव, न तु प्रवृत्तिनिमित्तभेदगर्भमिति वक्तुं नैव पारयति . यत —

"अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।"

इति न्यायेनान्तत शब्दप्रकारभेदस्यावर्जनीयत्वात् समानाधिकरणवाक्ये नानाविशेषणविशिष्टयत्किञ्चिद्विशेष्यकबोधो वैयाकरणमते दुरपह्नवः—इति ॥

किमनेनाभिप्रेयते—किं सामानाधिकरण्यमेव वैयाकरणमते न सम्भवतीति, अथवा सम्भवत्यपि सामानाधिकरण्ये प्रवृत्तिनिमित्तभेदो नियत इति ।

आद्ये— "नामन्त्रिते समानाधिकरणे" इति सूत्रे समानाधिकरणपदविरोधः ; द्वितीये—पर्यायाणां प्रवृत्तिनिमित्तभेदशून्यानां समानाधिकरणत्वं बाधितम्, पर्यायविषयत्वमत्र सामानाधिकरण्यस्येति भाष्यविरोधश्च ॥

न हि नामसु प्रवृत्तिनिमित्तभेदः, अन्यथा नानत्वमेव हीयेत। न हि घटकलशादिशब्दानां प्रवृत्तिनिमित्तभेदः, विशिष्य च पाणिनिमते। सर्वाणि पदानि व्युत्पन्नानि धातुजानीति हि शाकटायनस्य निरुक्तस्य वा मतम्, इति पाणिनिसूत्रप्रत्युदाहरणेषु नामस्वर्थविशेषस्य प्रवृत्तिनिमित्तस्य विवक्षयैव नामत्वमिति व्याहतम्। तथाच वैयाकरणसम्मतस्फोटवादेऽपि

अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

इति शब्दार्थयोः तादात्म्यमेव सम्बन्धः ॥

तत्र च शब्दो विशेष्यम्, अर्थः प्रकारः, तत्र कल्पितश्चाभिप्रेयते, शब्दविवर्तत्वादर्थस्य, शब्दश्च स्फोटोऽचेतन इति केचन, चेतन इति चापरे। व्यक्तश्चैतत् न्यायमञ्जर्याम्। यत्र चेतन एव स्फोटः, तत्राद्वैतमताद्वैयाकरणमतस्य न कोऽपि विशेषः, किन्तु नामभेदमात्रम्, इति नागोजिभट्टस्याद्वैतमतपक्षपातो वैयाकरणस्यापि न विरुद्धः ॥

अस्तु वा वैयाकरणमतमद्वैतमताद्विलक्षणमिति, एवमपि 'नामन्त्रिते समानाधिकरणे' इति सूत्रे समानाधिकरणपदकृत्यावसरे पर्यायशब्दानामेव समानाधिकरणानां विवक्षेत्येव नागोजिभट्टस्यापि भाष्यकैयटादीनामिव मतमित्यत्र तु न विप्रतिपत्तिः। उक्तप्रत्युदाहरणसमर्थनं तु सामानाधिकरण्यस्य प्रवृत्तिनिमित्तभेदगर्भत्वं विनैव गतिरिति तु सत्यम्, तत्रापि कथञ्चनार्थविशेषविवक्षया प्रवृत्तिनिमित्तभेदकल्पना तु स्वकपोलकल्पनैव, न हि सा भाष्यकैयटादिमूलेति तु तत्त्वम् ॥

अद्वैतामोदस्तु—"नामन्त्रिते समानाधिकरणे" इति सौत्रसामानाधिकरण्यन्यायेनात्यन्ताभेदेऽपि सामानाधिकरण्यमेकार्थत्वमात्रेण प्रौढिवादेनोपपादयति ॥

वस्तुतस्तु—सत्यज्ञानादिपदेष्वपि प्रवृत्तिनिमित्तभेदोऽस्त्येव, तावता किम्? यदि सोऽस्ति, तर्हि नियतं स विवक्षणीय इति सविशेषपरत्वं पर्यवसन्नमिति चेत्, किं वा सर्वत्र वाक्येषु पदार्थाः प्रथमप्रतीता एव शाब्दबोधे भासन्ते? यद्योम्, तर्हि गङ्गायां घोष इत्यत्र किं गङ्गैव वाक्यार्थे भासते? यदि न, तत् कुतः? यदि बाधात् तत्र लक्ष्यार्थस्यैव वाक्यार्थे भानम्, तर्हि प्रकृतेऽपि पूर्वोक्तविधया स्वरूपमात्रभानं लक्षणया, अभिहितान्वयवादेन पदार्थगतया शक्त्या वा स्वीक्रियताम्। ततश्च कथं सत्यज्ञानादिवाक्यमपि न निर्विशेषमेव बोधयति? यथा चात्र 'तत्त्वमसी'त्यत्र च स्वरूपचैतन्यमात्रविवक्षायामप्यभिहितान्वयवादे, अन्यत्र च नैकेनैव पदेन निर्वाहः, सर्वाणि च पदानि सार्थकानि, सर्वपदलाक्षणिकत्वमपि न दोषाय, तथा न्यायरत्नावल्यामुक्तम्॥

इदमेवाभिप्रेत्य सद्विद्याप्येकाद्वितीयादिपदघटिता निर्विशेषमेव ब्रह्म बोधयतीति पूर्वमुपपादितम्। तत्र "येनाश्रुतं श्रुतं भवती"ति वाक्यगतयच्छब्दार्थ एव सच्छब्दार्थः। स च ब्रह्मैव केवलम्, न चिदचिद्विशिष्टं ब्रह्मेति निरूपितमधस्ताद्विस्तरेण। तेन चाद्वितीयत्वादेव ब्रह्मण एकविज्ञानेन सर्वविज्ञानोपपत्तिः, न तु सद्वितीयत्वेनेति विशदमवगम्यते, तत्रैव भगवत्पादभाष्यस्य तात्पर्यमिति च॥

तत्र सदुद्देश्यकेदन्तादात्म्यबोधः "सदेव सोम्येदमग्र आसीदिति वाक्यार्थो भवतु, इदमुद्देश्यकसत्तादात्म्यबोधो वा, फलतस्तु न विशेषः। एकमेवाद्वितीयमित्यत्र त्विदमभिन्नसदुद्देश्यकैकत्वाद्वितीयत्वबोधे तु न वैरूप्यम्। इदन्तादात्म्यविशिष्टसत्पदार्थोद्देश्यकैकत्वाद्वितीयत्वविधाने वाक्यभेदस्तु न भवति; एकत्वविधान एव तात्पर्यात्, एकपदस्य ह्यद्वितीयादिपदाभावे सजातीयविजातीयस्वगतभेदशून्यत्वमर्थः, तत्सत्त्वे त्ववयुत्यानुवादः, एवाद्वितीयपदे तदनुवादमात्रे, यथा श्रीभाष्यमते निदिध्यासितव्यपदार्थस्यैव द्रष्टव्यपदेनानुवादः, द्रष्टव्यपदसत्त्वे, अन्यथा तु ध्यानविधेरेव दर्शनपर्यन्तार्थविवक्षा। अतो नैकोद्देशेनानेकविधानाद्वाक्यभेदः॥

वस्तुतस्तु—वाक्यान्तरप्राप्तोद्देशेनानेकविधाने हि वाक्यभेदः, अत्र तु "पश्य मृगो धावति" इत्यादाविव प्रथमवाक्यार्थ उद्देश्यमात्रसमर्पकः, न तत्र विधिः, विधिस्तु एकमेवेति विशिष्टवाक्यमेकमेवेति "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः" इति न्यायो न प्रवर्तते ॥

तत्र सत्पदेनासद्भावः प्रतिक्षिप्यते, न च सदिवासत् स्वरूपविशेषः, धर्मी वा, येन सत्पदस्य धर्मिमात्रपरत्व एकेनान्यव्यावृत्त्यसम्भवः स्यात्, विशिष्ट-परत्वे च सविशेषब्रह्मवादश्च स्यात्। अत एव सदेवेति प्रस्तुतं सत्पदार्थमुद्दि-श्याद्वितीयत्वविधानम् ॥

सत्यं द्वितीयपदम्—"असिद्वितीयोऽनुचचार पाण्डव." "ताते चाप-द्वितीये वहति रणधुर" मित्यादौ सहायपरम्, न तु द्वितीयसामान्यपरम्, तथापि ब्रह्मणि द्वितीयसामान्यनिषेधस्यान्यत्र कठवल्ल्याम्, बृहदारण्यके च–'नेह नानास्ति किञ्चने'ति द्वितीयसामान्यस्य निषेधात् तदेकवाक्यतया द्वितीयसा मान्यनिषेधपरत्वमेव युक्तम्; तत्रैवात्र सङ्कोचे प्रमाणाभावात्, इति"सदेवेदमि"ति प्रकरणं सजातीयविजातीयस्वगतभेदमेव साधयति ॥

"सजातीयं न मे किञ्चित् विजातीयं न मे क्वचित्।
स्वगतं च न मे किञ्चित् न मे भेदत्रयं भवेत्" ॥

इति तेजोबिन्दूपनिषदपि प्रतिपादयति ॥

यत्तु—तेजोबिन्दूपनिषत्तु न सर्वप्रामाणिकप्रवरपरिगृहीता—इति

तत्रेदं प्रष्टव्यम्—के ते प्रामाणिकाः? य उपनिषदमप्यप्रमाणं मन्वानाः। यदि भवन्त एव, तर्हि न भवन्तः प्रामाणिकाः, नतरां च प्रामा-णिकप्रवराः। कुतो वाऽस्या अप्रामाणिकत्वं भवन्तो मन्यन्ते—किं स्वमतविरो-धात्? तर्हि प्रकृतोपनिषद्विरुद्धत्वात् भवतां मतमेवाप्रामाणिकं मन्यताम्। अन्यतराप्रामाण्ये च स्वीकर्तव्ये उपनिषदप्रामाण्यवादात् स्वमताप्रामाण्यवाद एव वरः ॥

अथ यद्यनुपपन्नार्थेयमुपनिषत्, अतोऽप्रमाणम्, तर्हि निरूप्यतां का नामात्रानुपपत्तिर्भवताऽवगतेति। यथोपपद्यत इयमुपनिषत्, तथा विवरणार्थं खलु यतनीयम्, न तूपनिषदमप्रमाणयितुम् ॥

यत्तु—तत्र 'मे' इत्यनेन भवन्मतसिद्धोऽहङ्कारोऽहमर्थ, तदवच्छिन्नात्मा वा गृह्यते चेत्, तत्र भेदत्रयं भवद्भिरेव स्वीकृतम्। शुद्धचैतन्य तु न 'मे' शब्दार्थ, अपसिद्धान्तात्। अतस्तद्बाधितविषयम्—इति ॥

तत्रापसिद्धान्तः केषाम्? यदि भवताम्, तर्हि किमनेनाद्वैतिनां छिन्नम्? श्रुतिविरुद्धो भवतां सिद्धान्त इति खल्वनेनापतति। को वा भवतां सिद्धान्तो नापसिद्धान्तः? अद्वैतिनां तु नायमपसिद्धान्तः। अहमर्थो हि भगवत्पाददृष्ट्या त्रिविधः—गौणात्मा, मिथ्यात्मा, मुख्यात्मा चेति। तत्राहङ्कारः केवलं नाहमर्थः, तदवच्छिन्नात्मा मिथ्यात्मा, मुख्यात्मा तु निर्गळिताऽहङ्कारादिः शुद्धः प्रत्यगात्मा—यः, "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्यत्र निर्णीतः, यस्यैव केवलसन्मात्रस्य त्वंपदलक्ष्यार्थस्य तत्पदलक्ष्यार्थेन शुद्धेन ब्रह्मणाऽभेदः—'तत्त्वमसि' महावाक्यार्थः, यदेवाद्वैततत्त्वम् ॥

तत्राहंशब्दो भूतपूर्वगत्या; सोऽपि त्वंपदार्थतामात्रेण। प्रत्यगभिन्नं ब्रह्मस्वरूपं त्वनावृतचिन्मात्रं महावाक्यार्थः। तत्पदलक्ष्यार्थोऽपि सविशेषस्य ब्रह्मणोऽहमर्थ एव। तत्र शुद्धप्रत्यगात्मनोऽपि केवलस्य सजातीयभेदः, स्वगतो वा भेदः, एवं तत्पदलक्ष्यार्थस्यापि। अभिन्नस्य तु न सजातीयः, विजातीयः, स्वगतो वा भेदस्त्रिविधोऽपि। तद्विज्ञानादेव हि सर्वविज्ञानम्। भवन्मते तु सत्यमस्ति त्रिविधोऽपि भेदो 'मे' पदार्थस्य प्रत्यगात्मनः, ब्रह्मणश्च। तत एव चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽपि प्रतिहन्यते ॥

तत्र विशेषो हि कार्योऽपि भवति, अनादिरपि। उभयविधोऽपि कार्यात्मना, स्वरूपतश्च भिन्न एवेति नैकविज्ञानेन सर्वविज्ञानम्। अनादी चिदचितावपि शरीरभूते अप्यात्मनो भिन्ने एव। न हि शरीरमेवात्मा; चार्वाकमतप्रवेशा-

पत्तेः। सत्यं शरीरमात्मनाऽपृथक्सिद्धम्, किमेतावता? शरीरात्मनोर्भेदः कथमेतावता वारयितुं शक्यते? चितां सूक्ष्माणां स्थूलानां वा स्वरूपतो भेदात् एकसूक्ष्मचिद्विशिष्टज्ञानेनापरस्थूलसूक्ष्मचिदचिद्विशिष्टविज्ञानम्, "अहं ब्रह्मास्मी"त्यादिसामानाधिकरण्यं च तत्तदहमर्थभेदात् कथं सूक्ष्मसर्वचिदभिप्रायेण? स्थूलचिदभेदाभिप्रायेण वा? न ह्यहमर्थः स्वदृष्टया परमात्मशरीरम्। अद्वैतमते त्वात्मैक्याद् अहं ब्रह्मास्मीति सामानाधिकरण्यमबाधितम्, इति कथं तेजोबिन्दूपनिषदप्रमाणमद्वैतमते, तत्रापसिद्धान्तो वा॥

यत्तु—इदमित्यस्योपरि सृष्टिवाक्येषु निरूप्यमाणसृज्यवस्तुमात्रपरत्वस्य प्रकरणसिद्धत्वात् तावन्मात्रस्य सविशेषज्ञानेन ज्ञेयता घटत एव, भवन्मत इदमित्यनेनानाद्यविद्या गृह्यते वा, न वा? गृह्यते चेत्, अग्रे तदभाव सिद्ध एवेति कथमनादिता? न चेद् विशेषेण सर्वग्रहणं कथम्?—इति॥

तत्र सृष्टेः प्रागनभिव्यक्तनामरूपात्मिकाविद्यातादात्म्यमेव सत इदमा विवक्ष्यते, न तु सृज्यमानवस्तुतादात्म्यम्; सृष्टेः पूर्वं तदभावात्। सविशेषज्ञानेन तावन्मात्रज्ञानम्, नैकविज्ञानेन सर्वविज्ञानम्। न चैवं सर्वविज्ञानप्रतिज्ञा कस्यापि मते। न हि सविशेषज्ञानेन तेजोवस्त्वविज्ञानमेवात्र शास्त्रार्थः। तत्र प्रकरणान्तरावधृताकाशज्ञानं सविशेषविज्ञानेन भवति वा? न वा? यदि तत्प्रकरणवशात् तत्र निर्णयः, तर्हि तैत्तिरीयश्रुत्यादौ सर्वविज्ञानप्रतिज्ञानाभावः। यदि तेषां ब्रह्मणाऽपृथक्सिध्यभावेन, तर्हि "आकाशशरीरं ब्रह्मे"ति वाक्याप्रामाण्यम्। गुणोपसंहारन्यायेन कार्यसामान्यविवक्षा चात्र न कथम्? अद्वैतमते त्विदंपदेनाविद्या परिगृहीतैव। अत एवाग्रे ब्रह्मणः सविशेषस्यैव कारणत्वम्, तर्हि कथमग्रे तदभाव.? सकार्याया अविद्याया मिथ्यात्वात्। तस्या मिथ्यात्वनिर्णयस्तु शास्त्रतो भाविबाधप्रतीत्या। न ह्यनादिरविद्याऽखण्डाकारवृत्तेः प्रागपि नास्ति। यदा नास्ति, तदा न किञ्चिदवशिष्यत इति पूर्वमेवोपपादितम्, इति नाद्वैतसिद्धान्त एकविज्ञानेनासङ्कोचेन सर्वविज्ञानासम्भवः। अत एवैकाद्विती-

यादिपदैरविघान्तसर्वाभावोऽत्रार्थो विवक्ष्यते। भवन्मते सत्पदेन चिद-चिद्विशिष्टस्य ग्रहणे सतोप्यधिष्ठात्रन्तरं चिद्रूपमचिद्रूपं वा न प्रसक्तमित्यद्वितीयपदं तच्छङ्कावारणार्थतया न सप्रयोजनम्। अनेनैव नयेन ब्रह्माऽपृथक्सिद्धचिद-चिदन्यतरनिमित्तान्तरमप्यप्रसक्तम्, इति निमित्तान्तरशङ्कावारणमपि नाद्वितीय-पदकृत्यम्॥

"तदैक्षत बहु स्यां प्रजायेये"ति श्रुतिरपि ब्रह्मणः साक्षादुपादानत्वं न भवन्मते बोधयति, इतीक्षितृत्वाश्रयणेन तस्यैव निमित्तत्वं सूचितम्, इति कथं तदतिरिक्तनिमित्तान्तरशङ्काऽपि। न हि कारणवाक्यमेव निर्विशेषबोधकम्, किन्तु तदनूद्य वाक्यान्तरमेव तद्बोधकम्। तत्र च यत्र कारणवाक्यमात्रं श्रूयते, तत्र निर्विशेषांशोऽप्युपसह्रियते॥

गुणोपसंहारपाद इति प्रायिकत्वाभिप्रायेण। स्वरूपोपसंहारोऽप्यत्र 'पादार्थ' इत्यादि "आनन्दादयः प्रधानस्ये"त्यधिकरणे व्यक्तम्, इति तेन न्यायेन निर्विशेषस्यापि स्वरूपस्योपसंहारो न विरुध्यते। व्यक्तं चैतद् लघुचन्द्रिकायाम्—"अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वादि"ति सिद्धिप्रथमवाक्यविवरणावसरे॥

सत्यं निर्विशेषत्वे सिद्ध एव सविशेषत्वं मिथ्येति निर्वाहः, तत्तु वाक्यगतिपर्यालोचनेनैव सिध्यति, यतो विना सङ्कोचं निर्गुणश्रुतीनां तात्पर्यनिर्णय-स्तदानीमेव। न हि निर्गुणवाक्यानां सङ्कोचेनान्यथा नयनं स्वरसम्, प्रामाणिकं वा॥

तत्र कुत्रचन पूर्वं सगुणवाक्यानि, कुत्रचन निर्गुणवाक्यानि प्राक्। सगुणवाक्यान्युभयत्रापि निर्गुणवाक्यापेक्षितनिषेध्यगुणसमर्पकानि। तत्र यत्रानन्तरं सगुणवाक्यानि, तत्र पाठक्रमादर्थक्रमो बलीयानिति न्यायेन वाक्यानां योजना। यथा च शास्त्रबोधितानामपि शास्त्रेण निषेधो नानुपपन्नः, तथा जर्तिलयवाग्वादि-वाक्यन्यायेनोपपादितम्। सर्वज्ञत्वादिकं तु भूतयोनित्वं कल्पितमुपपाद-यितुमेव, न तु परविद्याप्रमेयनिर्गुणाक्षरस्वरूपोपपादनार्थम्। अद्वितीयादि-

वाक्यानि, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च ब्रह्मणि सर्वविशेषाभावं बोधयन्ति ॥

निर्गुणपदं निर्विशेषपरं सर्वधर्मनिषेधपरमेव, न तु नैयायिकाभिमत-गुणमात्रनिषेधपरम्। तत्र हि न सत्त्वादिगुणनिषेध इति पूर्वोक्तिविरोध एकं दूषणम्। सामान्यतः प्रवृत्तस्य पापादिगुणमात्रनिषेधपरतायामपि सङ्कोचेनान्यथानयनदोषस्तु स्थित एव ॥

सामान्यतः सगुणत्वाम्नानं तु न कुत्रापि श्रुतौ, पुराणेतिहासादौ वा। सामान्यतो गुणवर्णनं सगुणाभिप्राय न केनापि वार्यते। न चैतावता निर्गुण-वाक्यानामन्यथानयनमुभयोरपि समबलत्वेऽपि। विरोधो हि विषयभेदेन परिहारमेवार्हति, न त्वेकस्याप्रामाण्येन, अन्यथा नयनेन वा सति सम्भवे। सर्वज्ञत्वादीनां न सत्यत्वमाम्नायते। सत्यकामश्रुतिस्तु सङ्कल्पादीनामुपाधि-धर्मत्वात्, उपाधेरसत्यत्वात्, नित्यत्वनयेन बहुकालाबाध्यत्वेन, व्यावहारिकत्वेन वा निर्वहति ॥

"कामः सङ्कल्पः" इति श्रुतिरुपाधिधर्मत्वमेव कामादीनामाचष्टे। "कामः सङ्कल्प" इति जीवोपाध्यभिप्राया जीवस्य मनउपाधिकं कामाद्याश्रयत्वं बोधयति। 'मनस्तु कार्यं मायायाः' इति कामादेर्मायोपाधिधर्मत्वस्योपलक्षणम्। तदुक्तम्—

'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ॥'

इति। ईश्वरसर्वज्ञत्वादिकं मायापरिणामवृत्त्याश्रयत्वेनेति हि सिद्धान्तः ॥

"ज्ञोऽत एव" इति जीवात्मपरं हि सूत्रम्। "कामः सङ्कल्पः श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धी" रिति श्रुतिर्हि मनोधर्मत्वं धियो बोधयति, नात्मधर्मत्वम्। इदं तु सूत्रं भावार्थत्वात् ज्ञपदस्यात्मनो ज्ञानस्वरूपत्वपरमेव, न तु तदाश्रयत्वपरम्, अन्यथा कथमात्मनो न्यायमत इव नाचेतनत्वापत्तिः? सर्वथा तु—सूत्रमिदं जीवात्मन एव ज्ञानं धर्मोऽपीति बोधयति, न तु परमात्मनोऽपि ज्ञानं धर्मोऽपीति ॥

यदीदमुपलक्षणम्, तर्हि 'कामः सङ्कल्प' इति श्रुतिरपि कामादीनामीश्वरविषयेऽप्युपाधिधर्मत्वमुपलक्षणविधया कथं न बोधयितुमलम्। न चेदं सूत्रम्, श्रुतिर्वा सन्दिग्धा, येन तयोरन्यथानयनं साधु स्यात्। सर्वथा तु कामादेरपि चेतनधर्मत्वं नोक्तं सूत्रं सूचयति॥

न च कामोऽपि धर्मभूतं ज्ञानमात्मनो नित्यधर्मः। "मनसैवैतान् कामान् पश्यती" ति श्रुतिर्मनउपलक्षित आत्मा मनोधर्मानप्यात्मधर्मान् पश्यतीत्येव बोधयति। न हि कामादीनामपि ज्ञानवदात्मधर्मत्वे ज्ञानज्ञेयत्वं कामानां सम्भवति। धर्मभूतं ज्ञानं हि स्वात्मने स्वयं प्रकाशते, प्रकाशयति च स्वाश्रयमात्मानं स्वप्रकाशमिति हि भवतां सिद्धान्तः। अतः कामादीनामात्मधर्मत्वे, विशिष्टपरमात्मधर्मत्वे वा न किमपि प्रमाणम्॥

न हि परमात्मनोऽपि समस्ति मनो नाम, येन "मनसैतान् कामान्पश्यती"ति परमात्मपरमपि स्यात्, इति "मनसैवे"ति श्रुत्यनुसारेण 'कामः सङ्कल्प' इत्यस्या औपचारिकार्थपरत्वं न युक्तम्। मनो हि कामादेरुपादानकारणम्, इत्युपादानोपादेययोरभेदस्य सर्वसम्मतत्वात्—"मन एवे"ति तदभेदश्रवणं नाद्वैतमते विरुद्धम्। "मनसैवैतान् कामान्पश्यन् ब्रह्मलोके महीयते" इति श्रुतिर्मनोव्यापाराधीनत्वं कामाना ब्रह्मलोके मनस एवाभावात्—कथं जीवविषयां 'कामः सङ्कल्प' इति श्रुतिमन्यथाकर्तुमलम्॥

यदि ब्रह्मलोकेऽप्याहङ्कारिकस्य मनसो भावादिति, तर्हि "मनसैवैतान् कामान् पश्यन् ब्रह्मलोके महीयते" इति श्रुतिमवष्टभ्य मनःपरिणामत्वं कामस्य, तद्धर्मत्वं च "कामः सङ्कल्प" इति श्रुतिसिद्ध कथं दण्डेन वार्यते? कुतो वाऽवगतमद्वैतमतेऽपि मनसः कामाद्यभेदो बाधित इति? किं तदा तदा तत्र तत्र परमार्थप्रकाशिकयोदाह्रियमाणा वेदान्तपरिभाषा मनसः कामाद्यभेदश्रवणमेव मनोधर्मत्वं कामादीनां शिक्षयन्ती प्रकृतेंऽशे न शिक्षिता? न वा स्वयं वा द्रष्टुं नापार्यत?

"स्वाभाविकी ज्ञानबलक्रिया चे"ति श्रुतिस्तु सत्यमीश्वरधर्मत्वं ज्ञानस्य शिक्षयन्ती प्रकृत उपयुज्यते, परंतु सापि ज्ञानमात्रस्य, न तु कामादेरपि। न चात्र ज्ञानपदं कामस्याप्युपलक्षणमित्यत्रास्ति किमपि प्रमाणम्। ज्ञानमन्यत्, कामसङ्कल्पावन्यौ। स्वाभाविकत्वं च ज्ञानस्य स्वप्रकाशसंविद्रूपत्वेन, न तु धर्मभूतज्ञानमात्राश्रयत्वेन, मायापरिणामवृत्तिरूपज्ञानाश्रयत्वेन वाऽनित्येन॥

अयमेव न्याय आनन्दांशेऽपि। सोऽपि ब्रह्मस्वरूपः, न तु ब्रह्मणो धर्मः। अत एव—'आनन्दो ब्रह्मेति व्यजानात्' इति पुंलिङ्गानन्दपदेन ब्रह्मपदस्य सामानाधिकरण्यम्। इदं हि वाक्यं गुरुशिष्यभावेनोपदेशार्थं प्रवृत्तमज्ञाततत्त्वावबोधकं नान्यथा व्याख्यातुमलम्। न चात्रार्शआद्यजन्तत्वकल्पनया नित्यनपुंसकज्ञानपदवत् योजयितुं शक्यम्॥

"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"त्यत्रैतस्यानन्दस्येति सामानाधिकरण्येनान्वयस्यैव न्याय्यत्वाद् आनन्दस्वरूपत्वं ब्रह्मण उपदिश्यते। तदानुगुण्यात् "आनन्दं ब्रह्मणो विद्वानि"त्यपि राहोः शिर इतिवद् अभेदे षष्ठ्यैव योजनमर्हति। अत एव—"आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन" इत्यानन्दस्वरूपज्ञानेन भयाभावाम्नानम्। आनन्दगुणवतोऽत्र विवक्षायां तु तद्विरुध्यते। तथाच श्रुतिः—'द्वितीयाद्वै भयं भवति' इति। न चात्र परिच्छिन्नतयाऽऽनन्दज्ञानं वाक्यार्थः। 'उदरमन्तरं कुरुते' इति हि धर्मतोऽपि भेदमानन्दस्वरूपस्य भीतिसाधनतया न सहते॥

आनन्दमीमांसाऽपि "स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" इति सविशेषब्रह्मानन्दपर्यन्तमुत्तरोत्तरोत्कर्षेण परिच्छेदमीमांसामुपसंहृत्य—'यतो वाचो निवर्तन्ते' इति वाङ्मनसागोचरत्वमानन्दस्वरूपस्यैव बोधयति। "स एको ब्रह्मण आनन्दः" इति वाक्यप्रस्तुतब्रह्मानन्दगुणस्यैवात्र विवक्षायां तु—तस्य प्रजापत्यानन्दशतगुणितानन्दरूपेण वाचा परिच्छिन्नत्वात्—'यतो वाचो निवर्तन्त' इति कथमुपपद्यते ?

'सोऽश्नुते सर्वान् कामान् सहे' त्यस्यापि सर्वानन्दमात्रमूलानन्दस्वरूपानुभवप्रतिपादन एव तात्पर्यम्। अश्नुतेपदं तु तस्यैव सच्चिदानन्दस्वरूपत्वं ब्रह्मणो बोधयति। अत एव सर्वकामावाप्तिर्युगपदत्र प्रतिपाद्यमानोपपद्यते। आनन्दगुणतायां तु युगपत्सर्वानन्दानुभवो नाञ्जसः। 'ब्रह्मणा सहे'ति तृतीया सहपदप्रयोगश्च भिन्नवाक्यस्थत्वात् सर्वज्ञब्रह्मभावाप्तिं युगपत्सर्वकामानुभवं च गोचरयति। इत्थंभूतलक्षणाया अत्र विवक्षणाद् अभेदे तृतीयाऽपि सूपपादा। विपश्चित्पदं तु सर्वप्रपञ्चतादात्म्यमेव सर्वज्ञत्वमिति भामतीमतेन वृत्त्युपहितचिन्मात्रत्वाभिप्रायेण। विवरणदृष्ट्या 'सत्यं ज्ञानमि'ति प्रस्तुतज्ञानस्वरूपत्वाभिप्रायेणैव। यथाचात्र ज्ञानपदं न ज्ञातृपरम्, ब्रह्मणो ज्ञानस्वरूपत्वभङ्गापत्तेः, तथोपपादितम्। विस्तरस्तु वेदान्तरक्षामणौ॥

"ब्रह्मविदाप्नोति", 'यो वेद निहितं गुहाया'मित्यादौ ज्ञेयत्ववर्णनं तु—"यस्यामतं तस्य मतं मतं यस्य न वेद सः", "अविज्ञातं विजानतां विज्ञातमविजानताम्" इत्यादिवाक्यैकवाक्यतया घटादिवत् सविशेषतया ज्ञेयत्वनिषेधपरं सद् घटादिसाधारणचिदुपरागादिरूपेण ब्रह्मज्ञातत्वनिराकरणपरम्, न तु वृत्तिव्याप्यत्वमात्रनिराकरणपरमपि। अत एवोक्तम्—

"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्।
ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते॥"

इति। ततश्च ब्रह्मणस्तत्र तत्र ज्ञेयत्वप्रतिपादन तदावरणनिवर्तकवृत्तिमात्रविषयत्वेन, न तु तत्प्रकाशार्थं चिदुपरागाद्यपेक्षया घटादाविवेति तु निष्कर्षः। अत एव—"अनाशिनोऽप्रमेयस्ये"त्यप्रमेयत्वं गीतं शुद्धस्यात्मनो निर्गळिताहङ्कारस्य। अप्रमेयपदस्यार्थान्तरपरतया योजनं तु क्लिष्टयोजनम्, श्रुतार्थत्यागः, अश्रुतार्थकल्पना च। ततश्चात्मा न ज्ञाता, न वा ज्ञेयः, किन्तु ज्ञानस्वरूपमात्रं निर्विशेषमिति सिद्धम्॥

तेन च ब्रह्मणो दुर्ग्रहत्वं ज्ञेयत्वं च न विरुद्धम् , इति घटादिवैलक्षण्यम् , सविशेषाहमर्थादिवैलक्षण्यम् , स्वगतधर्मशून्यत्वं चैकाद्वितीयादिपदबोधितमेव सर्वत्रोपसह्रियते ॥

एतदभिप्रायैव 'नेह नानाऽस्ति' इति श्रुतिरपि । इमामेवावष्टभ्य— प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमद्वितीयत्वनिर्विशेषत्वाद्यपरपर्यायमनुमानेन साध्यते, तत्रासम्भावनाशङ्का मा भूदिति शुक्तिरूप्यादिदृष्टान्तः ॥

अत्र नानापदार्थो भिन्नः, न तु भेदमात्रम् । तत्रापि किञ्चनपदसमभिव्याहाराद् अणुमात्रमपि भिन्नं नास्तीति सजातीयविजातीयस्वगतभेदशून्यत्वमेवैकैवाद्वितीयपदार्थौ विवक्ष्यते, इति "सदेवेदमग्र आसीदेकमेवाद्वितीयमि"ति वाक्यैकवाक्यताऽपि सिध्यति ॥

यद्यपि पृथिवी घटादिभेदेन भिन्ना, इत्यत्रावान्तरधर्मभेदानां विवक्षास्थलेऽवान्तरभेद एव विवक्ष्यते, तदपरिग्रहेण पृथिवी भिन्नेत्यादिप्रयोगे तु विजातीयभेदमात्रं विवक्ष्यते । अत्र तु किचन नाना नास्तीति प्रयोगात् सर्वविधभेदशून्यत्वं वाक्यार्थः ॥

अत एव कठवल्ल्यां भगवत्पादभाष्यम्—"इह ब्रह्मणि नाना किंचनाणुमात्रमपि नास्ती"ति । तेन च "उदरमन्तरं कुरुते। अथ तस्य भयं भवती"ति वाक्यैकवाक्यता ज्ञाप्यते ॥

यत्तु—जगतीदृशनानात्वनिषेध इत्यामोदः, तस्य जगतीतलवर्तिसर्वविधनानात्वनिषेध एवार्थः, न तु इहपदार्थं जगतीति मत्वा जगति नानात्वनिषेधः, न ब्रह्मणीति, येन—**कथमनेन ब्रह्मणि भेदनिषेधः सिध्यतीति** शङ्काऽवसरेत् । नानात्वदर्शननिषेधो हि नानात्वस्य विद्यमानस्य निषेध एव । दर्शनं हि साक्षात्कारो

विद्यमानस्यैव भवति, नाविद्यमानस्य। तथाच जैमिनीयं सूत्रम्—"सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षं विद्यमानोपलम्भनत्वात्" इति ॥

तथाच नानात्वदर्शननिषेधो नानात्वनिषेध एव पर्यवस्यति। "नेह नानास्ति किंचने"ति श्रुतिर्हि नानात्वं निषेधति, न तु नानात्वदर्शनमात्रम्। इहशब्दार्थे प्रपञ्चवति ब्रह्मणि नानानिषेधः सर्वस्य ब्रह्मभिन्नस्य ब्रह्मविवर्तोपादानतायामेव, नान्यथेति ह्यद्वैतसिद्धान्तः, यतो नात्र ब्रह्मपरिणामवादः ॥

यत्तु—**जगदुपादानत्वं** ब्रह्मणोऽस्माक**मपि, संमतमिति,**

तदिदं निराकारि। न च दृश्यमाना भेदा दर्शनावस्थायां दर्शनयोग्यावस्थायाम्, किं बहुना? तत्सत्तादशायां वाऽपलप्यन्ते केनापि, व्यावहारिकसत्त्वाङ्गीकारात ॥

कथञ्चात्र 'सर्वं खल्विदं ब्रह्मेति' सिद्धब्रह्मात्मकत्वस्य निषेधसम्भावनाऽपि। न चात्रावान्तरभेद एव नानापदार्थः ; किञ्चनपदवैयर्थ्यापत्तेः, इति न ब्रह्मण्यवान्तरभेदनिषेधमात्रे तात्पर्यमुक्तश्रुतेः ॥

वस्तुतस्तु—अनेकब्रह्मनिषेध एव यद्युक्ताया श्रुतेः तात्पर्यम्, तर्हि न ब्रह्म नानास्ति, इदं न नानाऽस्तीति वा श्रवणापत्तिः, न तु नेह नानाऽस्ति किञ्चनेतीहपदघटितम्, किञ्चनपदघटितं च तत्सजातीयमवान्तरभेदं द्रव्यं भिन्नं न भिन्नमित्येव वा प्रथमान्तपदसमभिव्याहृतमेव वाक्यं प्रयोगमर्हत्यवान्तरभेदविवक्षायाम्, न त्विह भिन्नमिति, न भिन्नमिति वा ॥

यत्तु—

"यदेवेह तदमुत्र यदमुत्र तदन्विह।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥"

इति मन्त्रेणेहामुत्र च ब्रह्मैकमित्युक्त्या तत्र भेदो निषिध्यते। अनेन त्विहैव ब्रह्म सृष्ट्यादिकार्यभेदेन, प्रकारान्तरेण वा न नानेत्येव बोध्यत इति कठवल्ल्यर्थः। बृहदारण्यकेऽप्यस्य मन्त्रस्यैकेनैव प्रकारेणानुसन्धानम्, न प्रकारान्तरेणेत्येव बोध्यते। इहपदं चात्रेहलोकपरम्, न ब्रह्मपरम्। स च

प्रकार·—अप्रमेयत्वविरजस्त्वादि, सरजोऽन्यद् इत्येवं ब्रह्म नानाविधं न मन्तव्यमित्युच्यते—इति,

तदिदं 'यदेवेह तदमुत्रे'ति वाक्ये लोकद्वयसाधारण्यं न ब्रह्मणः प्रतिपाद्यते; तस्य व्यापकस्य देशभेदेनानुपहितस्य भेदशङ्काया एवाकाशस्येवासम्भवात्, किन्त्वन्य एवार्थो भाष्यादौ प्रसिद्धः। एवं सृष्टिस्थित्यादिकार्यभेदकर्तृ ब्रह्मैवेति न केनापि प्रमाणेन सिद्धम्, इति तत्तत्प्रकारभेदेन ब्रह्मभेदशङ्काया इह नावसरः ॥

वस्तुतस्तु—ब्रह्मणः सृष्टिस्थित्यादिकार्यभेदेन ब्रह्मरुद्राद्यात्मना भेद एवोभयसम्मतः, अन्यथा पाञ्चरात्रमेव प्रमाणम्, न तु पाशुपतमित्यादिमतभेदो निरालम्बः स्यात्, नापि वा ब्रह्मा नारायणस्य, रुद्रस्तु ब्रह्मणः पुत्र इत्यादिवादा अवसरेयुः ॥

इहपदं हि 'नेह नानास्ति किञ्चने'ति "मनसैवेदमाप्तव्यमिति" पूर्ववाक्यप्रस्तुतं विशेष्यं ब्रह्मैव परामृशति। बृहदारण्यके च "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति पूर्ववाक्यप्रस्तुतस्य यच्छब्दार्थस्य ब्रह्मण एवेहशब्देन परामर्श इति विशदम्। "एकधैवानुद्रष्टव्यमि"त्यत्रैकधापदमपि स्वरूपेणाप्रमेयत्वादिनिर्विशेषरूपेणैवावगन्तव्यम्, न तु सविशेषरूपेणेत्यर्थपरमेव ॥

अप्रमेयत्वं हि निर्विशेषतायामेव भवति, न सविशेषतायां पारमार्थिक्याम्। भवन्मते हि स्वप्रकाशानुभूतिरप्यनुभाव्या, नाननुभाव्येति हि मन्यते, इति कथं ब्रह्मणः संविद्रूपस्याप्यप्रमेयत्वम्?

अत्र नानापदस्य भिन्नपरस्य प्रकारान्तरपरत्वं क्लिष्टकल्पनयैव। न च ब्रह्मणि प्रकारान्तरेण भेदः प्रत्यक्षसिद्धः, येन प्रत्यक्षसिद्धस्य भेदस्यापलापायोगः। सर्वात्मस्वरूपतया वस्तुतत्त्वज्ञाने, न कर्ता, न कर्म, न क्रियेत्युभयसंप्रतिपन्नम्, तदभावस्तु स्वरूपत इत्यद्वैतम्, न पृथक्तयेति भवताम्, ब्रह्मणा सर्वस्या-

पृथक्सिद्ध्यङ्गीकारात् । यथाचापृथक्सिद्धत्वम्, अयुतसिद्धत्वमिव दुर्निरूपम्, तथा परमाणुकारणतावादनिराकरणावसर आकरे व्यक्तम् ॥

तत्र सर्वात्मत्वं ब्रह्मणो न तदपृथक्सिद्धत्वेन, किन्तु सर्वाभावेनेति 'सर्वं खल्विदं ब्रह्मे'ति वाक्यं बोधयति । कार्यकारणयोस्तादात्म्यं हि द्रव्यैक्य-निबन्धनम्, सर्वात्मत्वं तु शरीरशरीरिभावेन । तत्र द्रव्यैक्यं कारणद्रव्यातिरेकेण कार्याभावनिबन्धनं बाधायां सामानाधिकरण्येनैव ॥

न हि जगद्ब्रह्मणोर्द्रव्यैक्यनिबन्धनसामानाधिकरण्योपपादकं साक्षादुपा-दानत्वम्, अन्यद्वा सम्भवति । ब्रह्मव्यतिरेकेण सर्वाभावविज्ञाने हि सुलभा शान्तिः । सर्वमुद्देश्यम्, इदं ब्रह्म प्राकरणिकं विधेयम् । अत्र ब्रह्मत्वविधानं न नानात्वनिषेधपर्यवसायि । न च शरीरत्वेऽपि सर्वेषां शरीरशरीरिणोरपृथक्-सिद्धयोरपि भेदस्वीकाराच्च नानात्वनिषेधः सम्भवति । स्वतन्त्रपरतन्त्रादि-भेदो न प्रामाणिकः । न हि स्वतन्त्रभेदज्ञानमशान्तिकारणम्, परतन्त्रभेद-ज्ञानं शान्तिहेतुः; बद्धानामपि शरीरात्मस्वरूपतया प्रत्यगात्मज्ञानस्यापि शान्ति-हेतुत्वापत्तेः । अस्मदादिशरीरतत्तच्छरीरिणोरपि न स्वतन्त्रभेदः । अतो बाधायां सामानाधिकरण्यमेव—"सर्वं खल्विदं ब्रह्मे"त्यादौ । ततश्च सद्विद्या-परविद्यादिकं 'नेह नानास्ति किञ्चने'त्यादिकं च वेदान्तवाक्यजातं ब्रह्मणोऽ-द्वितीयत्वम्, निर्विशेषता च बोधयतीत्यवश्यमेव स्वीकर्तव्यम् ॥

तत्र "श्रोतव्यो मन्तव्य" इति विधीयमानं मननं वेदान्तानां द्वितीय-मिथ्यात्वनिर्णयायोपकरोति निर्विशेषस्यैव पारमार्थिकत्वे । तत्सविशेषताया एव परमतात्पर्यविषयतायां तु किं कृत्यं मननस्य वेदान्तार्थनिर्णये ? श्रोतव्यविधि-सिद्धविचारमात्रेण चारितार्थ्यात्, इति निर्विशेषतावाद एवानुमानप्रमाण-स्वीकारस्य स्वसिद्धान्तसमर्थन उपयोगः साक्षात्, परम्परया वा सम्भवति । अनुमानप्रमाणप्रयोजनं तु जैनसौगतादिसाधारणमपि, न वैदिकानामसाधा-रण प्रमाणम्, इति पृथगनुमानप्रमाणाङ्गीकारो भवतां निष्प्रयोजनः । अद्वैतमते तु नैवम्, उक्तरीत्या सप्रयोजनत्वात् ॥

तत्रानुमाने (101—108) दृश्यत्वादिकमिव व्यावर्तमानत्वमपि हेतुः। तथा हि—विमतम्, अपरमार्थम्, व्यावर्तमानत्वात्—इति। अत्रापरमार्थत्वरूपसाध्यं कालविशेषावच्छिन्नबाधयोग्यत्वम्। न चैवं ब्रह्म, न वा शून्यम्, इति न बौद्धादिसाधारण्यं साध्यमानस्यापारमार्थ्यस्य। इयान् विशेषः—बौद्धमते शून्यं परमार्थम्, अद्वैतमते तु सच्चिदानन्दरूपं ब्रह्म॥

शून्यं न सत्, नासत्, न सदसत्, न वा सदसद्विलक्षणम्, मिथ्याऽपरमार्थो वा। प्रपञ्चस्य सांवृतिकसत्यत्वं तु समानम्। परं तु सांवृतसत्यत्वं तत्र निरधिष्ठानकत्वप्रयुक्तम्, न तत्त्वाश्रयविषयाविद्याप्रयुक्तत्वम्, किन्तु सवासनविज्ञानसन्तानमात्रप्रयुक्तत्वम्। विशिष्टाद्वैतमते तु सर्वं परमार्थम्। अतस्तदेवोपलक्ष्यापारमार्थ्यं शुक्तिरजतादिसाधारणं साध्यते। उभयत्र व्यावर्तमानत्वम्, अधिष्ठानसाक्षात्कारप्रयुक्तनिवृत्तिप्रतियोगित्वम्, कालविशेषावच्छिन्नबाधयोग्यत्वमत्र साध्यते। न चाद्वैतमते द्वैतरूपप्रतियोग्यप्रसिद्ध्याऽद्वैतानुपपत्तिः; व्यावहारिकस्य तस्य प्रसिद्धत्वात्॥

इदमेव लौकिकपारमार्थिकत्वं नाम, बौद्धमते च सांवृतसत्यत्वमिति। विशिष्टाद्वैतमतेऽपारमार्थ्यं सर्वज्ञानयाथार्थ्यवादस्वीकारात् प्रतियोग्यप्रसिद्ध्याऽसिद्धम्, इति प्रकृतानुमानेन तत्साधनम्। पारमार्थ्यं प्रपञ्चस्य हि तन्मते दुर्वचम्। न च ब्रह्मणो यादृशपारमार्थिकत्वं तादृशमेव जगतोऽपि। तस्य हि ज्ञानानिवर्त्यत्वं पारमार्थिकत्वम्। न चैतज्जगतोऽपि ज्ञाननिवर्त्यतया श्रुत्यवगतस्य। अविनाशित्वं वा ब्रह्मणः पारमार्थिकत्वम्, न चैतत्प्रपञ्चस्यापि विनाशिनः। तच्चाज्ञाननाशप्रयुक्तनाशप्रतियोगित्वम्, नाशप्रतियोगित्वं वा। न चैतद्विशिष्टाद्वैतमतेऽपि सिद्धम्, येन सिद्धसाधनं स्यात्॥

प्रमाणजन्यवृत्तिविषयत्वयोग्यत्वं पारमार्थ्यमित्यपि युक्तमेव। न चैतज्जगतोपि; सन्मात्रे ज्ञानस्य प्रामाण्यमिति तत्त्वशुद्धिकारमते विकल्पांशे सर्वस्य ज्ञानस्य भ्रमत्वेन प्रमाणजन्यवृत्तिविषयत्वाभावात्, ब्रह्मणोऽपारमार्थ्यप्रसङ्गाभावाच्च॥

अदृश्यत्वं पारमार्थ्यम्, तद्विपरीतमपारमार्थ्यमित्यपि युक्तमेव। ब्रह्मणस्तु नादृश्यत्वाभावः, दृश्यत्वं वेति न दोषः ॥

अबाध्यत्वं पारमार्थिकत्वम्, बाध्यत्वमपारमार्थिकत्वमिति तु फलितोऽर्थः। अनिर्वचनीयख्यातेरेव युक्तत्वेन सदन्यथाख्यात्योरयोगेन, नेदं रजतमिति बाधज्ञानस्यान्यथानयनायोगेन च शुक्तिरूप्यादौ बाधप्रसिद्धेः, अप्रसिद्धौ वानेनैव साधनात्। रज्जुसर्पादिस्थले ज्ञानमेव बाध्यम्, न सर्प इति वादस्तु सत्ख्यातिवादिनां भामत्यादौ विस्तरेण निरस्तः ॥

देशकालविशेषे विषयास्तित्वं विना ज्ञानस्योपपत्तिर्न विरुध्यत इति तु न युक्तम्; यत्र यद्बुद्धिः, तत्र तदालम्बनत्वनियमात्। एकत्र निरालम्बनत्वे सर्वत्र कथं न निरालम्बनत्वमिति विज्ञानवादात् कथं निस्तारः? रज्जुसर्प इति रज्जावेवास्ति कश्चनापूर्वः सत्यसर्पाकार एवेति ह्यनिर्वचनीयख्यातिः। एवमपि तस्य मिथ्यात्वं तु भाविबाधप्रतीत्या, न तदानीमेव बाधेन। अयमेव न्यायो घटादावपि ॥

अपरमार्थमेव किञ्चिन्नास्ति चेत् "अनाशी परमार्थश्चे"ति परमार्थशब्दोक्त्या किं कृतम्? देशकालविशेषापेक्षयाऽस्तित्वनास्तित्वप्रतियोगिनि केवलास्तित्वबुद्धियोगित्वमात्रमपरमार्थत्वमिति तु न युक्तम्; देशकालसम्बन्धानपेक्षप्रतीतिविषयपरिच्छिन्नानित्यवस्तुनोऽप्रसिद्ध्या परमार्थपदकृत्यस्यापरमार्थवस्तुस्वीकारं विनाऽसम्भवात्। तदेवम्—विमतम्, अपरमार्थमित्यनुमाने साध्यस्वरूपनिष्कर्षः ॥

अथ व्यावर्तमानत्वं हेतुरपि सुवच एवेति नात्र हेतोराभासत्वम्। न चात्राभावप्रतियोगित्वमात्रं व्यावर्तमानत्वम्, अपारमार्थ्यं च केवलास्तित्वाभावः, कादाचित्कास्तित्वम्, येन घटादौ सिद्धसाधनं स्यात्। निरुक्तं ह्यदुष्टमपरमार्थत्वमन्यविधमधस्तात्। न च तद्घटादौ सिद्धम्, इति न तत्र सिद्धसाधनावकाशः ॥

अत्राभावप्रतियोगित्वेन त्रैकालिकनिषेधप्रतियोगित्वसाधने जगत्, त्रैकालिकसत्तावत्, कदाचित्सत्त्वादिति सत्प्रतिपक्षो न सम्भवति; शुक्तिरूप्ये द्वितीया-

नुमानस्य व्यभिचारात्। न च शुक्तिरूप्यासिद्धिः परं प्रत्यनुमानप्रयोगावसरे भवता वक्तुं शक्यते, परेण तदङ्गीकारात्। तदसिद्धवत्कृत्यानुमानप्रयोगेऽप्यप्रयोजकोऽयं हेतुर्द्वितीयानुमाने। ब्रह्मणस्त्रैकालिकसत्त्वं तु बाधकज्ञाने बाध्यतयाऽविषयत्वप्रयुक्तम्, न तु कदाचित्सत्त्वप्रयुक्तम् ॥

किञ्च कदाचित्सत्त्वम्—किमस्तिक्रियासंबन्धित्वम्, कदाचिदबाधितत्वम्? उत कदाचित्सत्तादात्म्यम्? कदाचित् सत्तासामान्यवत्त्वम्? अर्थक्रियाकारित्वम्? अन्यद्वा? तत्र नाद्यः, शशशृङ्गमस्तीति प्रतीत्या तत्र व्यभिचारात्। अस्तिरप्रयुज्यमानोऽपि गम्यत इति हि न्यायः। न द्वितीयः; कालविशेषे बाध्यत्वेन जगतोऽसिद्धेः। न तृतीयः; दृष्टान्ते ब्रह्मणि हेत्वसिद्धेः, सति भेदघटितसत्तादात्म्याभावात्। न तुरीयः; सामान्यादौ व्यभिचारात। सर्वत्र कदाचित्पदकृत्याभावेन व्याप्यत्वासिद्धिः। सत्त्वमात्रस्य हेतुत्वेऽपि पूर्वोक्तान्येव दूषणानि। सर्वेषु पक्षेष्वप्रयोजकत्वं च। अत्यन्ताभावप्रतियोगित्वं स्वानधिकरणकत्वविशेषितमेवात्र विवक्ष्यत इति न ब्रह्मणि व्यभिचारः ॥

एतेन—सन्, परमार्थः, अनुवर्तमानत्वादित्यनुमानमपि—व्याख्यातम्। अनुवर्तमानत्वं सर्वप्रतीतिविशेष्यत्वम्; घटः सन्, पटः सन् इत्यादौ सर्वत्र सत एव विशेष्यतया विषयत्वात। उक्तं च—

"सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते।"

इति। अत्र सदिति ह्यधिष्ठानानुवेधः, न तु घटादिगतं सत्तासामन्यार्थक्रियाकारित्वादिकम्, इति नात्राप्याभासशङ्का हेतोः। तदेवं श्रुत्युपबृंहकतयाऽनुमानस्योपयोगाद् अद्वैतसिद्धान्तोपबृंहकमनुमानं वेदान्तवदेवाद्वैतसिद्ध्युपयोगि, अन्यत्र तु न तथेत्यनुमानप्रमाणपरिच्छेदः ॥

॥ इति अनुमानप्रमाणम् ॥

---

## ॥ अथोपमानपरिच्छेदः ॥

उपमानमपि धर्म इव ब्रह्मण्यपि प्रमाणमद्वैतमते भाट्टमत इव। धर्मे हि तस्य प्रामाण्यं विकृतौ प्राकृतधर्माणामतिदेशायोपयुज्यते। अन्यसादृश्यादन्य-

सादृश्यज्ञानमुपमानमिति हि तल्लक्षणमुभयत्रापि। तत्राद्वैते सादृश्यस्येव वैसादृश्यस्याप्युपमानप्रमेयत्वेन ब्रह्मवैलक्षण्येन प्रपञ्चस्य मिथ्यात्वम्, प्रपञ्च-वैलक्षण्येन ब्रह्मसत्यत्वं चाद्वैतिनामसाधारणं प्रयोजनम् ॥

अनुमानापेक्षितदृष्टान्तसमर्पकतयोपमानप्रमाणोपपत्तिः। अत एव तदनन्तरं सर्वत्रोपमानप्रमाणचर्चा सर्वत्रोपमानप्रमाणवादिनिबन्धेषु ॥

उपमानस्याप्यनुमान एवोपयोग इति विशिष्टाद्वैतिनः। तत्रालौकिकप्रत्यक्षेऽन्तर्भावो भवत्विति शङ्का हि, या 'अनुमिनोमी'त्यनुव्यवसायानुपपत्त्याऽनुमान-प्रमाणस्य स्वतन्त्रस्य स्वीकारे प्रधानासु युक्तिष्वन्यतमा, तयैव—उपमिनोमीत्यनु-व्यवसायानुपपत्त्योपमानप्रमाणमपि स्वतन्त्रं स्वीकर्तव्यमिति तत्प्रामाण्यवादिनः ॥

अत्र नैयायिकाः—गवयो गवयपदवाच्य इति ज्ञानमुपमितिरिति वदन्ति। तत्र च—'शक्तिग्रहो व्याकरणोपमानकोशे'त्यादिना शक्तिग्राहकेषूपमानस्यापि परिगणनादुपमानस्य स्वतन्त्रं प्रामाण्यम्। विशिष्टाद्वैतमते तदङ्गीकारस्या-साधारणं प्रयोजनं यदि नास्ति, तर्हि तदनङ्गीकार एव तु पूर्वोक्तरीत्या समुचितः॥

॥ इत्युपमानपरिच्छेद ॥

---

## ॥ अथार्थापत्त्यादिप्रमाणप्रयोजनादि ॥

एवं व्यतिरेक्यनुमानेनैव गतार्थत्वे नार्थापत्तिरपि प्रमाणमित्यादि परिभा-षाव्याख्यायां रामकृष्णदीक्षितकृत्यादौ व्यक्तम्। अनुपलब्धेर्मानान्तरत्वं भट्टा इवाद्वैतिनोऽपि स्वीकुर्वन्ति। अधिकरणस्वरूपत्वपक्षेऽप्यभावस्य, अभावत्वेन तज्ज्ञानस्य बाधज्ञानत्वव्यपदेशः तत्स्वतन्त्रप्रमाणताङ्गीकारस्य प्रयोजनम् ॥

अन्यथा भ्रमात् पूर्वं शुक्तिस्वरूपस्यापि रजताभावरूपत्वात् चक्षुषा शुक्त्यंशस्य ग्रहणात्—कथं तदानीन्तनशुक्तिज्ञानमपि न बाधज्ञानं स्यात्? कथंतरां च भ्रमज्ञानत्वमेवोदयमियादित्यादिशङ्का दुष्परिहरा ॥

तत्रोपाधिसङ्करेऽप्युपधेयासङ्कर इति न्यायेनानुपलब्धिप्रमाणमपि यद्यपि प्रत्यक्षम्, यथाऽनुमानेन पर्वतांशे ज्ञानं प्रत्यक्षलक्षणलक्षितं प्रत्यक्षमेव, एवमनुप-

लब्धिफलस्य प्रत्यक्षत्वं न विहन्यत इत्यद्वैतिनामाशयः। येषां मते नेन्द्रियजन्यत्वं प्रत्यक्षत्वम्, तेषां बाधज्ञानस्यापि प्रत्यक्षत्वोपपादनमनुपलब्धिप्रमाणान्तरत्वे न युज्यते, इत्यनुलब्धेर्न प्रमाणान्तरत्वम्, प्रत्यक्षप्रमाणाभावस्यैवानुपलब्धिप्रमाणत्वात्। अभावप्रत्यक्षमेव प्रत्यक्षप्रमाणाभावरूपानुपलब्धिफलमिति तु निष्कर्षः। न ह्यभावज्ञानसामान्यमनुपलब्धिप्रमा, किन्त्वभावप्रत्यक्षप्रमाणमेवानुपलब्धिरिति वदन्तो भट्टाचार्या एवात्र प्रमाणम्। सर्वथा तु बाधाख्याभावप्रमानिरूपणार्थमनुपलब्धिप्रमाणम्। तदपि मिथ्यात्वस्वरूपनिर्णय एवोपयुज्यतेऽद्वैतमते, अन्यत्र तु न तथेति न तत्रास्था॥

॥ इत्यर्थापत्त्यादिप्रमाणप्रयोजनादि॥

---

## अथ शब्दप्रमाणम्॥

शब्दप्रमाणप्रयोजनं तु प्रमाणान्तरानवगतसविशेषब्रह्मस्वरूपनिर्णयो विशिष्टाद्वैते, अद्वैते त्ववान्तरतात्पर्यविषयतया सविशेषब्रह्मणः, महातात्पर्यविषयतया निर्विशेषब्रह्मस्वरूपस्य च निर्णयः फलम्॥

तत्र शब्दस्याप्यनुपलब्ध्यादेरिव प्रत्यक्षम्, तत्रापि निर्विकल्पकं प्रत्यक्षं फलमित्यद्वैतिनां प्रस्थानविशेषः, यत्र 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति वाक्ये वेदान्तश्रवणम्, श्रुता वेदान्ता वा प्रधानम्, मनननिदिध्यासने अङ्गे। इदं तु विवरण-तदनुयायिनां प्रस्थानम्। भामतीप्रस्थानं तु मन एव श्रवणमननादिजन्यसंस्कारसचिवमात्मप्रत्यक्षसाधनम्, शब्दस्य तु न साक्षात्कारः फलम्, यत्र निदिध्यासनमङ्गि, प्रधानं वा, श्रवणमनने त्वङ्गे। तत्रानास्थावन्तोऽपरे तु सर्वाणि समप्रधानानि, नात्राङ्गाङ्गिभाव इति॥

तत्र केषांचन श्रवणमात्रेणापरोक्षसाक्षात्कारः सम्भवति, येषां शब्देनापि साक्षात्कारो न विरुध्यते। श्रवणमनननिदिध्यासनानीव सगुणोपासनं भक्तिरप्यात्मसाक्षात्कारसाधनमित्यपि केचन कल्पतरुकारादयः॥

तत्र शब्दप्रामाण्ये शब्देन शाब्दप्रमायां जननीयायामाकाङ्क्षायोग्यतासत्तितात्पर्यज्ञानानां सहकारिकारणत्वे न विप्रतिपत्तिः । सर्वथा तु साक्षात्कारस्यैव तत्त्वमस्यादिमहावाक्येन जननेऽपि न तस्य प्रत्यक्ष एवान्तर्भाव इति त्वनुसन्धातव्यम् । तत्रानुपलब्धेः सर्वत्र प्रत्यक्षैकफलकत्वात् तस्याः प्रत्यक्ष एवान्तर्भाव इति कामं भवेत् , शब्दस्य तु प्रत्यक्षम् , परोक्षम, तत्रापि सविकल्पकम् , निर्विकल्पकं वा ज्ञानं यथायथं फलमिति फलभेदात् , तत्र विप्रतिपत्तावपि स्वतन्त्रप्रमाणान्तरत्वे, तत्रापि वेदप्रामाण्ये प्रायेण न विप्रतिपत्तिः। अत्र प्रायपदप्रयोगः प्राभाकरमते लौकिकशब्दानामनुमानविधयैव प्रामाण्यम्, वेदानां त्वपौरुषेयतया पृथक् प्रामाण्यमिति मतभेदः कश्चनास्ति प्रामाण्यवादिष्विति सूचयितुम् ॥

तत्र शब्दजन्यं ज्ञानं सविकल्पकमेव, तेन च वेदान्तानां सविशेष एव प्रामाण्यम् , न तु निर्विशेषे, इति विशिष्टाद्वैतादिपक्षपातिन. सर्वेऽपि वेदान्तिनः । तत्र प्रथमं निर्विकल्पकं ज्ञानं शब्दजन्यम् , इन्द्रियजन्यं वा भवतु ; तस्य निर्विशेषे वस्तुनि प्रामाण्यम् , उत नेति विचारोऽत्रात्यन्तमुपयुज्यते, इत्यादौ निर्विकल्पकज्ञानस्वरूपं विचार्यते ॥

तत्र विविधः कल्पो विकल्प अनेक· प्रकार· अनुवृत्ति-तद्भिन्नद्विविधप्रकारावगाहि सविकल्पकम्, अतथाविधं निर्विकल्पकम् । गौरिति गोत्वविशिष्टगोज्ञानं गोत्वस्य केवलस्य गवि ग्रहणेन निर्विकल्पकम् , अनुवृत्तिविशिष्टगोत्वप्रकाराबगाहि तु 'गौरि'ति ज्ञानं द्वितीयादि सविकल्पकम् , संस्कारोद्बोधासहकृतेन्द्रियजन्यज्ञानं निर्विकल्पकम्, तत्सहकृतेन्द्रियजन्यं ज्ञानं सविकल्पकम् , निर्विकल्पशब्दात् सामान्यत· सर्वविधविकल्पराहित्यस्य प्रतीयमानत्वेऽपि विषयविधया तद्राहित्ये सङ्कोचे प्रमाणाभावात् सन्मात्रावगाहिनी त्वन्तःकरणवृत्ति· सविकल्पकभिन्नत्वाद्यनेकधर्मसद्भावादनुभवानुरोधेन नानाधर्मावगाहित्वस्यापि तत्र सत्त्वेनानुवृत्तिरूपविषयस्य विषयविधया राहित्यपरतया सकोचोऽपि युक्त एवेत्यादि—परमार्थप्रकाशिका भणति ॥

तत्र ज्ञाने साक्षादनुवृत्तेर्न प्रकारत्वम्, किन्तु प्रकार एवानुवृत्तेः प्रकारत्वम्, इति सविकल्पकत्वं कथमनुवृत्ति-तद्भिन्नप्रकारकत्वम्? कथंचनानेकस्य प्रकारतामात्रेण सविकल्पत्वम्, तद्वैपरीत्येन निर्विकल्पत्वमिति विवक्षा तु प्रकारमात्राविवक्षयाऽपि उपपद्यते, इति सर्वात्मना निष्प्रकारत्वमेव निर्विकल्पकत्वमित्यत्रैव पर्यवस्यति। न ह्येकप्रकारकत्वमेवानेकप्रकारत्वप्रतिद्वन्द्वि। यद्यनुभवानुसारात् तथा कल्पनम्, तर्हि कस्यायमनुभवः? सर्वात्मना निष्प्रकारकमेव हि निर्विकल्पकमिति सर्वानुभवसिद्धम्॥

एतेन—संस्कारोद्बोधासहकृतेन्द्रियजन्यज्ञानं निर्विकल्पकम्, तत्सहकृतेन्द्रियजन्यज्ञानं सविकल्पकमिति—परास्तम्॥

तथा सति हि सर्वं सविकल्पकं प्रत्यभिज्ञानात्मकमिति फलति, इति को वा विशेषः प्रत्यभिज्ञातः? तत्तादृशविषयत्वाविषयत्वाभ्यामिति चेत्, संस्कारोद्बोधस्य सहकारिकारणत्वेन कथं न तत्रापि तदभानम्॥

न च सर्वं सविकल्पकं ज्ञानं संस्कारोद्बोधसहकृतेन्द्रियजन्यम्। इन्द्रियादिजन्यत्वमात्रेण हि सविकल्पकप्रत्यक्षत्वम्, न तु तत्र संस्कारोद्बोधोऽपि सहकारी; अन्यथा प्राथमिकज्ञानस्य कथं प्रत्यक्षत्वम्? तत्र प्राथमिकप्रत्यक्षे संस्कारोद्बोधासहकृतेन्द्रियजन्यत्वम्, इति द्वितीयादौ यावत्संस्कारोद्बोधं निर्विकल्पकं प्रत्यक्षम्, सविकल्पकप्रत्यक्षं तु तत्सहकृतेन्द्रियजन्यमिति प्रत्यक्षस्य द्विविधस्य द्विविधं लक्षणम्, प्रत्यभिज्ञानस्य त्वपरं लक्षणमिति लक्षणानेकत्वम्॥

तत्र च प्रत्यभिज्ञायामिव तत्तायाः सविकल्पेऽपि कथं न भानम्? अतः सर्वात्मना प्रकारानवगाहित्वमेव निर्विकल्पस्य लक्षणम्। तथैव च तल्लक्ष्यते —"सप्रकारकं ज्ञानं सविकल्पकम्, निष्प्रकारकं ज्ञानं निर्विकल्पकम्" इति। सप्रत्यवमर्शं प्रत्यक्षं सविकल्पकमित्यपि प्राचामेवोक्तिरिति चेत्, सोऽयमिति परामर्शस्यैव प्रत्यवमर्शरूपत्वात्। सेयं गौरिति द्वितीयादिज्ञानं तथाननुभवान्न प्रत्यभिज्ञानमपि; स्वरूपमात्रप्रश्नोत्तरशब्दाजन्यं सविकल्पमित्यभिप्राया सा तेषामुक्तिरिति सन्तुष्यताम्॥

सति चैवं निष्प्रकारकं ज्ञानं निर्विकल्पकम्, सप्रकारकं ज्ञानं सविकल्पकमिति पूर्वाचार्योक्तिरपि नाप्रमाणं भवति। न हि विद्यमान सर्व भासत इति नियमः, अन्यथा प्राथमिकज्ञानगतान्तःकरणवृत्तित्व-सविकल्प-भिन्नत्वाद्यनेकधर्माणामप्यनुवृत्त्यविशेषितानां कथं न प्रतीतिः? यदीन्द्रिया-सन्निकर्षात्, तर्हि सामान्यमात्रस्येन्द्रियसन्निकर्षात् तज्ज्ञानमात्रं निर्विकल्पकम्, धर्मिणोऽपीन्द्रियसंनिकर्षात् तद्विशिष्टज्ञानं सविकल्पकमेवास्थीयताम् ॥

अथवा प्रथमपिण्डमात्रग्रहणं निर्विकल्पकम्; अप्रकारकत्वात्, द्वितीयादि-ज्ञानं तु धर्मविशिष्टग्रहणात् सविकल्पकमिति ॥

न हि सर्वं सर्वत्र वा सत् प्रतीयत इति नियमः। विषयविधया सर्वप्रकारराहित्यमेव निर्विकल्पकत्वं ज्ञानस्य, तदपि वृत्तिरूपस्य ज्ञानस्य। संविन्मात्रं स्वरूपज्ञानं तु सर्वदा निर्विकल्पमनावृतावस्थायाम्, आवृतावस्थायां वृत्त्यज्ञानान्यतरोपाधिवशात् सविकल्पकमेव, यदि स्वरूपातिरिक्तं प्रकारतया भासते। अत एव सर्वं ज्ञानं सन्मात्रे निर्विकल्पकमिति प्राचामाचार्याणां व्यवस्था ॥

सविकल्पनिर्विकल्पभेदेन प्रत्यक्षविभागो हि वृत्तिरूपं ज्ञानमादाय, न तु स्वरूपज्ञानम्। अत एवाखण्डाकारवृत्तेरप्यखण्डचिन्मात्रविषयत्वेनैव निर्विकल्प-त्वम्, यथा सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य। यथा चानुवृत्तेः प्रथम-ग्रहदशायामप्यविषयत्वेन निर्विकल्पत्वम्; तद्भासकाभावात्। एवं तत्त्वमस्यादि-वाक्यजन्यज्ञानस्यापि तत्त्वंपदार्थयोः सतामपि धर्माणामौपाधिकानामविवक्षया-ऽभानात् निविकल्पकत्वं कथं दण्डेन वार्यते?

वाक्यजन्यज्ञानविषयतायां हि तत्तत्पदार्थज्ञानमेवाकाङ्क्षादिसहकृतं प्रयोजकम्, न तु पदार्थत्वम्, तद्धर्मत्वमात्रं वा। ज्ञानस्य त्रिपुटीविषयकत्व-नियमोऽपि सविकल्पकवृत्तिज्ञानाभिप्रायः, न तु स्वरूपज्ञानाभिप्राय इति संप्रतिपन्नम्; स्वस्मै स्वयंप्रकाशस्य तस्य स्वातिरिक्तविषयाद्यप्रकाशत्वात् ॥

स्वरूपज्ञानं ब्रह्म निर्विकल्पमिति वस्तुतो ब्रह्मणि विकल्पानां सर्वेषां कल्पितत्वेन भाविबाधमादाय, यावद्बाधं तु तदपि सविकल्पकमेव। अत एव सविशेषपरत्वमप्यवान्तरतात्पर्यविषयतया वेदान्तानाम्। वृत्तिज्ञानं कदाचित्स विकल्पकम्, ब्रह्म तु सदैव सविकल्पकमिति तु न युक्तम्, समर्थस्य क्षेपायोगात्, उपक्रमादितत्पर्यज्ञानसहकृतनिर्विशेषवाक्याप्रामाण्यायोगाच्च ॥

विशेषपक्षकं निर्विशेषानुमानमपि न दुष्टम्। तद्यथा—विशेषाः, साधिष्ठानाः, बाध्यत्वात्, शुक्तिरूप्यादिवत्" इति। 'नात्र रजतमि'ति बाधज्ञानेन देशविशेषे रजताभावबोधात् देशविशेषावच्छिन्नास्तित्वप्रकारकप्रतीतिविषयत्वमेव स्वीकर्तव्यम्, न तु अस्तीति प्रतीतिविषयत्वमात्रम्। अत शुक्तिरूप्यादिष्वपि बाध्यत्वं साधिष्ठानकत्वं च वर्तते, इति दृष्टान्तसिद्धिः। अत एव मननविधिरुपपद्यते ॥

विशेषाः, सामान्यप्रकृतिका', विशेषत्वादित्यनुमानमपि न दुष्यति। मृदादौ सामान्येऽपि निर्विशेषत्वेनैव प्रकृतित्वम्, अन्यथा सदा घटादीना तत्र सत्त्वे कारकव्यापारवैयर्थ्यम्। सामान्यं नाम न जातिः, किन्तु निर्विशेषानुगतस्वरूपमात्रम्। निर्विशेषस्य ब्रह्मणः प्रकृतित्वमन्यादृशम्, मृदादेस्त्वन्यादृशमिति त्वन्यदेतत् ॥

इदं निर्विशेषत्वानुमानमपि शब्दप्रमाणोपबृंहकतयैव प्रमाणम्, न तु स्वतन्त्रतयेति तु स्थितमन्यत्र। न च निर्विशेषत्वस्य दृष्टान्ताभावेनाविधेयत्वम्; मृदादिदृष्टान्तस्य प्रसिद्धत्वात्। तथाच श्रुतिः—"वाचारम्भणं विकारो नामधेयम्, मृत्तिकेत्येव सत्यम्" इति। अनेन हि घटादीनां प्रकृतौ त्रैकालिकसत्त्वमात्रं निषिध्यते। तच्च जगतो ब्रह्मण्यपि समानम्। पक्षसंबन्धादिकं तु यावद्बाधं व्यावहारिकसत्त्वमादायोपपद्यते ॥

सत्यं सविशेषस्य विशेषणविधया निर्विकल्पज्ञानेऽभानेऽपि स्वरूपतः सत्त्वात् निर्विशेषविषयनिर्विकल्पकज्ञानेनापि वस्तुतः सविशेषत्वं न बाध्यते,

यथा मृदि घटादीनां स्वरूपेण त्रैकालिकसत्त्वाभानेऽपि न घटस्य स्वरूपतः कालत्रयेऽप्यभावः ; अन्यथा मृदः पुनरपि घटान्तरानुत्पादात् । कारणात्मना तु तत्र कदाचित्सत्त्वमनिवारणीयम् । एवमेव ब्रह्मण्यपि प्रपञ्चस्य सर्वदाऽभावः सर्वेणापि रूपेण न संभवतीति चेत्, सत्यम् ; परिणामिकारणत्वात् मृदः, कारणरूपेण, स्वरूपेण वा कालत्रयेऽपि सत्त्वं घटादीनाम्, न त्वेवं ब्रह्मात्मना, स्वरूपेण च सर्वदा विशेषाणां सत्त्वम् ; अविद्यापरिणामात्मत्वात् विशेषस्य यावदविद्यमेव तथात्वात् ॥

अखण्डब्रह्मसाक्षात्कारेणाविद्यायां निवृत्तायां न तु स्वरूपेण, कारणात्मना वा कस्यापि विशेषस्य कदापि सत्त्वम् । अतो विशेषः ॥

यावदखण्डाकारसाक्षात्कारं विशेषो न वर्तत इति को वा वदति ? तावत्पर्यन्तमपि त्रैकालिकसत्त्वाभावो भाविबाधमभिप्रेत्यैव । अखण्डाकाराप्रामाण्यज्ञानानास्कन्दितपटुतमसंस्कारसहकृतब्रह्मसाक्षात्कारकालतः पूर्वं विशेषस्य विद्यमानस्याप्यविवक्षया निर्विकल्पत्वव्यवहारः, ततस्त्वनावृतचिन्मात्रमादाय तूक्तविधसाक्षात्कारदशायामप्यज्ञानतत्प्रयुक्ताभावात् वस्तुगत्या निर्विशेषमपि विषयो निर्विकल्पकज्ञानस्य ॥

न च निर्विशेषत्वमपि ब्रह्मणो धर्म एव, विशेषाभावस्य तस्याधिकरणस्वरूपत्वात् । अस्तु वा तस्याधिकरणातिरिक्तत्वम्, किमेतावता ? तस्यापि मिथ्यात्वापत्तिरिति चेत्, काममास्ताम् । का नो हानिः ? विशेषस्य पारमार्थिकत्वापत्तिरित्यद्वैतव्याघातेन मूलहानिरेव भवतामिति चेत्, पराक्रान्तमत्र "मिथ्यात्वमिथ्यात्वेऽपि न प्रपञ्चसत्यत्वम्" इति प्रकरणेऽद्वैतसिद्ध्यादौ ॥

यत्तु—वाक्यस्य(35-38) संसर्गाविगाहित्वनियमे न बाधकम् । न च तात्पर्यानुसारेण व्यवस्था ; वक्तृतात्पर्यस्यापौरुषेये वेदेऽसम्भवात् । तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यत्वं तात्पर्यमिति परि-

भाषालक्षिते तात्पर्ये तु नानार्थबोधनार्हस्य वैदिकवाक्यस्य पूर्वापरपर्यालोचनया नियन्त्रितस्य सर्वतात्पर्यकत्वापत्तिः—इति ॥

तत्र पूर्वापरपर्यालोचनया नानार्थतया प्रतीयमानानां वाक्यानामर्थविशेषे तात्पर्य नियन्त्रयितुं हि तात्पर्यग्राहकाण्युपक्रमोपसंहारादीनि, पूर्वोत्तरमीमांसान्यायाश्च ॥

यत्तु—अपौरुषेये वेदे किञ्चित्प्रतीतीच्छयोच्चरितत्वाभावः, ईश्वरप्रणीतत्वशङ्कासमाधानादिकम्, तत् सर्वमत्र तात्पर्यस्वरूपस्य तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वस्यैव विवक्षणाद् यत्किञ्चित्प्रतीतीच्छयोच्चरितत्वस्याविवक्षणाच्च न विकल्पसहम् ॥

अत्र तात्पर्यघटकं तत्प्रतीतिजननयोग्यत्वं तत्तद्वाक्यघटकतत्तत्पदविषयकशक्तिलक्षणादिरूपमेव। तज्ज्ञानकारणं तूपक्रमोपसंहारादयः पूर्वोक्ता एव। आकाङ्क्षा तु परस्परापेक्ष्यमाणक्रियात्वकारकत्वान्यतरवत्त्वं ततोऽतिरिक्तमेव। न चाकाङ्क्षाज्ञानं शाब्दबोधे कारणम्, किन्त्वाकाङ्क्षैव। न च तावन्मात्रेण, विना तात्पर्यज्ञानं शाब्दबोधो भवितुमर्हति। तात्पर्यसंशयोत्तरवाक्यार्थज्ञान एव तात्पर्यज्ञानं कारणम्, इति कुत्रचन विनाऽपि तात्पर्यबोधं शाब्दबोधो न विरुध्यते। व्यक्तश्चैतदपि परिभाषायामेव ॥

वाक्यस्य संसर्गावगाहित्वनियमस्तु सति तत्र तात्पर्यसंशयाभावे। यत्र तु तत्संशयः प्रकरणविशेषे, तत्र सति तात्पर्यनिश्चये संसर्गावगाहित्वम्, अन्यथा तु न। तत्त्वमसिवाक्ये तु संसर्गविषयकत्वेऽसंशयात् तदविषयत्वतात्पर्यनिर्णयाच्च न संसर्गावगाहित्वम्। परिभाषायां वाक्यप्रामाण्योपक्रमे संसर्गविषयकत्वोल्लेखस्तु—अभेदस्यापि संसर्गत्वमभिप्रेत्य। यथा च स्वरूपैक्येऽपि विनापि प्रवृत्तिनिमित्तभेदं स्वरूपमात्रविवक्षायामपि सामानाधिकरण्यम्, तथा—'नामन्त्रिते समानाधिकरणे' इति सूत्रार्थविचारप्रसङ्गे विवेचितमेव ॥

एतदभिप्रायैव परिभाषाऽपि—अभेदान्वये च समानाधिकरणप्रतिपाद्यत्वमित्यादि वदति। प्रत्यक्षपरिच्छेदे—संसर्गानवगाहिज्ञानजनकत्वमखण्डार्थत्वमित्युक्तिस्तु पदस्मारितपदार्थस्वरूपातिरिक्ताविषयकत्वाभिप्रायेण। तद्विवरणार्थमेव हि—यद्वा तत्प्रातिपदिकार्थता॥

संसर्गो नाम पदस्मारितपदार्थातिरिक्त एव। न च संसर्गोऽपि पदार्थः, पदवाच्यो वा। पदवाच्यत्वं नामान्विताभिधानवादे पदजन्यशक्तिज्ञानविषयत्वम्, न तु स्वरूपसच्छक्तिविषयत्वमात्रम्। तत्र च शक्तिरन्वये स्वरूपसत्येव कारणम्, इति पदस्मारितातिरिक्तत्वम्। अभिहितान्वयवादे तु पदार्थेषु संसर्गबोधानुकूला शक्तिः, न तु पदेषु, इति न पदस्मारितत्वं संसर्गस्य। अतो न पूर्वापरविरोधः। पदार्थस्यैव भिन्नतयाऽवगतस्य न वाक्यार्थत्वम्। अतो न वाक्यार्थरूपासङ्कीर्णस्वरूपबोधकं 'तत्त्वमसि' वाक्यम्। स्वरूपमात्रस्यासङ्कीर्णस्य बोधो हि पूर्वोक्ततात्पर्यग्राहकप्रमाणावगततात्पर्यज्ञानाधीन इत्यपि तत्रैव व्यक्तम्। यथा च मतान्तराभिमतान्यादृगर्थो न तात्पर्यग्राहकप्रमाणावगततात्पर्यज्ञानविषयः, तथा तत्र तत्र व्यक्तम्। ततश्च तत्त्वमस्यादिवाक्यानां निर्विकल्पकज्ञानजनकत्वं निर्व्यूढमेव। तच्च निर्विकल्पं प्रत्यक्षं परोक्षं वेति प्रस्थानभेद इति त्वन्यदेतत्। न च प्रस्थानभेदेऽपि लक्ष्यैक्यात् परस्परविरोधकथा॥

यत्तु—कारणवाक्ये कारणत्वबोधनस्यावश्यकतया कारणत्वस्य कार्याव्यवहितप्राक्कालिकसत्त्वरूपतया, 'अग्रे' "आसीदि" त्युक्ततया च कथं निर्विशेषत्वम्—इति ?

तत्र कारणत्वं न सत्त्वनियतम्—

"पूर्वसंबन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा॥
अन्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः।
नान्तर्भावितसत्त्वं चेत् कारण तदसत्ततः॥"

इत्यादिना खण्डनकारैरेव हि तद् निरस्तम्॥

सत्तासामान्यादिरूपं तु सत्त्वं कारणस्य कामं भवतु नाम। कथं तस्य निर्विशेषत्वमिति चेत्, को वा वदति कारणतादशायामेव निर्विशेषत्वमेवेति। भाविबाधापेक्षया हि कारणस्यापि निर्विशेषत्वम्। अयमेव न्यायो जगन्मिथ्यात्वेऽपि। तच्च ब्रह्मणः कारणत्वमविद्यासंबन्धप्रयुक्तेनेश्वरत्वेन, न तु संविन्मात्ररूपेण, येन प्रलयकालेऽविद्यासंबन्धाभावेन सृष्टेरभावः स्यात्॥

तत्र यथा प्रकृतिः, ईश्वरः, प्रकृतीश्वरसंबन्धः, जीवः, जीवेश्वरभेदश्चान्यत्रानादयः, एवमद्वैतमते शुद्धचिदनादिः। इयान् विशेषः—प्रकृतेरेवान्याभिमताया आवरणशक्तेरधिकाया अपि स्वीकारात् शुद्धचित इवाविद्याया अप्यनादेरनादिः सबन्ध इति॥

तत्र शुद्धायाश्चितोऽविद्यासबन्धप्रयुक्तं जीवत्वेश्वरत्वादि। शुद्धचिद्रूपत्वेन सृष्टेः पूर्वमनादित्वस्वीकारस्तु भाविपारमार्थिकस्वरूपज्ञानापेक्षया, न तु प्रलयकाले संविन्मात्रसत्तापेक्षया। भाविस्वरूपाभिप्रायेण मुक्तात्मस्वरूपचर्चा हि बद्धानामपि शास्त्रानुसारिणी सर्वत्र समाना। अतो न पारमार्थिकविशेषवत्त्वं कारणस्य, जीवस्य, बद्धस्य वा बन्धावस्थायामेवाद्वैतसिद्धान्ते॥

संवित्संवेद्यसंवेत्तॄणां संविन्मात्रं पारमार्थिकम्, संवेत्तुस्त्वौपाधिकं कल्पितत्वम्, दृश्यस्य तु स्वरूपतः कल्पितत्वमिति विभागः। दृगधीनसत्ताकत्वं दृश्यस्य, द्रष्टुश्चेति तु निष्कर्षः। न ह्यन्यनिरूपणाधीननिरूपितत्वेन कल्पितत्वम्। तत्सत्तातिरिक्तसत्ताकत्वाभावो ह्येकसत्तावादे। तच्च तत्राध्यस्तत्वेन। जन्यज्ञानं हि कर्तृकर्मसाकाङ्क्षम्, न तु नित्यं संविद्रूपं स्वप्रकाशम्, येन दृशेरेव दृश्यद्रष्ट्रधीननिरूपणत्वेन कल्पितत्वापत्तिः॥

अनेन न्यायेन ब्रह्मणः कारणत्वमप्यविद्योपधानप्रयुक्तमेव, न स्वाभाविकम्। तस्य जगदपेक्षया सूक्ष्मत्वं व्यापकत्वमित्यादिकमुपाधिसंबन्धाधीनमेव। तत्राविद्याद्युपाधिविलये न कारणत्वम्, जीवत्वम्, ईश्वरत्वं वा॥

तत्रानादित्वेऽप्यविद्याया विलयो न विरुद्धः। तत्राविद्या स्वत एव ब्रह्मण्यनादितयाऽध्यस्ता। एवमविद्यासंबन्धोऽपि। अनाद्यविद्यासंबन्धप्रयुक्तमनादि जीवत्वम्, ईश्वरत्वं च। शुद्धं चैतन्यं त्वनादि, अकल्पितं स्वतः सिद्धमिति विभागः॥

तत्रानादित्वं चेदमविद्यायाः, न जीवस्य शरीरसंबन्धादिकमिव प्रावाहिकम्, किंतु स्वाभाविकम्। तेन च—'कल्पना चेयं कदा? एतज्जन्मारम्भ इति चेदित्यादिशंकातद्दूषणादीनां नावसरः, न वा बीजाङ्कुरवदनादित्वे प्रतिजन्माविद्याभेदश्च स्यात्॥

वस्तुतस्तु—बीजाङ्कुरन्यायेनानादित्वं तत्रैव स्यात्, यत्र प्रत्यक्षः कार्यकारणभावः। न च जीवस्य शरीरसंबन्धोऽपि बीजाङ्कुरन्यायेन। व्यक्तं चैतत्—"नित्यमशरीरत्वमकर्मनिमित्तमि" त्यादिभाष्यतद्विवरणादिषु। न हि जीवत्वप्रयोजकसूक्ष्मशरीरसंबन्धोऽनादिः प्रावाहिकः, किंतु यावन्मुक्ति प्राथमिकानाद्यविद्यान्त.करणादिरेक एव, अन्यथा कृतहानाकृताभ्यागमप्रसङ्गात्। न हि एतज्जन्मारम्भे एतत्सूक्ष्मशरीरादिसंबन्धः, अन्यथा कथमत्रापि न कृतहानाकृताभ्यागमौ? कथंतरां वाऽत्रापि पूर्वपूर्वजन्मन आवश्यकत्वात् कल्पनासमयदौस्थ्येन सूक्ष्मशरीरादेस्तत्रापि न सिद्धिः? कथंतमां च बीजाङ्कुरन्यायेनानादित्वे प्रतिजन्म न सूक्ष्मशरीरादिभेद इति पर्यनुयोगो भवन्मतेऽपि॥

तत्रानादेः सूक्ष्मशरीरस्य भौतिकस्य मुक्त्यवस्थाया विलयोऽस्ति वा? न वा? आद्ये कथमनादेर्विनाशः? अन्त्ये कथं दिव्यशरीरकत्वम्? स्थूलशरीरमात्रं यदि दिव्यम्, तर्हि मुक्तावपि कथं सांसारिकानुभववासनानुवृत्त्या न बन्ध इत्यादिपर्यनुयोगपरम्परा दुष्परिहरैव भवतामपि। यावत्तत्त्वज्ञानम्, यावन्मुक्ति च सूक्ष्मशरीरादिरिवाविद्याऽप्यनुवर्तत इत्यङ्गीकाराद् न कापि क्षत्याऽद्वैतसिद्धान्ते॥

इयान् विशेषः—यद् जीवन्मुक्तेष्वविद्यासंस्कारानुवृत्तिः, तस्या विक्षेपशक्तिमात्रानुवृत्तिर्वा, विदेहमुक्तौ तु सर्वनिवृत्तिरिति। अत एव तत्त्वज्ञानविना-

श्यत्वमविद्यायाः, इति साऽनादिरपि सान्तैव, नानाद्यनन्ता ; अन्यथा सूक्ष्मशरीरमप्यनाद्यनन्तं च स्यात् । एवमेव जीवेश्वरविषयेऽपि, तस्य जीवत्वमीश्वरत्वं वाऽनादि, तदुपाध्यविद्याविनाशादन्तवच्चेति समानत्वात् । तावत्पर्यन्तं जीवत्वं त्वौपाधिकं व्यावहारिकं चेति वस्तुस्थितिः ॥

अनादित्वमविद्याया जीवत्वस्यान्यस्य वा नाविनाशप्रयोजकम्, अनादिसूक्ष्मशरीरे व्यभिचारात् । अत एव परिणामितावादोऽनादेः प्रकृत्याः, अविद्याया वोभयत्र । परिणामित्वे हि विनाशापत्तिरिति खलु ब्रह्मपरिणामवादो भास्करस्य निरस्यते । तच्च प्रकृतेरपि साधारणम्, इति कथं सा परिणामिन्यनन्ता च ॥

यत्तु—जीवस्य कल्पितत्त्वे तस्य मुक्तावनन्वयदूषणम्,

तदिदमद्वैतमते कल्पितजीवत्वरूपबन्धनिवृत्त्या स्वस्वरूपावाप्तेरेव मुक्तित्वात् तदा जीवत्वस्यैवाभावात् जीवस्वरूपस्याविनाशाच्च न दूषणम् ॥

न हि स्थूलसूक्ष्मशरीरस्य मुक्त्यर्थं प्रयतमानस्य तेनैव रूपेण मुक्तावन्वयः । तथाच स्थूलसूक्ष्मशरीराभिमानिनोऽस्य प्रत्यगात्मन एव स्वबन्धनिवृत्तये, मुक्तये वा शृङ्खलादिबद्धस्य शृङ्खलाबन्धनिवृत्तय इव प्रवृत्तिः, न तु मुक्तस्यैव मुक्तय इति संप्रतिपन्नम् । इयान् विशेषः— यत्—अहमर्थ एव मुक्तावप्यनुवर्तते जीवो नामेति विशिष्टाद्वैतम्, अद्वैतं तु निर्गलिताहंकारः सन्मामात्रमेव प्रत्यगात्मा मुख्यो जीव इति । तत्रोपाध्यनुवृत्त्यननुवृत्ती बद्धमुक्तयोरुभयत्रापि समाने ॥

तत्र जीवेश्वरस्वरूपविषये सिद्धान्तलेशसंग्रहे — मायाऽविद्याभेदपक्षे मायाप्रतिबिम्बचैतन्यमीश्वरः, अविद्याप्रतिबिम्बचैतन्यं जीवः । तत्रैव मायागतशक्तिविशेषस्यैव मायाऽविद्यापदवाच्यत्वमिति कश्चन पक्ष उपक्षिप्तः । अपरे तु मायाऽविद्याऽभेदपक्षम्, अनेकाविद्यापक्षम्, एकाविद्यापक्षं च प्रदर्श्य तत्तदवच्छेदप्रतिबिम्बवादभेदः, आभासवाद इत्यादयो जीवभेदावलम्बिनः, एकजीववाद इत्यादयस्तत्तदाशयविवेचनपूर्वकं निरूपिताः ॥

सर्वमिदं प्रस्थानभेदमात्रम्, स्वरूपं तु जीवेश्वरयोः सर्वत्र प्रतिष्ठितमेव। अनिर्गलिताहंकाराद्युपाधिकसंविन्मात्रं जीवः; ईश्वरो वा तत्त्वंपदवाच्यार्थः। तत्त्वंपदलक्ष्यार्थस्तु सर्वत्रैकरूपतया। तत्र कश्चनोत्तमोऽधिकारी निर्विकल्पसमाधौ जाग्रद्दशामेव स्वप्नवत् सुषुप्तिवत् पश्यन् एकजीववादं मुख्यं मन्यते। अपरोऽनेकजीवादम्। तत्रापि प्रतिबिम्बवादं बन्धस्यौपाधिकत्वं विचारदशायामेव तत्सर्वं सम्यगवगन्तुं शक्यत इति प्रतिपत्तिसौकर्यार्थमनुसन्धत्ते, इति पक्षभेदेष्वेकस्य द्वयोर्वा पक्षयोरुत्तमत्वेन प्रतिपादनं न परस्परविरुद्धम्, यथा वा विशिष्टाद्वैतसिद्धान्ते प्रपत्तौ साधनफलत्वपक्षभेदः, तस्याः सर्वप्रायश्चित्तत्व-तुरीयसाधनत्वप्रकारभेदः, इति प्रस्थानभेदमात्रेण न परस्परविरोधः। न चैकस्मिन् पक्षे श्रद्धातिशयप्रकाशनमात्रेण पक्षान्तरं प्रस्थानभेदमात्रं वा दूषितं भवति। अतो रिक्तमिदं वचनम्—

'एवं भवत्यविशेषितस्यैकस्य पक्षस्य दूषणेऽन्येषा भवत्येव दूषितत्वेन मतदौस्थ्यं सुगमम्'—इति ॥

तत्रावच्छेदवादप्रतिबिम्बवादयोस्तत्तद्वाद्यभिमतयुक्तयः, तत्तद्वादस्यैव तत्तद्वादविचारावसरे सौष्ठवप्रकाराश्च सिद्धान्तलेशसंग्रहे, कल्पतरुपरिमले च दीक्षितेन्द्रैस्सम्यगेव विचार्य निरणायिषत ॥

तत्र 'शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता' इत्यादिना नीरूपस्य प्रतिबिम्बायोगः, श्रुतिसूत्रयोस्तत्रैव तात्पर्यं च भामतीसिद्धान्ते समन्वयसूत्रान्ते परिमले दीक्षितेन्द्रा व्यचारयन्। ततः कांश्चनांशानादाय परमार्थप्रकाशिका प्रतिबिम्बवादं दूषयति, परंतु सिद्धान्तलेशसंग्रहेऽवच्छेदवादे कानिचन दूषणानि प्रदर्श्य प्रतिबिम्बवादमेव समर्थयन्तश्च लक्ष्यैक्येऽनाग्रहिणः प्रस्थानभेदेषु दीक्षितेन्द्रा इत्यत्रेदमेव पर्याप्तं प्रमाणम् ॥

तत्राचाक्षुषस्य चैतन्यस्य प्रतिबिम्बवर्णनमेव तावदशक्यमित्यादि,—नाविद्यायां चैतन्यप्रतिबिम्ब इति किंचित्करम्—इत्यन्तम्

अवच्छेदवादपक्षसमर्थनावरसरगतस्य परिमलवाक्यार्थस्य संग्रहमात्रम्। एवमेवान्यत्रापि बहुत्र पक्षान्तरसिद्धान्तेन पक्षान्तरसिद्धान्तदूषणजालमत्र ॥

तत्र बिम्बप्रतिबिम्बयोः प्रतिबिम्बस्यौपाधिको भेदः, अभेदस्तु परमार्थः, अविद्यान्तःकरणाद्युपाधिमात्रनाशः, न प्रतिबिम्बस्वरूपनाशः; बिम्बरूपस्यैव प्रतिबिम्बत्वात् औपाधिकत्वाच्च भेदस्येत्येकः पक्षः। उभयोरप्यभेद एव। अत एव मम मुखमिति प्रतीतिरिति बिम्बप्रतिबिम्बयोरभेदपक्षोऽपरः। तत्र द्वितीये दर्पणाद्युपाधिस्तयोरभेदप्रतीतिं विरुणद्धि, भेदबुद्धिं चादधाति। तन्निवृत्तौ तु वस्तुतत्त्वावबोध इति पक्षद्वयस्यापि सारः ॥

तत्रोभयत्र जीवब्रह्माभेदायोग इति परमार्थप्रकाशिका तु पक्षद्वयफलमन्यथा वदति, विपरीतवादेन च दूषयति—

> तत्र एवं तत्त्वमसीति तच्छब्देन बिम्बभूतमीश्वरं गृहीत्वा तदभेदस्यैव कथनात् न शुद्धचैतन्याख्यब्रह्माभेदबोधनसम्भवः। एवं प्रतिबिम्बे ब्रह्माभेदोऽपि न सम्भवति, ब्रह्मणोऽन्यसत्ताधीनसत्ताकत्वाभावात्, प्रतिबिम्बस्यान्यसत्ताधीनसत्ताकत्वात्, बिम्बसत्ताधीनसत्ताकस्य प्रतिबिम्बस्य ब्रह्मत्वायोगात्। एवमज्ञानावच्छिन्नचैतन्यस्य तत्पदार्थत्वेऽपि त्वंपदार्थप्रतिबिम्बस्य तदभेदसिद्धिः शुद्धब्रह्माभेदासिद्धिश्च द्रष्टव्या। एवमविद्यानाशे ब्रह्मव्यतिरिक्तप्रतिबिम्बनाशात् जीवस्य नाशार्थमेव प्रवृत्तिरिति शोभनो वेदान्तार्थः—
> इति च ॥

तत्र तत्पदवाच्यार्थस्य त्वंपदवाच्यार्थस्य चाभेद इत्येको दुरनुवादः। अपरं तु—तच्छब्देन बिम्बभूतमीश्वरं गृहीत्वा तदभेदस्य कथनं नाद्वैतमते; तत्त्वंपदलक्ष्यार्थयोरेवाभेदस्य तद्वाक्यार्थत्वात्। न हि तत्पदलक्ष्यार्थस्य त्वंपदवाच्यार्थस्य चाभेदोऽद्वैतमते—इति प्रतिबिम्बे ब्रह्माभेदो न संभवतीत्यस्यानुक्तस्यार्थस्योपालम्भनम् ॥

यत्तु—एवमज्ञानावच्छिन्नचैतन्यस्येश्वरस्य तत्पदार्थत्वेऽपि त्वंपदोक्तप्रतिबिम्बस्य तदभेदसिद्धिः, शुद्धब्रह्माभेदासिद्धिश्च—इति।

तद् अवच्छेदवादप्रतिबिम्बवादयोः संकरेण, न त्ववच्छेदवादमात्रेण, प्रतिबिम्बवादमात्रेण वा। उभयत्र कथं वाऽज्ञानावच्छिन्नचैतन्यस्याज्ञानप्रतिबिम्बस्य चाभेदप्रसक्तिरपि ? सर्वत्र लक्षणयाऽनुपहितशुद्धचैतन्याभेदस्यैवोपाध्यविवक्षया विवक्षणाद् न शुद्धब्रह्माभेदासिद्धिः। अपिचोपाधिनाशे ब्रह्मनाश इति कथामात्रम्। न हि घटनाश आकाशनाशः, दर्पणनाशे वा मुखनाशो दृष्टचरः, श्रुतचरो वा ॥

यत्तु सिद्धान्तलेशसंग्रहाद्युक्तप्रतिबिम्बवादद्दूषणं—अविद्याया जीवस्य चाद्वैतमते विभुत्वस्वीकारात्, परिच्छिन्नदेशे परिच्छिन्नप्रतिबिम्बवादो न युक्तः—इति।

तत्र जले महापरिमाणेऽपि कल्पितदेशविशेषमात्रेष्वेकस्य भास्करस्य बहुतरप्रतिम्बदर्शनादविद्याया अप्यवस्थाभेदमात्रेषु कल्पितेषु, देशविशेषेषु वा तत्तद्देशगततत्तच्चैतन्यभागमात्रस्य प्रतिबिम्बसंभवाद् न कोऽपि दोष इति तु तत्त्वम्। उपाधिदेशभेदेनोपहितेऽपि भेदकल्पनान्न कोऽपि दोषः ॥

अन्तःकरणप्रतिबिम्बचैतन्यं जीव इति पक्षे जीवस्य ज्ञातृत्व-संसारादिबन्ध औपाधिक आञ्जसः। अविद्याप्रतिबिम्बो जीव इति पक्षेऽपि जीवपरिच्छिन्नत्वानुभवोपपत्त्यर्थम्, उत्क्रान्ति गत्याद्युपपत्त्यर्थं चाविद्यावस्थाविशेषान्तःकरणोपाधिकत्वमपीति तत्र तत्र व्यक्तम् ॥

सति चैवं जीवस्यान्तःकरणधर्मवृत्तिज्ञानाश्रयत्वेनौपाधिकज्ञातृत्वादिको बन्ध उपपद्यत एव। अहंपदार्थो ह्यद्वैतमतेऽविद्याप्रतिबिम्बपक्षेऽप्यहंकारोपाधिकमेव चैतन्यं परिच्छिन्नं जीवो नाम। अन्यथा व्यापकाविद्योपाधिकत्वमात्रे जीवस्याहंप्रतीतिविषयत्वम्, परिच्छिन्नत्वम्, उत्क्रान्तिगत्यादिकं च नोपपद्येत। न चाहंपदमात्रमहपदार्थोऽद्वैतमतेऽपि, किंत्वहमर्थ एव ॥

इयान् विशेषः—आत्मानात्मशबलितो मिथ्यात्माऽहमर्थोऽद्वैतमते, अन्यत्रात्ममात्रोऽहमर्थ इति। तथाचान्तःकरणतादात्म्याध्यासपरिनिष्पन्नाहमर्थस्याविद्याप्रतिबिम्बस्याप्यौपाधिकज्ञातृत्वाध्यासात् कथं न बन्धो नाम ? अविद्याप्रति-

बिम्बस्यैवान्तःकरणादितादात्म्याध्यासाद् अहं जानामि, अहं पश्यामि, अहं गौरः इत्याद्यनुभवः। बिम्बस्य चैतन्यत्वात् प्रतिबिम्बस्यापि चैतन्यत्वं न विरुध्यते; प्रतिबिम्बस्य बिम्बसमानरूपत्वनियमात्। प्रतिबिम्ब औपाधिकधर्मान्तराश्रयत्वं त्वधिकम्, न तु बिम्बसमानरूपत्वाभावोऽपि, तथैवानुभवात्। न चान्तःकरणं ज्ञातृ इत्यद्वैतिनां राद्धान्तः, किंतु तत्तादात्म्योपहिताहमर्थ एव तथेति सर्वमनवद्यम्॥

एकजीववादे तु स्वप्ने गुरुशिष्यभावोपदेशादिवत् सर्वोपपत्तिरिति सिद्धान्तलेशसंग्रह-वेदान्तरिभाषादौ व्यक्तम्। यथा चानेकजीववादे जगन्मिथ्यात्वेऽपि मिथ्याभूतस्याप्यर्थक्रियाकारित्वात् परस्परसव्यवहारादिकं न विरुद्धम्, तथोपपादितमधस्तात्। न चानेकजीववाद उपेक्षितोऽद्वैतामोदेन, किंत्वेकजीववादस्य दुरुपपादस्यापि सूपपादनमेव तेन प्रदर्श्यते॥

समस्तकल्याणगुणाकरस्य सर्वज्ञस्य सर्वशक्तिकस्य परमात्मनः प्रकृतिशरीरकत्वेन यदि न श्रुतिकदर्थनम्, तर्हि प्रकृत्यपरपर्यायमायोपहितस्याज्ञानावच्छिन्नत्वे कथं वा श्रुतिकदर्थनम्? अज्ञानावच्छिन्नत्वं हि तदुपहितत्वमात्रम्। न चोपाधेर्बिम्बपक्षपातित्वम्; प्रतिबिम्बपक्षपातित्वात्तस्य। तत्र मायोपाधिमत्त्वं तदाश्रयत्वं वा शुद्धचैतन्यस्य, न तु सर्वज्ञस्य। मायोपधानं हि ब्रह्मण ईश्वरभावस्येव सर्वज्ञत्वस्याप्युपपादकम्, न विघातकम्। सर्वथा तु जीवत्वेश्वरत्वादेरौपाधिकत्वाद् जीवस्य ससारबंधः, ईश्वरस्य स्रष्टृत्वादिकं च नानुपपन्नमज्ञानावच्छेदवादेऽपि॥

यद्यज्ञानविषय उदाहृताः श्रुतिस्मृतयः, तर्हि किं तास्तस्यानिर्वचनीयत्वं न साधयन्ति? किं वा तस्यानिर्वचनीयत्वाभावेऽभावरूपत्वे च प्रमाणं परमार्थप्रकाशिकाऽप्युपन्यस्यति? विचारयिष्यते चेदमुपरिष्टात्॥

अज्ञानविषये सप्तानुपपत्तिनिरासेन सर्वमज्ञानविषयं स्वरूपप्रमाणादिकम्, यथा चाविद्या ब्रह्मण्यध्यस्ता, अनादिः सान्ता च तथचोपपादितं तत्सादित्वादिनिरसनेन, कृतहानाकृताभ्युपगमापत्तिनिरासादिना च॥

यत्तु—अविद्याया ब्रह्मणि कल्पितत्वे कल्पकस्य दोषस्य, कल्पनाशालि-पुरुषस्य कल्पनायाश्चाभाव, सभवे च तस्या अनादित्वभङ्ग.। न च प्रवाहा-नादित्वम्। अतस्तस्या· पारमार्थिकत्वमेव—इति ॥

तत्राविद्याया· स्वत एवानाद्यध्यासस्य, तस्या ब्रह्मणा सम्बन्धस्य, तदाश्रयस्य जीवस्याप्यनादित्वस्य चोपपादनाद् न दोषगन्धोऽपि ॥

एतेनाविद्यासम्बन्धोऽपि व्याख्यातः। यथाऽग्निर्जले प्रविश्य तदीयं शैत्यमपह्नुत्य स्वकीयमौष्ण्यं तत्र संक्रामयति, एवमविद्या चैतन्यस्य निर्विषयक-निराश्रयस्वरूपमपह्नुत्य सविषयत्वादिकं संक्रामयति। तत्रापि ब्रह्माश्रयविषये-त्यादिकं विवरणप्रस्थानम्, अपरं तु ब्रह्मविषया, जीवाश्रयेति ॥

तत्र प्रथमे पक्षे ब्रह्मण्यविद्ययाऽऽवरणेनाविद्याकार्यविशेषाणां भानम्, तेन च ब्रह्म सविशेषम्। द्वितीये तु जीवनिष्ठाया आवरणशक्तिमात्रम्, न विक्षेपशक्तिः। न वाऽविद्योपादानकारणम्, किन्तु निमित्तकारणमात्रम् ॥

तत्र च ब्रह्माविद्ययाऽऽवृतमविद्यामज्ञातं च सर्वं प्रकाशयति। अविद्या-वरणवशात् नामरूपात्मना विवर्तते, इति स्वयंप्रकाशमप्यावृतं ब्रह्माविद्यावशा-दप्रकाशम्। अविद्या चास्वप्रकाशा सप्रकाशा च भवति, न तु ब्रह्मनिष्ठं चैतन्यं जीवनिष्ठं भवति, जीवस्यापि ब्रह्मत्वात्, स्वप्रकाशसंविन्मात्रत्वात्, ब्रह्मचैतन्ये चैतन्यवत्त्वाभावात्। ततश्च चैतन्यस्वरूपस्य जीवस्याविद्यावशात् बन्धः, अविद्यायाश्च साक्षिणा भानमिति जीवाश्रयत्वेऽप्यज्ञानस्य न बन्धकत्वानुपपत्तिः ॥

शुद्धमेव ब्रह्म प्रस्थानद्वयेऽज्ञानविषय इति हि वस्तुस्थितिः। सति चैवमविद्यासम्बन्धवशात् तत्परिणाममहदहङ्कारतन्मात्राणां ब्रह्मविवर्ततोपपद्यते। ततः पञ्चतन्मात्रेभ्यस्त्रिगुणेभ्यः समासव्यासाभ्यां पञ्चप्राणमनोबुद्धिदशेन्द्रियस-मुदायात्मकसूक्ष्मशरीरोत्पत्तिरिति क्रमोऽनुसन्धेयः ॥

यत्तु—मृषावादिमत ईदृश सृष्टिक्रमो न सङ्गच्छते। भवता हीश्वरो-ऽविद्याया विषय·, जीवोऽज्ञानाश्रय इति प्रागुक्तम्। मिथ्यावादिना प्रतीयमानत्व-निबन्धना वस्तुस्थितिरास्थेया, न पुनः प्रतीते. प्रागपि वस्तुस्थिति·। न हि

शुक्तिरजतस्थले प्रतिभानात् पूर्वं रजतसत्ता, इति तन्न्यायेन महदादीनामपि प्रतीते प्राक् सृष्ट्यसंभव । यद्धि ब्रह्मणि पूर्वमध्यस्तम् , तत्पूर्वमुत्पन्नम् , यत् पश्चात् , तत्पश्चादिति वक्तव्य ईदृशसृष्टिकल्पनं न सभवति । उपनिषद्ययं यदि क्रमो दृश्यते, तर्हि त्यज्यता मिथ्यावाद । अयमेव न्यायोऽविद्यायामपि; प्रतीते पूर्वं तत्सत्ताऽयोगात् । ब्रह्मविवर्तोपादानताऽपि परास्ता , अन्या-साधिष्ठानत्वस्यैव विवर्तोपादानत्वात्—इत्यादिकथनम् ॥

तत्राद्वैतसिद्धान्ताशय एवम् । अद्वैतसिद्धान्ते हि केचन प्रातिभासिकाः प्रतिभाससमकालोत्पत्तिकाः, येषां तद्भासकसाक्षिचैतन्यतादात्म्येनैवोत्पत्तिः । तत्राभानापादकमज्ञानं नास्ति—यथा शुक्तिरूप्यादयः, सुखादयश्च । तत्र शुक्तिरूप्यादिकं प्रमातृचैतन्याश्रिततूलाविद्यापरिणामः । सुखादिकं तु प्रमात्रु-पाध्यन्तःकरणपरिणामः । प्रथमस्य व्यवहारदशायामेव बाधः । द्वितीयस्य तु व्यावहारिकस्याविद्यानाशादेव बाध इति वस्तुस्थितिः । महदहंकार-तन्मात्र-सूक्ष्मशरीरघटकसप्तदशावयवस्थूलभूततत्कार्यघटादिकं त्वज्ञातब्रह्मण्यध्यासाद् उत्पद्यमाना एव न भान्ति ; अधिष्ठानस्य स्वयंप्रकाशस्यापि विना प्रमाणजन्य-वृत्तिं साक्षिण इवाभानात् । अत एव प्रातिभासिकानां दृष्टिसृष्टिः, व्यावहारिकाणां तु सृष्टिदृष्टिः, प्रतिकर्मव्यवस्था वेति प्रक्रिया । इमामेव प्रक्रियामाश्रित्य सृष्टिक्रमः । सर्वत्र दृष्टिसृष्टिवादे तु न सृष्टिक्रमः । आमोदो हि प्रथमं पक्षमाश्रित्यौपनिषदं क्रममाद्रियते । सृष्टावनिर्भरे तु दृष्टिसृष्टिरेव । इयं हि जीवन्मुक्तानामेव दृष्ट्या, न तु बद्धदृष्ट्या ॥

जीवन्मुक्ता हि प्रतीतमात्रं मिथ्येति सर्वं मन्यन्ते शुक्तिरूप्यादिवदेव । न च तैर्व्यवहर्तुमप्यायतन्ते, इति नात्र विरोधलेशोऽपि । विक्षेपशक्तिमात्रस्य जीव-न्मुक्तेष्वनुवृत्तेर्नामरूपात्मनैव सर्वस्य जीवन्मुक्तिदशायां प्रतीतिः, न तु अस्ति, भाति, प्रियमिति रूपत्रयेणापि । अत एव बद्धवत् तदभिमुखी न प्रवृत्तिर्जीवन्मुक्तानाम् ॥

सृष्टिदृष्टिवादे प्रातिभासिकव्यावहारिकव्यवस्थाभेदमूलं तु—मूलाविद्या-श्रयब्रह्मकारणत्व-तूलाविद्याश्रयविषयतत्तदवच्छिन्नचैतन्यकारणत्वे एव । सादृश्य-

ज्ञानकारणत्वं प्रातिभासिकेष्वौत्सर्गिकम्, व्यावहारिकेषु तु तदप्रयोजकम्। अत एव नविलक्षणत्वाधिकरणम् ॥

तत्र महत्तत्त्वं बुद्धितत्त्वम्। तत्तु न वृत्तिरूपज्ञानमात्रम्, किन्तु तदुपादानम्। तत्तु त्रिपुट्यन्तर्गतज्ञानोपादानत्वात् उपादानोपादेययोश्चाभेदात् ज्ञानस्याप्युपलक्षणम्। वृत्त्याश्रयान्तःकरणं महत्तत्वमिति यावत्। अहंकारस्तु तस्यैवावान्तरविभागः, यदवच्छिन्नोऽहमिति प्रतीयमानो ज्ञाता नाम, योऽपि त्रिपुटीघटक एव। ज्ञेयं तु जडं तन्मात्रादिकमिति विभागः ॥

तत्र सृष्टिक्रमे वृत्त्युपादानान्तःकरणस्य प्राथम्यम्। जन्यज्ञानमन्तःकरणधर्मो वृत्तिरेव, नात्मधर्म इति सूचनम्, तेन च ज्ञानं त्रिपुट्यन्तर्गतमेव साश्रयविषयम्, न तु स्वरूपज्ञानमिति सूच्यते ॥

अनन्तरमहंकारसृष्टिः, येन ज्ञाता जीवोऽपि नाहमर्थो नित्यः, किन्तु जन्याहंकारोपहितत्वादौपाधिको ज्ञानवदेव जन्यः, तस्यैवोपहितस्य ज्ञातृत्वं धर्मः, न तु चिन्मात्रस्येति सूचनम्, बुद्धितत्वसृष्ट्यनन्तरं तत्सृष्टिः, ज्ञानज्ञात्रपेक्षत्वाद् ज्ञेयस्य तस्य तदनन्तरं सृष्टिः, इति महदहंकारतन्मात्राणां त्रयाणां सृष्टिक्रमः ॥

साश्रयविषयं हि ज्ञानम्। तत्र ज्ञानं प्रथमम्, अनन्तरं तदाश्रयः, अनन्तरं तद्विषय इति क्रमो हि व्यवहारसिद्धः। ज्ञातुः प्राक् ज्ञानसृष्टौ निमित्तं तु ज्ञातृत्वं तस्य न स्वाभाविकम्, किन्त्वौपाधिकमिति सूचनम् ॥

तत्राकाशादयो द्विविधाः—सूक्ष्माः, स्थूलाश्च। तत्र प्रथमे तन्मात्रपदेन, अन्त्या आकाशादिपदेन व्यपदिश्यन्ते। तत्र तन्मात्रेभ्य आकाशादीनामुत्पत्तिः, ततः पञ्चीकरणमित्यामोदवाक्यार्थस्तु तमोगुणप्रधानतन्मात्रेभ्यः स्थूलभूतानामुत्पत्तिम्, स्थूलभूतानामेव पञ्चीकरणसिद्धान्तं च बोधयति, इति न काप्यनुपपत्तिः ॥

आनन्दमयोऽपि कोश एवेत्यामोदः। तत्कोशतायां तु पंचकोशोपनिषत्, अन्याश्च बहव उपनिषदः प्रमाणम्। आनन्दमयब्रह्मतायां बहूनि दूषणानि परपक्षनिराकृतिसमालोचनेन वेदान्तरक्षामणौ, न्यायरक्षामण्यादौ च व्यक्तानि ॥

'ब्रह्मविदाप्नोति परम्' इति प्रस्तुतं ब्रह्म ह्यानन्दमयाधिष्ठानतया 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र ब्रह्मशब्दसंयोगात् प्रत्यभिज्ञायते, इति पञ्चकोशविवेकेन निष्कृष्टनिर्विशेषब्रह्मज्ञानादेव मोक्षः ॥

"ब्रह्मज्ञानं हि साक्षात्कारात्मकम्।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ॥"

इति वचनात् सञ्चितागामिकर्मणा प्रारब्धकर्मव्यतिरिक्ताना तेन नाशोऽवगम्यते। न च ज्ञानमात्रेण परमा मुक्तिः, किं त्वप्रामाण्यज्ञानानास्कन्दितपटुतमसंस्कारसहितभ्रमव्याप्यभुज्यमानादृष्टाभावसहकृतात्मसाक्षात्कारस्यैव मोक्षसाधनत्वम् ॥

"भोगेन त्वितरे क्षपयित्वा ततः संपद्यते" इत्यत्र भोगपदं तु तावत्पर्यन्तमभ्यस्यमानसाक्षात्कारपरम। इदमेवाभिप्रेत्य—अप्रामाण्यज्ञानानास्कन्दितपटुतमसंस्कारसहितेत्यादिविशेषितसाक्षात्कारस्यैव मोक्षसाधनत्वमुक्तम् ॥

ब्रह्मसिद्धिरपि—"जीवन्मुक्तानामविद्यासंस्कारनिवृत्तिः स्वतः, तत्त्वज्ञानादेव वे"ति विशदयति जीवन्मुक्तिप्रकरणे, यदवलम्बा न्यायरत्नावली पूर्वोक्ता ॥

एतेन—प्रारब्धं पुनर्भोगैकनाश्यमिति न भवन्मते वक्तुं शक्यम्। तत्त्वज्ञानानन्तरमपि प्रारब्धकर्म चेद् न नश्यति, न तर्हि तन्मिथ्यात्वम्, किंतु सत्यत्वमेवेति व्यक्तमिदं श्रीभाष्य इति—प्रत्युक्तम् ॥

जीवन्मुक्तो हि गुणातीतः पञ्चमः, सप्तभूमिकास्थेषु सशरीरः सन्नपि सप्तमभूमिकायां स्थितो न ततो व्युत्तिष्ठति, इति न कदापि व्यवहरति। षष्ठभूमिकास्थः कदाचनान्येनोत्थापितोऽपि स्रक्चन्दनादीन् पश्यन्नपि ब्रह्मात्मना पश्य-

तीति नामरूपात्मना सर्वं पश्यन् बद्ध इव नाभिनिवेशेन प्रवर्तते। एवमेव पंचमभूमिकास्थोऽपि स्वयमुत्थितस्तथादर्शनमेवाभ्यस्यन्। व्यक्तं चैतत् भगवद्गीतायाम्—स्थितप्रज्ञगुणातीतलक्षणवर्णनप्रसङ्ग इति ॥

यत्तु—आमोदेन कार्यात्मना स्रक्चन्दनादीन् न पश्यतीत्युक्तम्, तदिदं सर्वत्र तस्य ब्रह्मदृष्ट्यभिप्रायम्। बद्धानां साभिनिवेशा स्वतः प्रवृत्तिः, जीवन्मुक्तस्य त्वन्येच्छया निरभिनिवेशा प्रवृत्तिरिति तु निष्कर्षः ॥

तत्त्वज्ञानिनो हि जीवन्मुक्तस्य प्रारब्धेतरस्य तत्त्वज्ञाननिवर्त्यत्वाद् मिथ्यात्वम्। अत. शुक्तिरूप्यवद् न सत्वेन भानम्; बाध्यत्वात्। न चासत्वेन, प्रत्यक्षतया प्रतीयमानत्वात्। प्रमाणजन्यज्ञानविषयत्वाद्वा शुक्तिरूप्यज्ञानमपि प्रमाणजन्यमेव। अत एव स्वतो ग्राह्यं प्रामाण्यं तस्यापीत्युपपादितम्। ततश्च सदसद्विलक्षणत्वादनिर्वचनीयमेव जगत्, इति न जीवन्मुक्तो बद्ध इव सर्वं जगत् सत्त्वेन पश्यति। अतो न तस्य बद्धवत् साभिनिवेशा प्रवृत्तिः ॥

> यत्तु—सत्त्वासत्त्वयो· परस्परविरहरूपत्वेन सत्वाभावेऽसत्वस्य, असत्वाभावे सत्वस्य चावश्यकत्वेन तस्य सदसद्रूपत्वस्यैवावगमात् कथं सदसद्विलक्षणत्वम्? त्रैकालिकसत्वासत्वनिर्बन्धेन हि कदाचित् सत्यम्, कदाचिदसत्यमित्येव सिद्ध्यति, तच्च न सत्यत्वविरोधि, इति कथं शुक्तिरूप्यस्य, तद्दृष्टान्तेन जगतश्चानिर्वचनीयत्वम्—इति,

तत्र सत् कालविशेषावच्छिन्नबाधायोग्यम्, असत्तु तुच्छं विवक्ष्यते, न तु कदाचित्सत्त्वम्, कदाचिदसत्त्वं च। नचेदमुभयं शुक्तिरूप्यजगतोः समस्ति। अतो नानिर्वचनीयमात्रस्य हानिः ॥

> एतेन—सत्त्वासत्वयो परस्परविरहत्वमपि—निरस्तम् ॥

अत्र तादृशसत्त्वस्यापि लक्षणात्। अद्वैतसिद्ध्यादौ त्वन्यथोक्तशङ्का परिहृता। अथवा—सत्त्वं ज्ञाननिवर्त्यत्वम्, असत्त्वं तुच्छत्वमत्र विवक्ष्यते। न ज्ञानानिवर्त्यत्वाभावोऽसत्त्वम्, तदभावः सत्त्वमिति सत्वासत्वयोः परस्पर-

विरहरूपत्वं युक्तम्, तुच्छे ज्ञाननिवर्त्यत्वस्याभावात्। ज्ञाननिवर्त्यत्वं हि ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वमिति बहु पराक्रान्तमद्वैतसिद्ध्यादौ॥

यत्तु—शुक्तिरूप्यं हि प्रत्यक्षमवभासते। प्रत्यक्षत्वं च तस्येन्द्रियसन्निकर्ष एव भवति। स च रजतोत्पत्त्यन्तरमेव। रजतोत्पत्तिस्तु रजतसंस्कारोद्बोधेनेति वक्तव्यम्, न चैवमुच्यते—इति,

तत्रेयं रजतोत्पत्तिप्रक्रियाऽनुसन्धेया। शुक्तिज्ञाने, सादृश्यज्ञानसमुद्बोधितव्यावहारिकरजतसंस्कारोद्बोधे च सति प्रमातृचैतन्याभिन्नशुक्त्यवच्छिन्नचैतन्यनिष्ठा तूलाविद्या रजताकारेण, तदाकारवृत्त्याकारेण च परिणमते। तच्च रजत प्रमातृचैतन्याभिन्नशुक्त्यवच्छिन्नचैतन्येनेव प्रमातृचैतन्येनाप्यभिन्नमिति साक्षिभास्यत्वात् प्रत्यक्षमिति, न तु व्यावहारिकरजतवदिन्द्रियसन्निकर्षजन्यज्ञानविषयत्वेन प्रत्यक्षम्। अतो नोक्तायाः शङ्काया अवसरः। वक्तव्यं चात्र सर्वं पूर्वमेवोक्तम्॥

कार्यकारणभावस्य कार्यकारणसत्त्वानियतत्वस्य खण्डनोक्त्यनुसारेण पूर्वमुपपादनाद् असत्यस्यापि शास्त्रस्य तत्त्वज्ञानजनकत्वं न विरुद्धम्॥

तत्र शास्त्रस्य तत्त्वज्ञानजनकत्वमज्ञाननिवर्तकत्वमित्यामोदो हि—"अविद्यानिवृत्तिपरत्वाच्छास्त्रस्येति" भगवत्पादभाष्यमर्थतोऽनुवदति। तदाशयस्तु—आकांक्षायोग्यतातात्पर्यज्ञानादिसहकृतानि वेदान्तवाक्यानि ब्रह्माकारवृत्तिमात्रेण तदाश्रयविषयकाज्ञाननिवृत्त्या फलव्याप्तिपर्यन्तं न व्याप्रियन्ते—विषयान्तरेष्विव सर्वाण्यपराणि च प्रमाणानीति। शास्त्रमखण्डाकारवृत्तिद्वाराऽज्ञाननिवर्तकमिति तु निष्कर्षः॥

परमार्थप्रकाशिका तु—ज्ञानस्याज्ञाननिवर्तकत्वात् कथं शास्त्रमज्ञाननिवर्तकमिति पृच्छति—साक्षात् ज्ञानस्याज्ञाननिवर्तकत्वे विना प्रयासं सर्वेषां बन्धो निवर्तिष्यते। ज्ञानभिन्ननिवर्त्यत्वे चाज्ञानादीनां ज्ञानानिवर्त्यत्वेन तन्मिथ्यात्वासिद्धिरिति च तद्वाक्यमपथेनैव दूषयति॥

ज्ञातमपि तदभिप्रायमज्ञातमिव मत्वा, अज्ञातमेव वा मत्वा। ज्ञानस्यैवाज्ञाननिवर्तकत्वविवक्षायामपि किं विना प्रयासं बन्धो निवर्तिष्यते? आस्तामियमपथगामिनी कथा ॥

"सिद्धं तु निवर्तकत्वादि" त्यस्य विवरणं शास्त्रस्य निवर्तकत्वात् प्रामाण्यं सिद्धमित्यपि दृश्यते। तत्र या गतिः, सैवात्रापि। शास्त्रमपि प्रमाणमिति ज्ञानद्वाराऽज्ञाननिवर्तकमिति तु निष्कर्षः ॥

तच्चावगतिपर्यन्तं ज्ञानमेव, न तु ज्ञानमात्रम्। "अथातो ब्रह्मजिज्ञासे"ति सूत्रेऽवगतिपर्यन्तस्य ज्ञानस्यैवेष्यमाणत्वसूत्रणात्। तच्च निर्विचिकित्समपरोक्षज्ञानमेव ॥

तत्राथशब्दार्थः — साधनचतुष्टयसंपत्त्यानन्तर्यमिति भगवत्पादीयसिद्धान्तः। कर्मविचारानन्तर्यमेव स इति श्रीभाष्यसिद्धान्तः। तत्र साधनचतुष्टयस्य साक्षात्कारपर्यवसायिश्रवणोपयोगित्वम्, न तु श्रवणमात्रोपयोगित्वम, साक्षात्कारमात्रोपयोगित्वं वा। अत एवा "वगतिपर्यन्तं च ज्ञानं सन्वाच्याया इच्छायाः कर्मे"ति भाष्यम्। तेन चात्र श्रवणाधिकारिनिरूपणमिति व्यवस्थायाः "तस्माच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इत्याम्नानस्य च न विरोधः। श्रीभाष्यमतेऽपि श्रवणमननादिनिर्वर्त्यदर्शनसमानाकारध्रुवानुस्मृतिरेवोपासनापरपर्याया ज्ञानं नाम ॥

तत्र साधनचतुष्टयं श्रवणादिकालेऽविद्यमानं चित्तैकाग्र्यादिसंपादनद्वाराऽवगतिपर्यन्तज्ञानस्यान्तरङ्गमुपकारकम्। अतोऽधिकारिविशेषणम् ॥

तत्र साधनचतुष्टये—प्रथमं नित्यानित्यवस्तुविवेकः, अनन्तरमिहामुत्रार्थफलभोगविरागः, ततश्शमदमादिः, अनन्तरं मुमुक्षेति क्रमे न निर्भरः, युगपद्विपरीतरूपेण वाऽक्रमेण वा साधनचतुष्टयापेक्षायामेव निर्भरः। तच्चेह जन्मनि प्रयत्नसाध्यमिति तु न नियमः। फलावस्थं साधनचतुष्टयमेवाधिकारिविशेषणम्। तत्र कर्मापि चित्तशुद्ध्यादिद्वारोपयोगीति तु, सत्यम्, परं तु तत्साध-

नावस्थमेव फलाय कल्पते। तत्फलं तु न फलावस्थं शमदमादिकमिव चित्तैकाग्र्यादिद्वारा साक्षात्कारोपयोगि, किंतु साधनावस्थं प्रत्यवायपरिहारद्वारा। चित्ताशुद्धिप्रतिबन्धे प्रतिबन्धकाभावविधया कर्मविचारस्योपयोगः। जन्मान्तर—एवानुष्ठितकर्मणा सर्वप्रतिबन्धनिवृत्तौ तीव्रायां तु साधनचतुष्टयसंपत्तौ सिद्धायां ब्रह्मचर्यादेव विविदिषासन्यासमाश्रिताना न यज्ञादिकर्मापेक्षा, इति साधनावस्थमपि न नियमेनोपकरोत्यवगतिपर्यन्ते ब्रह्मज्ञाने। अतीतावस्थं तु कर्म नाधिकारिविशेषणम्, किन्तु वर्तमानावस्थम्, सुतरां तु कर्मविचारस्तथा। न हि श्रीभाष्यमतेऽपि आप्रायणं कर्मेव दर्शनसमानाकारध्रुवानुस्मृतिरूपवेदनं कर्मविचारश्चोभयं समकालमेवानुष्ठेयम्, वेदनकर्मसमुच्चयवद् वेदनकर्मविचारोभयकर्तव्यतायां प्रमाणाभावात्, प्रत्युत विरोधात्, न वा कर्मनिचारब्रह्मविचारोभयकर्तव्यतायाम्; असंभवात्॥

न हि शमदमादिकं कर्मविचारवदतीतमधिकारिविशेषणम्, किन्तु वर्तमानम्। अतीतः कर्मविचारः खलु ब्रह्मजिज्ञासायामपेक्ष्यत इति विशिष्टाद्वैतम्। न च सोऽधिकारिविशेषणतामर्हति। अतः कर्मविचारानन्तर्यं नाथशब्दार्थः॥

न हि यद्यत् ब्रह्मजिज्ञासायां वर्तमानमतीतं भावि वाऽपेक्ष्यते, सर्वमधिकारिविशेषणं भवति। तत्र नित्यानित्यविवेकेन निष्पन्ने वैराग्ये, तदधीनायां निष्पन्नायां शमादिसंपत्तौ, ततो मुमुक्षायां च पूर्वपूर्वरूपापायेऽपि मुमुक्षामात्रं नाधिकारप्रयोजकम्, किन्तु सर्वं समुदितमेवानुवर्तमानम्। अत एव साधनचतुष्टयसंपत्त्यानन्तर्यमथशब्दार्थं, न तु मुमुक्षामात्रम्। सति चैवमतीतो ब्रह्मजिज्ञासासमये, अननुवर्तमानश्च कथं कर्मविचारोऽधिकारिविशेषणतामर्हति? कथं नोपकुर्वन्नपि परम्परया॥

न हि नित्यानित्यवस्तुविवेकादिकमुत्तरोत्तरोपकारकमप्यतीतावस्थमधिकारिविशेषणम्, किन्तु सदेव समुदितम्। न च तथैव कर्मविचारोऽप्यधिकारि-

विशेषणमिति मन्यते भवता, अन्यथा वेदाध्ययनम्, उपनयनम्, अन्यच्च पूर्वपूर्वमप्यधिकारिविशेषणमापद्येत ॥

> सति चैवम्—मुमुक्षापर्यन्तदशा न फलेतिकर्तव्यतादिपरिपाकसहितकर्मविचारं विना भविष्यतीति परमार्थप्रकाशिकाऽपि—व्याख्याता ॥

को वा प्रतिपद्यते—कर्मणः, तद्विचारस्य वा नोपयोगलेशोऽपीति? किन्तु तस्य ब्रह्मजिज्ञासाधिकारिविशेषणत्वं न युक्तमित्येव ॥

तत्र कर्म, सत्यम्, अनुष्ठानद्वारा चित्तशुद्धिसंपादनेनोपकरिष्यति कथञ्चन परम्परयाप्यवगतिपर्यन्तस्य ज्ञानस्य, तावतापि चित्तशुद्धिरेवानुवर्तमानाऽधिकारिविशेषणतामर्हति, न तु कर्म, न तरां च तदुपयोगी कर्मविचारः। स हि सत्यं कर्मानुष्ठानोपयोग्यर्थज्ञानद्वारा कर्माधिकार उपकरिष्यति, न तु कथमपि ब्रह्मावगतौ साक्षात्काररूपायाम्, ध्रुवानुस्मृतिरूपायां वा ॥

तत्रोपासनायामुपास्यस्वरूपज्ञानमेवाधिकारिविशेषणम्, तच्च ब्रह्ममीमांसामात्राधीनम्, न तु कर्मस्वरूपज्ञानमिव कर्मविचाराधीनम्। ब्रह्मावगतौ विशिष्टाद्वैताभिमतायामपि कथं कर्मस्वरूपविचार उपयुज्यते? कर्मफलानित्यत्वनिर्णयस्तु धर्मजिज्ञासायां कुत्र वाऽध्याये, पादे, अधिकरणे वा वर्तत इति परमार्थप्रकाशिकैव प्रकाशयतु तत्त्वम् ॥

> एतेन—न च विशिष्य कर्मतत्फलानित्यत्वज्ञानाभावे तत कश्चित् विरज्येदिति—परास्तम् ॥

सत्यम्, नित्यानित्यवस्तुविवेकादयो मीमांसामन्तरेण न संभवन्ति। विविच्यतां का वा मीमांसाऽत्र मीमांसापदार्थः? किं कर्ममीमांसा, उत ब्रह्ममीमांसेति। मीमांसैक्यमभिप्रेत्य मीमांसापदेन कर्ममीमांसाऽपि यद्यर्थः, तर्हि कर्ममीमांसाधिकारिविशेषणमपि कर्मस्वरूपतत्फलानित्यत्वशमदमादिसंपत्तिरधिकारिविशेषणं स्यात् वेदाध्ययनमिव, तथा वेदाध्ययनमपि ब्रह्मजिज्ञासायामधिकारिविशेषणं स्यात्, मीमांसाद्वयस्यैक्यात् ॥

के वांशा उत्तरमीमांसागताः पूर्वमीमांसयैवावगम्यन्ते ? यदि श्रुति-लिङ्गादयः, तर्हि पूर्वमीमांसागतास्तेऽन्ये, उत्तरमीमांसागताश्चान्ये। शब्दमात्र-साम्यं त्वकिञ्चित्करमिति व्यक्तमन्यत्र ॥

शब्दमात्रसाम्येन तदपेक्षा तु न संभवति ; जैमिनिसूत्रार्थमपेक्ष्यैव न तद्गुरुचरणबादरायणस्य ब्रह्ममीमांसाप्रणयनम् , पूर्वमीमांसान्यायातिदेशो वोत्तरमीमांसायाम् , किंतु स्वतन्त्रमेव बादरायणस्य तस्यैव न्यायस्योपपादन-मिति न कथम् ?

"परीक्ष्य लोकानि"ति न पूर्वमीमांसापेक्षं लोकपरीक्षणमत्र विवक्ष्यते, किन्तु पूर्वमीमांसानपेक्षप्रत्यक्षानुमानद्वारेत्यन्यत्र व्यक्तम् ॥

एतेन—व्याख्येयक्रमानुसरणमपि—व्याख्यातम् ।

तत्रेदं परमार्थप्रकाशिका विविनक्तु—किं पूर्वमीमांसायामपि व्याख्येय-तत्तन्मन्त्रपाठक्रममनुसृत्यैव मीमांसा प्रवृत्ता—किं ब्रह्मकाण्डे, उपनिषद्भागे, कर्मविचार एव नास्ति ? किं न बृहदारण्यकान्ते व्रतविशेषाद्युपदेशः ? तैत्तरीयके वाऽऽवहन्तीहोमादयो न दृश्यन्ते ? तथा ऋग्वेदे कर्मकाण्डे वाऽध्यात्मिकपरतया सायणाचार्यैरन्यैश्च बहवो मन्त्रा व्याख्यायमाना न प्रत्यक्षाः ? किं शिक्षाव्या-करणादीनां वेदाङ्गानां क्रमेण प्रणयनं तत्तत्प्रवर्तकानाम् ? किं कल्पसूत्राणि वैदिकवाक्यक्रममपेक्ष्यैव प्रयोगं विदधति संगृह्णन्ति च ? फलभेदात्, चोदना-प्रवृत्तिभेदात्, अधिकारिभेदात्, प्रमाणभेदाच्च, कर्मब्रह्मजिज्ञासायाः को वा क्रमस्तत्र । न च कर्मविचारानन्तरमेव क्रियमाणो विनाऽपि वैराग्यादिकं ब्रह्म-विचारः फलाय कल्पते । यदि यदा कदाचन कृतः कर्मविचारो ब्रह्मविचारं परम्परयोपकरिष्यति, तर्हि विविच्यताम्—कियान् विलम्बस्तत्र सोढव्य इति ? यदि नात्र किमपि विनियामकम्, जन्मान्तरीयः कर्मविचारोऽपि कथं नाधि-कारिविशेषणम् ?

वस्तुतस्तु—कर्ममीमांसा, ब्रह्ममीमांसा च न वैधी, किन्तु रागप्राप्तेति खलु भवतः सिद्धान्तः। तत्र यस्य कर्मविचारे न रागतः प्रवृत्तिः, किन्तु ब्रह्मविचार एव, तस्य कर्मविचारानन्तरं ब्रह्मविचारः कथम्? अत एव—

साधनं प्रभवेत् पुंसां वैराग्यादिचतुष्टयम्।
नित्यानित्यविवेकश्च इहामुत्रविरागता।
शमादिब्रह्मसंपत्तिर्मुमुक्षायां समभ्यसेत्॥

इति वाराहोपनिषत्। यथा विनैव कर्मविचारं हितकारिवचनात् संपन्नमुमुक्षो भविष्यति, तथा प्रत्यक्षादिना परीक्षणेन संपन्नवैराग्यः। ब्रह्मापरोक्ष्यज्ञानं तु न श्रवणादिकं विना भवितुमर्हति। न हि साधनं विना फलसिद्धिः कुत्रापि। कर्मविचारस्तु न वैराग्यादिसाधनम्, किन्तु कर्मानुष्ठानोपयोगितदर्थज्ञानस्यैवेति तु विशेषः॥

यत्तु—कर्मफलमक्षय्यमिति शङ्कापरिहाराय कर्मविचारोऽपेक्षित। एवं नित्यानित्यवस्तुविवेकोऽपि कर्मकाण्डविरुद्धत्वशङ्कया स्वयमप्रतिष्ठित एव भवति। अत कर्मविचार एवाभ्यर्हित उपाय, तत्रापि जैमिनीयकर्मविभागमेव पौन.पुन्येन स्वाभिमतार्थोपयोगितयोत्तरमीमांसायामाकलनात् तदपेक्षा सुदृढमवधार्यते—इति॥

तदिदम्—जैमिनीयकर्मविचारे कर्मफलाक्षय्यत्वशङ्कापरिहारस्य कुत्राप्यभावात्, तत एव कर्मकाण्डविरुद्धत्वं नित्यानित्यवस्तुविवेकस्येति शङ्कायाः कर्मविचारेणापरिहारात्, प्रत्यक्षानुमानादिनैव नित्यानित्यवस्तुविवेकस्य साधनचतुष्टयान्तर्गतस्य सुप्रतिष्ठितत्वावधारणेन तत्र जैमिनीयकर्मविचारस्याभ्यर्हितोपायत्वासंभवात्, देवतानां ब्रह्मविचाराधिकारे जैमिनीयकर्मविचारस्यानपेक्षितत्वात्, तत्र तन्न्यायविशेषाणां पूर्वोत्तरमीमांसासाधारणानां जैमिनीयविचारमनपेक्ष्यैव पौनःपुन्येन भगवता बादरायणेनाकलनसंभवात्, स्वशिष्यकृतमीमांसासाहाय्येनैव गुरुचरणानां स्वीयमीमांसाप्रवर्तनकथाया अनौचित्यपराहतत्वात्, कर्म-

विचारब्रह्मविचारयोरेककालिकत्वस्य साधनचतुष्टयब्रह्ममीमांसयोरिवासंभवाच्च—न क्षोदक्षमम् ॥

कर्मकाण्डविचारः कर्मकाण्डार्थविचारः कर्मानुष्ठानोपयोगी, इति तदनन्तरमेव कर्मानुष्ठानसंभवः, इति कथञ्चन कर्मब्रह्मविचारयोरेककालत्वेऽपि कर्मविचारब्रह्मविचारयोः समकालिकत्वं बाधितमेव ॥

न चायं विरोधः शमदमादीनामधिकारिविशेषणत्वे, इति शमदमादिकं मीमांसासमकालिकमन्तरङ्गं साधनम्, कर्मविचारस्तु बहिरङ्गं साधनम्, तत्रापि ब्रह्ममीमांसाया श्रवणरूपायामन्तरङ्गतममिति तु निष्कर्षः। अनेन कर्मविचारस्य परम्परयोपकारकत्वमेव फलति, न तु साधनत्वम्, अङ्गत्वं वा संनिपत्योपकारकत्वेन, आरादुपकारकत्वेन वा; अन्यथा कर्मानुष्ठानब्रह्ममीमांसयोरिव सहभावेन, समुच्चयविधया वा कथञ्चनोपयोग उपनयनादेरपि समानः, विशिष्य च वेदाध्ययनब्रह्मविचारयोरपि ॥

साधनचतुष्टयघटकमुमुक्षा प्रत्यगभिन्नस्वरूपप्राप्तीच्छैव, न तु ब्रह्मलोकप्राप्तीच्छा। ब्रह्मलोकान्तविरागो हि प्रकृते तदन्तर्गतो विरागो नाम। एवमपि सगुणब्रह्मतदुपासनतदुपकरणादेश्चतुरध्याय्यां विचारस्तु सगुणोपासनमपि श्रवणादीनीव ब्रह्मविद्यायामन्तरङ्गं साधनमिति सूचयितुम्। विस्तृतं चैतत् न्यायरत्नावलीब्रह्मविद्याभरणादौ ॥

न हि भगवत्पादाः सगुणब्रह्मविचारं वारयन्ति, किन्तु देवतामीमांसया व्यवस्थापितसगुणब्रह्मोपासन एव वेदान्तानां तात्पर्यम्, नान्यत् वेदान्तप्रतिपाद्यं तत्त्वमस्ति ततोऽपि परमिति भ्रमवारणार्थं श्रवणादीव सगुणोपासनमपि ब्रह्मविद्याङ्गमिति खलु भगवत्पादानां राद्धान्तः। अत एव भगवद्गीताया भक्तियोगोऽपि यथावदेव व्याख्यातः। अत एव कल्पतर्वादिः—

'वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम्।'

"ईश्वरानुग्रहादेव पुंसामद्वैतवासना ।"

इति। भगवत्पादा अपि—"ब्रह्म च नित्यशुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितं चे"ति द्विविधमपि ब्रह्म जिज्ञास्यं प्रतिजानन्ति, विवेचयन्ति च तथैवान्तस्तद्धर्माधिकरणोपोद्धाते—"द्विरूपं हि ब्रह्मावगम्यते"– इत्यादिना ॥

यत्तु—न खलु श्रीशङ्कराचार्यादिभिरपि निर्गुणब्रह्मप्रतिपादकतया, वेदान्तानां सगुणब्रह्मपरत्वशङ्कोपक्षेपपूर्वकं निर्गुणब्रह्मपरत्वस्थापनपरतया वा सूत्राण्ययोज्यन्त—इति,

तदिदम्—"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" इत्यधिकरणे वेदान्तानां निर्गुणब्रह्मण्येव परमं तात्पर्यम्, न तु सगुण एवेति व्यवस्थापनाद् न विचारसहम्। सर्वथा तु यावन्निर्गुणब्रह्मसाक्षात्कारं विचारदशायां सगुणोपासनस्यापेक्षायामपि, कर्मानुष्ठाननैयत्येऽपि च कर्मविचारस्यानपेक्षितत्वात्, अनुष्ठीयमानस्यापि कर्मणो ब्रह्मविचारेण फले जननीयेऽनुपयोगित्वात्, ज्ञानेन फले जननीये न कर्मविचारापेक्षा । विस्तृतं चैतद्भामत्याम्—"धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः" इति भाष्यविवरणावसरे ॥

कर्मब्रह्मविचारयोः क्रमे श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिषु क्रमनिर्णायकं किमपि नास्तीति भगवत्पादैरेव व्यक्तीकृतम् ॥

नित्यानित्यवस्तुविवेकादिपदार्थविवेकस्तु भामत्यामन्यत्र च विशदः । तदिदं सिद्धं साधनचतुष्टयसंपन्नस्यैव श्रवणे, मनने, निदिध्यासने चाधिकारः। तथैव चाम्नायते—"शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत् ।" "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादि ॥

तत्र विद्याङ्गत्वं शमदमादीनां प्रथमवाक्ये निर्दिष्टम् । द्वितीयवाक्ये श्रवणादीनां दिङ्मात्रमुपदिष्टम् । तत्र शमदमादीनां श्रवणाद्यधिकारद्वारा विद्याङ्गत्वम्, श्रवणादीनां तु साक्षात्तदङ्गत्वम्। अत एव शमदमादि विद्याया

अन्तरङ्गमङ्गम् । श्रवणादिकं त्वन्तरङ्गतरमिति पूर्वमुक्तम् । कर्मविचारस्य साक्षाद्विद्याङ्गत्वबोधकं नैकमपि वाक्यं वर्तते । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"ति श्रुतिस्तु वेदनप्रतिबन्धकचित्ताशुद्धिविषयानुरागादिनिरसनद्वारा कर्मणाम्, कर्मविचारस्य च कर्मानुष्ठानद्वारा विद्याङ्गत्वं श्रावयति, इति कर्म श्रवणादिकम्, विद्यां प्रति वा बहिरङ्गमङ्गम् । कर्मविचारस्तु बहिरङ्गतरमङ्गमिति वस्तुस्थितिः ॥

तत्र वेदान्तार्थस्य न्यायतो निरूपणं श्रवणम्, तेन चासंभावना निवर्तते । वेदान्तवाक्यानि न जीवप्रधानादिपराण्येव, सगुणब्रह्मपराण्येव वेति संशयनिवृत्तिद्वारा तेन च मननाङ्गसहकृतेन परोक्षमेव ज्ञानमुपजायते, नापरोक्षम्, विपरीतभावनादीनां भेदवासनानां सत्त्वात् । यस्य तु तत्त्वमसीत्यादिमहावाक्यश्रवणमात्रेण तज्जन्मान्तरीयापरोक्षसाक्षात्कारानुवृत्तिः, तस्य तु श्रवणमात्रेणाप्यपरोक्षसाक्षात्कारः । जन्मान्तरीयापरोक्षसाक्षात्कारस्य प्रारब्धकर्मणा प्रतिबन्धात्, तच्छेषस्य जन्मान्तरेऽप्यनुवृत्त्या तं प्रति सत्संस्कारोद्बोधनमात्रे श्रवणस्य व्यापारः, शरीरान्तरग्रहणेन साक्षात्कारस्य प्रमोषात् । न्यायानुसन्धानद्वारा वेदान्तश्रवणमात्रं तस्य कार्यकारि, तं प्रति तु मननादिकं वितथमिति भगवत्पादा विवेचयन्त्युपनिषद्भाष्यादौ । न च श्रवणेऽपि, वस्तुतत्त्वे विपरीतभावनादिना वस्तुतत्त्वासिद्धौ वेदान्ताप्रामाण्ये पर्यवसानम्, प्रमाणस्यैव सतो वेदान्तस्यैवमर्थो वा, अर्थान्तरं वा, अस्मिन्नर्थे प्रामाण्यं वा, अर्थान्तरे वेति संशयनिराकरणार्थं खलु मीमांसा; अन्यथा धर्ममीमांसापि निरर्थिका स्यात्, परमतेऽपि मननादिविधानम्, तदनुवादो वा वेदान्तानां प्रामाण्ये पर्यवसानं कथं न साधयति ?

ऐतेन—वेदान्ताभिहितार्थस्य संशयितत्वात् श्रवणस्य निर्णयरूपत्वोक्तिः,

तेन संशयनिवृत्त्युक्तिश्च विरुध्यत इति—परास्तम्,

सत्यं वस्तुतत्त्वावरोधेन वेदस्यान्योऽर्थो न भवति, अथाप्यसंभावनादिदोषवशात् परपुरुषस्य तथाऽध्यवसानं त्वनुभवसिद्धम् । एवं मत्वैव हि

निर्विशेषात्मतत्त्वेऽन्यथाबुद्धिः परेषां सर्वत्राप्यद्वैततत्त्वोपयोगिनीषु प्रक्रियासु वेदान्तबोधितास्वपि। न हि गुरुमुखाच्छ्रवणमात्रेण सत्य एवार्थो बुद्ध्यते, नासत्य इति नियमः। इन्द्रविरोचनोपाख्यानं ह्यत्र प्रत्यक्षं निदर्शनं वेदान्तेष्वेव। लोके च बहुतराणि दर्शनान्यात्मतत्त्वविषये—एवम्, अनेवमित्यनेकप्रकाराणां दर्शनेन॥

सति चैवं श्रवणेनासंभावनायाम्, मननेन विपरीतभावनायां च निवृत्तायाम्, ध्यानेन निर्विचिकित्सापरोक्षज्ञाने जाते, तदभ्यासातिशयपरिपाक-सहकृतं श्रवणमेवाज्ञाननिवर्तकमपरोक्षज्ञानं जनयति श्रवणमङ्गीति पक्षे। निदिध्यासनमेवाङ्गीति पक्षे तु—श्रवणमननजन्याप्रामाण्यज्ञानानास्कन्दितभावनाप्रचयसह-कृतमन्तःकरणमेवाज्ञाननिवर्तकमपरोक्षाकारवृत्तिज्ञानमुपजनयति। तथाच ध्यानेन संशयनिवृत्तिरित्यनेन भावनाप्रचयसहकृतान्तःकरणवृत्तिरज्ञानं निवर्तयतीति विवक्षितम्॥

यत्तु—ध्यानातिरिक्ताया वृत्तेरसंभवात् किमर्थं वृत्तिज्ञानमिति शङ्का नावसरति—इति,

को वा विप्रतिपद्यते—उक्तरूपवृत्तिपर्यन्तमज्ञानम्, भ्रमो वा नानुवर्तते, तन्निबन्धनाश्च सर्वे व्यवहाराः। जीवन्मुक्तानामप्यज्ञानं संस्कारात्मनाऽनुवर्तत इति स्थिते, का वा कथाऽप्रामाण्यज्ञानानास्कन्दितपटुतमसंस्कारसहिताखण्डाकार-वृत्त्युत्पत्तिपर्यन्तमज्ञानम्, तन्निबन्धनाश्चानुवर्तन्ते सर्वे व्यवहारा इति। इमानेवाभिकृत्य भगवत्पादानां भाष्यम्—"पश्वादिभिश्चाविशेषादि"ति—"अतः पश्वादिभिः समानः प्रमाणप्रमेयव्यवहारो विदुषामपी"ति॥

अत्र "ध्यानेन भ्रमनिवृत्तिरि"त्यनेन नान्येन ध्यानजनितापरोक्षसाक्षात्कारेण भ्रमस्य बाधोऽध्यवसितः, न त्वन्यत्रेव क्षणिकत्वेनाननुवृत्तिमात्रम्। यथाच जीवन्मुक्तानां निवृत्तेऽप्यज्ञाने विक्षेपशक्तिमात्रानुवृत्त्याऽज्ञानलेशस्यैवाज्ञानावरणविशेषस्यानुवृत्त्या वा लोकव्यवहारोऽविरुद्धः, तथा पूर्वमेवोपपादितम्

अत एव "भिद्यते हृदयग्रन्थि." इति सविकारान्तःकरणनिवृत्तिर्विदेहमुक्तानां प्रतिपाद्यते ॥

तत्र जीवन्मुक्तानां प्रारब्धकर्माख्याविद्यावस्थाविशेषस्यानुवृत्तिः, अन्येषां तु साविद्यानां न तथा शुक्तिरूप्यादिस्थल इव । अज्ञाननिवृत्त्या तदुपादानकभ्रमतद्विषयोभयनिवृत्तिरिति सर्वत्र समानम् । जीवन्मुक्ते तु सोपादेयाविद्यावस्थाविशेष एवानुवर्तते, अन्तिमेन तु साक्षात्कारेण सोपादानभ्रमनिवृत्तिरिति ब्रह्मसिद्ध्यादौ व्यक्तम् । अतो ध्यानेनाज्ञाननिवृत्तिरित्यादि सर्वमुपपन्नम् ॥

तत्र ब्रह्मैवाविद्यया ससरति, विद्यया मुच्यत इत्यस्ति प्रस्थानमद्वैतमते । तत्र ब्रह्मैवाविद्याप्यनादिः । तत्राविद्यावस्थाया स्वरूपाज्ञानेन तस्यैव दु.खतत्परिहारार्थप्रयासादिकम् । न हि ब्रह्मैवाविद्याया. कल्पकमिति । तत्र—यथा कर्णस्य कौन्तेयत्वाज्ञानेन स्वीयेन राधेयवदेव व्यवहारः, कौन्तेयत्वज्ञाने जातेऽपि तत्राप्रामाण्यज्ञानानास्कन्दितज्ञानाभावात् पुनरपि कौन्तेयवदेव न व्यवहारः, अन्ते तु पितामहादिवत , पार्थवच्च ज्ञातेऽपि तत्त्वे युद्धे प्रवृत्तस्य स्वनियमपालनं प्रारब्धकर्मवशम्, न परित्यागः, एवमेव स्वाविद्यावशात् संसरद् ब्रह्माज्ञानदशायां व्यवहरति, अविद्यायां निवृत्तायां स्वात्मनैवावतिष्ठते ॥

तत्राविद्यानानात्वपक्ष एव, न तदेकत्वपक्ष इति नैकमुक्तौ सर्वमुक्त्याद्यापत्तिः, अविद्याप्रतिबिम्बपक्षादस्य पक्षस्य फलतो न विशेषः । अविद्योपहितो जोव इति पक्ष एवायम् । सति चैवमज्ञानानुपहितब्रह्मभावो मोक्षः, तदुपहितं ब्रह्म जीव इति तत्त्वम् ॥

तत्र जगत्कारणत्वम्, शास्त्रयोनित्वादिकं चाविद्यानुपहितरूपेण, न तत् संसरदवस्थं शास्त्रस्य कल्पकम् , न वा स्वस्यैव स्वदुःखार्थं प्रयत्नः, तेन रूपेण जीवानां सतां भेदात्, तद्दशाया न शास्त्रोपदेशगुरुशिष्यभावाद्ययोगः, न वा धर्माधर्मतदुपायतदादरणादिपद्धतिभेदविरोधः, यथा कर्णस्य कौन्तेयत्वज्ञानदशायां राधेयत्वप्रयुक्ताः सर्वे व्यवहाराः, इति सर्वमनवद्यम् । व्याधकुल-

संवर्धितराजकुमारं प्रसिद्धं परित्यज्य कर्णोदाहरणं तु—ज्ञातेऽपि तत्त्वज्ञाने निर्विचिकित्से, जीवन्मुक्तानां जीवदवस्थावदेव व्यवहारः प्रमाणारूढ इति ज्ञापयितुम् ॥

तत्र जीवन्मुक्तशब्दव्यवहारो निबन्धग्रन्थेषु दृश्यते। स च प्रामाणिक इत्यत्र न विप्रतिपत्तिरिति परमार्थप्रकाशिकाऽपि न विप्रतिपद्यते। तत्राद्वैताभिमतं जीवन्मुक्तस्वरूपमेव तस्या विप्रतिपन्नम्। कारणं च तत्राद्वैतमते तद् दुरुपपादमिति ॥

तत्र विशिष्टाद्वैताभिमतं जीमन्मुक्तत्वम“मृतत्वं चानुपोष्ये”ति सूत्रसिद्धमिति परमार्थप्रकाशिका वदति। तदिदं तत्सूत्रगत श्रीभाष्यम्—विदुषोऽप्युत्क्रान्तिः समाना, अमृतत्व त्वनुपोष्य शमादिसंबन्धेन दग्धोत्तरपूर्वाघयोरविश्लेषरूपममृतत्वमिति। तथाच विदुषोऽप्यमृतत्वं जीवन्मुक्तस्य सशरीरस्यैवोत्तरपूर्वाघाविश्लेषरूपं यदि ब्रह्मानुभवबलात् स्वीक्रियते, तर्हि अद्वैतमतेऽपि कथं न जीवन्मुक्तत्वं संभवति? कथं च ब्रह्मानुभवेऽपि पुण्यपापाविश्लेषः? यदि ब्रह्मानुभवबलात्, तर्ह्यद्वैतमतेऽपि ब्रह्मानुभवबलाद् जीवतोऽपि मुक्तिः कथं वार्यते? शरीरेन्द्रियरूपबन्धमुक्तिरद्वैतमतेऽपि संभवति। को वा ब्रूते जीवन्मुक्तस्य शरीरादिसंबन्धो नास्तीति? विद्यमानमपि शरीरादिकमविद्याया विक्षेपशक्तिमात्रत्वान्न तस्य बन्धः। उत्तरपूर्वाघयोरश्लेष इत्येव ह्यद्वैतमतमपि। अत एवोक्तम्—‘अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्।’ इति। स्वदृष्ट्याऽभिमानाभावादशरीरः, परदृष्ट्या तु सशरीर इति हि तदर्थः ॥

अज्ञाने नष्टे कथं तदुपादेयस्य शरीरस्यानुवृत्तिरिति चेत्, केवलेन नामरूपात्मनाऽनुवर्तते, न सदादितादात्म्येनेत्यादि पूर्वमेवोपपादितम्। ब्रह्मानुभवस्तु निर्विशेषब्रह्मानुभवो वा, सविशेषब्रह्मानुभवो वेत्यन्यदेतत ॥

अत एव जीवत एव मुक्तिर्जीवन्मुक्तिः। न चात्र सर्वबन्धाद् मुक्तिं परित्यज्य प्रारब्धातिरिक्तादेव बन्धान्मुक्तिरिति विवक्षायां संकोचो दूषणम्।

श्रीभाष्यमतेऽप्यमृतत्वं सामान्यतः प्रस्तुतमुत्तरपूर्वाघाविश्लेषतया कथं संकुच्यते ? इति समानो दोषः। कर्मविशेषाधीनमपि शरीरं प्रारब्धभोगानुगुणत्वात् प्रारब्धकल्पमेव ॥

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन ॥"

इत्यस्य प्रारब्धेतरकर्मनाशकत्व एव तात्पर्यात् जीवन्मुक्तशरीरं कर्माधीनमपि यावत्प्रारब्धभोगसमाप्ति न ज्ञानेन दह्यते, क्षुदादिकं तु जीवदवस्थशरीरधर्मः, शरीरात्माऽभिमानरहितस्य जीवन्मुक्तस्य न बन्धनम्। बद्धैर्दृश्यमानं कर्म सर्वमनात्मगतम्, प्रकृतिधर्म वा जीवन्मुक्तः पश्यति, नात्मधर्मम्। तदुक्तम्—

"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥"

इति। विदुषामविदुषां च विशेष एवंभावेनैव परैरपि वक्तव्यः ॥

जीवन्मुक्तौ हि पटुतमसंस्कारसहितब्रह्मसाक्षात्कारो धारावाहिकतयाऽनुवर्तते। तत्प्रयोजनं तु प्रारब्धभोगान्तेऽज्ञानसंस्कारस्यापि ज्ञानादेव नाशः, तेन च तस्यापि ज्ञाननिवर्त्यत्वेन मिथ्यात्वसिद्धिः ॥

अत एव तत्र ज्ञानरक्षा। सा च न तपोविशेषः, किन्त्वप्रामाण्यज्ञानानास्कन्दितात्मसाक्षात्कार एव। स च पञ्चमषष्ठसप्तमभूमिकाभेदेनोत्तरोत्तरमतिशयितो जीवन्मुक्तानां स्वत उत्थाय, अन्योत्थापितानां वाऽऽत्मस्वरूपानुसन्धानपूर्वकं व्यवहारविशेषोऽपि, इति न विरुध्यते। अत एव—

"ज्ञात्वा वयं तत्त्वनिष्ठां ननु मोदामहे वयम्।
अनुशोचाम एवान्यान्न भ्रान्तैर्विवदामहे ॥

"न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते।"

"घटे नष्टे यथा व्योम व्योमैव भवति स्वयम् ॥
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित् स्वयम् ॥

क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले ।
संयुक्तमेकतां याति तथाऽऽत्मन्यात्मविन्मुने ॥"

इत्यादिवचनानि जीवन्मुक्तं परममुक्तं चाधिकृत्य प्रवृत्तान्युपपद्यन्ते ॥

तत्र "न शक्यते वर्णयितुं गिरा तदा" इति वचनं जीवन्मुक्तस्य, स्थितप्रज्ञस्य वा षष्ठावस्थादिगतस्यानन्दानुभवं प्रतिपादयति। जीवन्मुक्तस्य शरीरेन्द्रियादिकम्, अन्तःकरणं चात्मनः पृथक्तयैव प्रकाशमानं वर्तते । ब्रह्मानन्दानुभवो हि तस्य तस्यामवस्थायाम् ॥

एतेन—"घटे नष्टे यथा व्योमे"ति वचनमपि—व्याख्यातम् । अस्याप्रामाण्यवादस्त्वौपनिषदस्य कस्य वा शोभेत ?

"क्षीरे क्षीरं यथा क्षिप्तमि"त्यपि परिच्छिन्नतादशायां जीवस्येव क्षिप्यमाणक्षीरांशस्यापि कथंचनाधाराधेयभावः, क्षेपानन्तरं तु न भेद इत्येवंपरमेव । अत एव—"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते" इति बृहदारण्यकवचनैकवाक्यता। तत्र "असन्तं भेदं कः करिष्यती"ति स्पष्टं भेदः प्रतिषिध्यते। तत्राद्वैतामोदकाराणां विशिष्टाद्वैतमताज्ञानं विस्तरेण परमार्थप्रकाशिका स्वयमेव डिण्डिमयति, आमोदकारानुसारिणस्तु परमार्थप्रकाशिकाकाराणामद्वैतविरुद्धांशानां बहूनां तत्रोपक्षेपेणाद्वैतमताज्ञानम्। किमनेन, स्वस्वपाण्डित्यविशेषस्य, अपरापाण्डित्यविशेषस्य च स्वगोष्ठ्यां स्वगेह एव वा घोषणेन वितथेन ? तत्तदुक्तदूषणसमुद्धारार्थं तत्तन्निबन्धकाराणां प्रवृत्तिरेव समुचिता, स्वस्वपक्षसमर्थनार्थं च ॥

तत्र मायावादो भगवत्पादैरेव स्वकपोलकल्पित इति पाद्मपुराणादिना परे मन्यन्ते । अद्वैतामोदस्ततोऽपि पूर्वाचार्यैर्मायावादोऽनूदितो दर्शनान्तरेषु, अनुवादस्तु खण्डनार्थं वा, मण्डनार्थं वेति त्वन्यदेतत् । सर्वथा त्वनादिरयमद्वैतवादः, औपनिषदश्च । वेदान्तदर्शनत्वेनैव ह्यस्यानुवादः प्राचीनेषु दर्शनेषु ॥

सत्यं देहात्मवाद उपनिषदि वर्तते ; अन्नमयात्मतावादादेस्तत्र दर्शनात्, परं तु तत्रैव।"न्योऽन्तर आत्मे"ति स निरस्तः। न चैवमद्वैतात्मवादो वेदान्तेषु निरस्यते। विशिष्टाद्वैतसिद्धान्तस्तु नाथोपज्ञ., टङ्कद्राविडाचार्यादिप्रवर्तितोऽपि कथं प्राचीनः औपनिषद. सिद्धान्तः? किन्त्वपूर्व एव कश्चनेत्यद्वैतामोदस्याशयः॥

न चायमद्वैतवादो ब्रह्मसूत्रकारानभिमतः, "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि"ति स्वाप्निकमायामात्रत्वस्य सूत्रकारेण सूत्रणात्, तद्दृष्टान्तेनैव जागरिकमायिकत्वस्यापि सूत्रकाराभिमतत्वावगमात्। अत एव "वैधर्म्याच्च न स्वप्नादिवत्" इति व्यवहारदशायां बाधितत्वाबाधितत्वाभ्यामेव वैधर्म्यं सूत्रितम्। विशिष्टाद्वैतसिद्धान्ते तु मायामात्रत्वस्येश्वरसृष्टत्वाभिप्रायत्वात् कथ तयोर्वैषम्यम्, कथंतरां चोक्तसूत्रस्योपपत्तिः? श्रुतप्रकाशिकायां "कृत्वा चिन्तयेदं सूत्रमि"ति विवरणमप्यद्वैताभिमतविवरणस्यैव श्रौतत्वं गमयति॥

वस्तुतस्तु "तदनन्यत्वमारम्भणशब्दादिभ्यः" "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" इत्यादीनि सूत्राणि जगदनिर्वचनीयत्वव्यवस्थापराणि, "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"ति ब्रह्मण उपादानत्वनिरूपणपरं च सूत्र "मायामात्रं तु" इति सूत्रसध्रीचीनं मायावादमेवोपबृंहयन्ति। न केवल भगवत्पादभाष्यम्, किन्तु श्रीभाष्यमपि मायावादमेव सौत्रं विशदयति। तद्भाष्यस्याद्वैतभाष्यस्य च नैकार्थ्यमत्रेति तु न परमार्थप्रकाशनम्॥

तत्र "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"ति ब्रह्मण उपादानत्वं न परिणाम्युपादानत्वमिति तत्रैव श्रीभाष्यमेव विशदयति। न च समवायिकारणत्वं ब्रह्मणो विशिष्टाद्वैतमते, नैयायिकाभिमतासत्कार्यवादस्य तत्रैवान्यत्र निरासात्, इत्यगत्या विवर्तोपादानत्वमेव स्वीकर्तव्यम्। अविकृतब्रह्मपरिणामवादो भास्करादीना यदि न प्रामाणिकः, तर्हि ब्रह्मविवर्तोपादानतैव हि गतिरुपनिषदाम्, इत्यद्वैतवाद एव सूत्राणामुक्तानां स्वारस्यम्॥

बृहत्त्वं व्यापकत्वं वा सर्वत्र स्वव्यतिरिक्ते सत्प्रतीतिद्वारा ब्रह्मणोऽनुवेधेनैव। तत एव तस्याविकृतस्य नित्यशुद्धत्वादीन्यपि। बृहत्वं हि स्वरूपेण, न तु गुणैरपि परमार्थतः॥

यद्यपि कालाकाशादयोऽपि व्यापकाः, तथापि तत्रापि सदात्मनाऽनुवेधाद् ब्रह्मण एव निरवधिकातिशयं महत्त्वम्, तच्चोपादानत्वं विना नोपपद्यते। मृदादीनाम्, भावरूपतयाऽज्ञानस्य चोपादानत्वं निरवधिकव्याप्त्या स्वस्वकार्यमात्रे मृदादीनां नामरूपात्मनाऽनुवेधात्। ब्रह्मणस्तु तत्रापि व्याप्त्या मुख्यमुपादानत्वं निरवधिकं स्वीकर्तव्यम्। अत एव मृदादीनामुपादानत्वादधिकं किंचिदुपादानत्वं ब्रह्मणः। तच्च विवर्तोपादानत्वमेव, इति नात्रोपादानत्वसंकोचः। मृदाद्युपादानेषूपादानत्वमपि नोपादानत्वस्य संकोचेन। अभिन्नस्वरूपं ह्युभयोपादानत्वं न सामान्यविशेषापन्नम्, येन संकोचकथाप्यत्रावसरेत्॥

ब्रह्मशब्देन परमात्मनो ग्रहणं निरतिशयव्यापकत्वेन पूर्वोक्तविधया। न च महति घटे, अन्येषु च सातिशयमहत्त्वयोगिषु स वर्तते, इति महान् घट, ब्रह्म घट इत्यादिप्रयोगो न संभवति। नैमित्तिके सति निमित्तानुसरणम्, न तु निमित्तमस्तीति नैमित्तिकारोप इति न्यायोऽपि ब्रह्म घट इत्यादिप्रयोगं वारयति। यथा च विवर्तोपादानत्वमेव ब्रह्मणः प्रामाणिकम्, तथाऽनुपदमेवोक्तम्॥

बृहत्त्वं च परिमाणविशेषो वस्तुगत्या शोधनेऽनेकवस्तुसवन्ध इति परमार्थप्रकाशिका॥

स चाद्वैतमते ब्रह्मव्यतिरिक्ते ब्रह्मणो विषमसत्ताकाभेदस्य विवक्षणादविरुद्धः। "बृहन्तोऽस्मिन् गुणाः" इत्यपि सर्वेषां ब्रह्मापेक्षयाऽप्रधानत्वेन गुणत्वादारोपितसजातीयविजातीयव्यावर्तकधर्मसंबन्धात् निर्विशेषे ब्रह्मणि न विहन्यते॥

न चात्र गुणशब्दो नैयायिकाभिमतपारिभाषिकगुणपर इति हि परमार्थप्रकाशिकाऽपि। द्रव्यमजडं धर्मभूतज्ञानमपि हि ब्रह्मणो गुण इति तदीयं मतम्। अत. सगुणत्वं मतद्वयेऽपि समानम्॥

तत्र तस्योरापितत्व-तदभावाभ्यां विशेष । श्रूयते हि ब्रह्मणः सगुणत्वमिव निर्गुणत्वमपि । उभयोपपत्तिरद्वैतमते गुणानामारोपितत्वतदभावाभ्याम्, विशिष्टाद्वैतमते हेयगुणराहित्यकल्याणगुणवत्वाभ्यामिति विशेषः, इति सत्त्वादिगुणराहित्येन निर्गुणत्वम्, कल्याणगुणवत्त्वेन सगुणत्वमिति उभयत्र गुणपदस्य सकोच एव। "बृहन्तोऽस्मिन् गुणाः" इत्यत्र तु न सत्त्वादिगुणानां विवक्षा। तत्र हि न प्रकृतिधर्माणां ब्रह्मणि प्रसक्तिरपि, येन तन्निषेधः स्यात्, इत्यप्रसक्तप्रतिषेधः। यदि प्रकृतिशरीरित्वात् ब्रह्मणश्शरीरधर्माणां शरीरिणि धर्मिण्यपि प्रसक्त्या नाप्रसक्तप्रतिषेधः, तर्हि प्रकृतिपरिणामित्वस्य कथं ब्रह्मण्यपि न प्रसक्तिः? इति परम्परयोपचारेण वा ब्रह्मोपादानत्ववादस्य दत्तस्तिलाञ्जलिः। ब्रह्मणि कारणत्वाम्नानात् प्रकृतिधर्मोऽपि ब्रह्मणि विवक्ष्यते चेत्, न; अन्यथोपपद्यते ब्रह्मणि कारणत्वाम्नानम्। साक्षात् कारणत्वमपि विवर्तोपादानत्वं ब्रह्मणि सभवति। न चान्यत्र विवर्तोपादानत्वं न दृष्टम्, रज्जुसर्पादिस्थले दर्शनात्। न च तत्रापि सत्ख्यातिरेव, न वानिर्वचनीयासत्ख्यातिरिति तु विवेचितमन्यत्र विस्तरेण। सर्वथा तु बहुग्रन्थपरिशीलनीयमिदम्॥

न ह्यद्वैतिनोऽप्यमूलं किमपि वदन्ति, लिखन्ति वा, यदेव भवता मूलं तदेवाद्वैतिनामपि। बृंहयति ब्रह्मयति तदुच्यते परं ब्रह्मेति विधया नाद्वैतिनोऽपि ब्रह्मशब्दस्य सगुण एव ब्रह्मणि शक्तिरिति विवदन्ते, किन्तु सगुणपरत्ववत् तस्य लक्षणया निर्विशेषपरत्वमप्यस्तीति। तत्रापि व्यापकत्वमेव यदि ब्रह्मशब्दार्थः, तर्हि साक्षात्, यद्यनेकगुणवत्वेन, तर्हि बहुलं प्रयोगात्तत्र मुख्यवृत्त इति संप्रतिपन्नम्। ततश्च—

वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने॥

यस्मिन् प्रयुज्यमाने वै गुणयोगः सुपुष्कलः।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः॥

इति गारुडवचनं नाद्वैतमतेऽपि विरुद्धम्॥

विष्णुपुराणं हि ब्रह्मपदम्—

प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मशब्दितम्॥

इति परामूर्ते निर्विशेष आत्मन्यपि संकेतयति। न चायं परामूर्तो मुक्तात्मैव; ब्रह्मण एव चतुर्धा प्रस्तावात्, मुक्तात्मनोऽप्यद्वैताभिमतस्यैव ब्रह्माभिन्नस्यैवंरूपत्वात् प्रकरणसंशुद्धिरद्वैतमत एव॥

को वा विप्रतिपद्यते—"परं जैमिनिर्मुख्यत्वादि"ति परमेव ब्रह्म कण्ठरवेण ब्रह्मशब्दार्थं बादरायणो वदति "स एनान् ब्रह्म गमयतीत्यत्रे"ति, "कार्यं बादरिरस्य गत्युपपत्तेरि'त्यत्र कार्यमपि ब्रह्म शब्दार्थं स सूत्रयति। किमायातमेतावता—ब्रह्मशब्दस्यार्थद्वयमस्तीत्यद्वैतिनोऽपि मन्यन्ते, एवं ब्रह्म तत्र तत्राम्नायमानं लक्ष्यार्थः, अन्यत्र तु शक्यार्थ इति। "परं जैमिनिरि"ति सूत्रं नोभयत्रापि सिद्धान्तसूत्रम्। अद्वैतमते "कार्यं जैमिनिरि'ति सिद्धान्तसूत्रम्, विशिष्टाद्वैतमते तु तत्—"अप्रतीकालम्बनान्नयती"ति। अपरोऽयं विशेषः—"कार्यं बादरिरि"ति एनान्—पदार्थविचारपरं विशिष्टाद्वैतमते, अद्वैतमते तु ब्रह्मपदार्थविचारपरम्, उभयत्रापि ब्रह्मशब्दः परापरब्रह्मपर इति त्वविप्रतिपन्नम्॥

आम्नायते च "द्वे ब्रह्मणी वेदितव्ये परं चापरं चे"ति, परं तूभयविवक्षोपायोपेयभावेन, इति तदुभयजिज्ञासार्थ"मथातो ब्रह्मजिज्ञासे"ति भगवत्पादीयः सिद्धान्तः। तत्र भगवत्पादाभिप्रेतपरब्रह्मविचार एव प्राधान्येन विवक्षितः। तदेव परं ब्रह्म, न ततोऽपरं सविशेषं नाम परं ब्रह्मास्तीत्यद्वैतम्। सविशेषात् परं निर्विशेषं नाम नास्तीति विशिष्टाद्वैतम्, तत्राद्वैते सगुणं निर्गुणं च शक्तिलक्षणाभ्यां यथायोगं ब्रह्मशब्दार्थः। पूर्वोदाहृतविष्णुपुराणवचनात् शक्यमेव ब्रह्मोभयमपीति वा मन्यताम्॥

देवतामीमांसायाम्—"स विष्णुराह हि स विष्णुराह हि तद् ब्रह्मेत्याचक्षते" इति प्रस्तुतसगुणब्रह्मानुषङ्गेण सगुणोपासनमपि पूर्वोक्तविषयाऽ-

न्तरङ्गतरं साधनमित्यभिप्रेत्योपायोपेयोभयविधब्रह्मणो जिज्ञासैव—'अथातो ब्रह्मजिज्ञासे'ति प्रस्तुता, न सा सगुणमात्रस्य, निर्गुणमात्रस्य वेति खलु भगवत्पादीयं भाष्यम्। अत एव सगुणवाक्यानां विचारः, गुणोपसंहारपादश्चाद्वैतिनामपि ॥

को वा विप्रतिपद्यते— श्रीभाष्ये, श्रुतप्रकाशिकादौ च ब्रह्मशब्दोऽत्र सगुणपर एव, न तु निर्गुणपर इति लघुमहासिद्धान्ताभ्यामद्वैतमतस्य समूलं हननेन विशिष्टाद्वैतमतं स्थापयितुं महानायास इति ॥

अद्वैतामोदो मन्यते—"सर्वमिदमद्वैतसिद्धान्तापातालोचननिबन्धनम्, अपर्यालोचननिबन्धनं वेति ॥

"सर्वमिदं श्रीमति भाष्ये, श्रुतप्रकाशिकादौ च विस्पष्टमिति, अदृष्ट्वाऽबुध्वा चाक्षेपकरणमयुक्तमेवेति परमार्थप्रकाशिका लिखति। आस्तामियं कथा स्वगोष्ठ्याम् ॥

अद्वैतामोदो हि—श्रीभाष्यकाराणामद्वैताक्षेपनिरसनार्थं यतमानोऽद्वैतं यदि सम्यग् जानाति, तावतैव पर्याप्तं स्वमतसमर्थनाय, अद्वैतमतमप्यामोदो न जानाति, विशिष्टाद्वैतमपि न जानाति, अहमेव सर्वं जानामीति मानस्तु दुरभिमान एव ॥

तदिदं सिद्धमुभयविधब्रह्मजिज्ञासा ब्रह्मजिज्ञासापदार्थः। तत्र सविशेषब्रह्मजिज्ञासया तदुपासनमात्रमोक्षसाधनतापरया तदुपासनफलं जगद्व्यापारवर्जब्रह्मभावो मुक्तिः परमा मुक्तिरिति परैर्मन्यते, अद्वैतिभिस्तु साऽपरमा गौणमुक्तिर्मन्यते, तत्स्वरूपे तु न विप्रतिपत्तिः। तस्य गौणमुक्तित्वे परं विप्रतिपत्तिः। तत्र तस्यां मुक्तौ न कर्मजशरीरादीनामभावः। सा चोत्क्रान्तिप्राप्यैव। तत्र "द्वादशाहवदुभयविधम्।" इति शरीरपरिग्रहतदभावयोरौचित्यम्, संकल्पादेवाभीष्टसर्वफलस्रष्टृत्वभोक्तृत्वादिकं सर्वमेवाद्वैतिनोऽपि मन्यन्ते ॥

इयान् विशेषः—यदियं मुक्तिर्न परमा, किन्तु गौणी, परमा त्वनावृतचिन्मात्रस्वरूपं जीवत्वेश्वरत्वोपलक्षितमित्यद्वैतिनः। इयं तु ब्रह्मसाक्षात्कारे

जाते प्रारब्धभोगसमाप्त्यनन्तरमात्मानं लभमाना विदेहमुक्तिरिति, आप्रारब्धफलभोगसमाप्ति ब्रह्मसाक्षात्कारेऽप्रयत्नसाध्ये फलारब्धे धारावाहिकतया स्वत एवाऽऽवर्तमाने सत्यपि शरीरादिसंबन्धेऽज्ञानलेशे च समाध्यवस्थायाम्, सर्वस्मिन्न विषयजाते चित्रमयस्त्रीवत् छायावच्च दृश्यमाने, सर्वकामादिनिवृत्तौ च जीवन्मुक्तिरिति व्यपदिश्यते ॥

तत्र जीवन्मुक्तानां स्वत एवाज्ञानलेशस्य, शरीरादिसंबन्धस्य, तन्निबन्धनस्य च सर्वस्य व्यवहारजातस्य निवृत्तिरिति वचस्तु तदीयसाक्षात्कारस्यानुवर्तमानस्य प्रयत्नसाध्यत्वाभावमभिप्रेत्य। व्यक्तं चैतद्योगवासिष्ठे—प्रथमादिसोपाना उत्तरोत्तरसोपाने सिद्धावस्थां भजन्ति। तत्र पञ्चमादिसोपाने स्थितस्य क्रमेण सप्तमावस्थापर्यन्तं गतस्य समाधिमात्रावस्था सिद्धैव भवति, न तत्र प्रयत्नापेक्षोत्तरोत्तरसोपानं प्राप्तस्येति। सर्वथा तु जीवन्मुक्तिरस्त्येका। तथा चाद्वैतमते जीवन्मुक्तिः, गौणी मुक्तिः, विदेहमुक्तिः, परमुक्तिर्वेति विभागो न निर्मूलः। जीवन्मुक्तिरियं विशिष्टाद्वैतेऽपि वर्तते—"अमृतत्वं चानुपोष्ये"ति तु परमार्थप्रकाशिकाऽपि स्वीकरोति। परममुक्तौ, जीवन्मुक्तिस्वरूपे च तस्या विप्रतिपत्तिः ॥

न केवलं तत्रैव, किन्तु मुक्तिसाधनविषयेऽप्यस्ति विप्रतिपत्तिः। तत्र निर्विशेषतावादमादाय परममुक्तौ, तत्साधने च विप्रतिपत्तिः, तद्विषये तु बहुशः पूर्वमावेदितम्, आवेदयिष्यते च यथावसरम् ॥

तत्र परमार्थप्रकाशिका—विदेहमुक्तौ दर्पणस्थानीयबुद्ध्यभावात् तत्प्रतिबिम्बरूपजीवाभावात् स्वदृष्ट्या, परदृष्ट्या च मुक्तात्मनि द्वितीयवस्तुप्रतीत्यभावेऽपि जीवन्मुक्तस्य बुद्ध्युपाधिरस्त्येव, तथा तत्सम्बन्धप्रतीतिरपि—इति वदति। परंतु तस्य स्वस्मिन् न जीवत्वबुद्धिः, किन्त्वहं प्रतिबिम्ब इति ज्ञानमस्ति, एवमहंभावादिधर्माणामस्वगतत्वेन नाहंकारिगतत्वेन तस्य प्रतीतिरस्ति, नायमहंकारविमूढमात्मानं कर्तारं मन्यते मूढात्मवत्, किन्तु गुणा गुणेषु वर्तन्त इति मत्वा न सीदतीति तु

तत्त्वम् । तथा चात्मनि प्रतीयमाना दोषा नात्मीयाः, किं त्वन्यदीयाः, तानेवात्मीयत्वेन विज्ञाय दुःखानुभवः । जीवन्मुक्तानां तूपाधिगता इमे दोषाः, नेमे स्वदोषा इति विज्ञानाद् नौपाधिकगुणदोषभाक्त्वमिति तु निष्कर्षः ॥

तत्र यथा चटकः स्वप्रतिबिम्बं चटकान्तरत्वेन पश्यति, न तु स्वप्रतिबिम्बत्वेन, तेन च तेन सह युद्धार्थं प्रयतते, प्रेमवशात् क्रीडार्थं वा, एवं बद्ध आत्मानं चित्स्वरूपमपि न बिम्बत्वेन जानाति, न वाऽऽत्मानमौपाधिकप्रतिबिम्बस्वरूपमिति । जीवन्मुक्तस्तु चित्स्वरूपमेवात्मन. स्वरूपम्, न तु प्रतिबिम्बितरूपं स्वस्वरूपमिति जानातीति दृष्टान्तार्थः ॥

तत्र प्रतिबिम्बं चटकान्तरमिव बद्धोऽपि वस्तुतोऽनुपहितं स्वरूपं स्वतोऽतिरिक्तं मन्यते, न प्रतिबिम्बत्वेन, जीवन्मुक्तस्तु न तथा । स्वस्वरूपज्ञानानन्तरं तावत्पर्यन्तं ज्ञातं स्वस्वरूपं प्रतिबिम्बमात्रम्, औपाधिका एव ममेमे प्रतिभासा इति निश्चिनोति । चटकस्तु स्वशरीरमचेतनं चेतनं मन्यते, जीवस्तु प्रतिबिम्बावस्थायामपि चेतन एव सन् स्वात्मानं प्रतिबिम्बं न पश्यति ।

न चायं नियमः प्रतिबिम्बोऽचेतन एवेति । यत्राचेतनं बिम्बम्, तत्राचेतनः प्रतिबिम्बः, चटकस्य तु शरीरस्याचेतनमात्रस्य प्रतिबिम्बः, न चेतनस्य, जीवस्तु चिन्मात्रस्य प्रतिबिम्ब इति तु विशेषः । चैतन्यांशस्यापि प्रतिबिम्बस्तु छायादेव्यां संज्ञादेवीप्रतिबिम्बे श्रुतचरः, दृष्टचरा च तत उत्पत्तिर्विवस्वदादीनाम् । चटकदृष्टान्तोऽयं व्यधिकरणदृष्टान्त इति वैषम्यं बहुविधं तत्र भूषणमेव, न तु दूषणम् ॥

अद्वैतामोदो जनकं जीवन्मुक्तमादाय लोकसंग्रहार्थं कर्मानुष्ठानं जनकादेरवदत् ।

परमार्थप्रकाशिका तु जनकस्य कर्मानुष्ठानमपि स्वार्थमेवेति ।

भगवानपि—

"लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ।"

इति वर्णनपूर्वकं स्वस्यापि कर्मानुष्ठानमुपन्यस्यतीति लिखति ।

तत्र परमार्थप्रकाशिका जनकं जीवन्मुक्तं मत्वेदं लिखति, उत तं जीवन्मुक्तममत्वा। आद्ये जीवन्मुक्तिरङ्गीकृता, तत्र कर्मानुष्ठाने जीवन्मुक्तस्य कर्मानधिकारात् अजीवन्मुक्तं कंचन जनकमादाय परमार्थप्रकाशिकेति वक्तव्यम्। आस्तामेवं कामम् ॥

जनक इति वंशनाममात्रम्, न तु व्यक्तिविशेषस्येदं नामेति विष्णुपुराणे व्यक्तम्। जीवन्मुक्तानां लोकसंग्रहार्थमेव कर्माधिकारः। किं बहुना? भगवतोऽपीत्युक्तौ का बाधा? यदि जीवन्मुक्तिरङ्गीकृता, तत्र परमार्थप्रकाशिकाभिमतानां जीवन्मुक्तानामप्युत्तरपूर्वाघयोरश्लेषविनाशौ स्वीकृतौ, इति तेषामपि कर्मानुष्ठानं लोकसंग्रहार्थमित्यवश्यं स्वीकर्तव्यम् ॥

दृष्टान्तदार्ष्टान्तिकभाव उपपद्यतां वा, मा वा—वस्तुस्थितिं तु यदि परमार्थप्रकाशिका काममङ्गीकरोति, तर्हि तावतैवालम्। दृष्टान्तदार्ष्टान्तिकभावो हि किंचित्साम्यमादाय समर्थयितुं शक्यते, किंचन वैषम्यमादाय विघटयितुमपि। न हि जीवन्मुक्तः स्वात्मलाभार्थं दृष्टान्तमपेक्षते। स्वतः प्रमाणशास्त्रसिद्धानां तदुपबृंहणार्थं हि दृष्टान्तान्वेषणा। स च यथाकथंचित् सर्वत्र संपादयितुं शक्यते ॥

अत एव "—तमेवं विद्वानमृत इह भवति" इति श्रुतिः। इयं हि श्रुतिः—इहास्मिन्नेव शरीरेऽमृतो भवति विद्वानिति प्रतिपादयति। तत्रामृतत्वमुत्तरपूर्वाघविश्लेषाभावो वा भवतु, अशरीरत्वं वा। सशरीरत्वं हि शरीराभिमानमात्रनिबन्धनमात्मनि शरीराध्यासनिबन्धनमिति त्वद्वैतमतम्। यदि चैवं जीवन्मुक्तस्यापि देहेऽवतिष्ठमानस्यापि न देहित्वम्। अतोऽशरीरत्वावस्था न ज्ञानिनो विरुद्ध्यते। विदेहमुक्तिस्तु शरीरे पतिते, न तु सति शरीरे। "तमेवं विद्वानि"ति वाक्य इहशब्दार्थस्तु विदेहमुक्तिमात्रपक्ष एतज्जन्मपरम्, न त्वेतच्छरीरपरम्। तथाचेहशब्देन शरीरविवक्षायां जीवन्मुक्तिपरता, जन्मपरतायां विदेहमुक्तिः, इतीहपदार्थो जीवन्मुक्तिपक्षेऽपि नानुपपन्नः ॥

यथा चाधिष्ठानसाक्षात्कारे सत्यपि तस्याप्रामाण्यज्ञानानास्कन्दितपटुतमसंस्कारसहितप्रारब्धभोगरूपप्रतिबन्धकादिनाऽसङ्कर एव तस्याज्ञानलेशनिवर्तकत्वम्, नान्यथा, अतो न जीवन्मुक्त्यनुपपत्तिः, तथोक्तमधस्तात्॥

"तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति श्रुतिर्जीवन्मुक्तौ प्रमाणमिति तु तदङ्गीकारवादिनां प्रक्रिया। प्रारब्धभोगानाम्, तदुपयोगिशरीरसंबन्धादीनां चाविद्याविक्षेपशक्तिमात्रनिबन्धनानामपि भोगान्तपर्यन्तमनुवर्तमानफलावस्थधारावाहिकाधिष्ठानसाक्षात्कारनिवर्त्यत्वाद् मिथ्यात्वं दुर्निवारम्, इति तेषां सत्यत्वापादनं न विचारसहम्। अविद्याया इव तद्गतशक्तेरपि तत्त्वज्ञाननिवर्त्यत्वमेवाद्वैतसिद्धान्ते, इति जीवन्मुक्तिपक्षे न प्रारब्धभोगासाङ्गत्यापत्तिः परमार्थप्रकाशिकारीत्या॥

तत्र जीवन्मुक्तानां स्वर्गाद्यर्थकर्मानुष्ठानाभावेऽपि शरीरयात्रार्थभिक्षाटनादिप्रवृत्तिवत् लोकसग्रहार्थं कर्मानुष्ठानमप्याधिकारिकाणामिव संभवति, परं तु शरीरादिषु तत्तत्क्रियाभावनया न तदनुष्ठानम्, न वा स्वस्मिन्नेव कर्मकर्तृभावनया—

"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः॥"

इति न्यायेन, इति तस्य न बन्धापादकत्वम्। व्यक्तं चैतद् भगवद्गीतायाम्॥

विशिष्टाद्वैताभिमतस्यापि जीवन्मुक्तस्य लोकसंग्रहार्थं स्वार्थं वा कर्मानुष्ठानं न भेदवासनादिबन्धवर्धकमिति संप्रतिपन्नम्। जीवन्मुक्तो हि—

"नवद्वारे पुरे देही नैव कुर्वन्न कारयन्॥"

"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।"

इत्यादिवचनानुसारेणात्मानं कर्तारम्, तत्तत्क्रियाश्रयं वा न मन्यते, चक्षुः पश्यति, नाहं पश्यामीत्येवं सर्वं पश्यति, यथा शरीरविलक्षणमात्मानं जानन्नेव बद्धः स्वर्गाद्यर्थं शरीरेण प्रयतते, एवं सूक्ष्मशरीरान्तविविक्तं जानन् भिक्षाटनाद्यर्थं प्रयतते॥

तत्र जीवन्मुक्तोऽप्यात्मानं यद्यप्यहमिति जानाति, तथापि बद्धवत् नाहमर्थानात्माविविक्ततया, किन्तु ततो विविक्ततया। बद्धोऽहंकारविशिष्टमात्मानं जानाति, जीवन्मुक्तोऽहंकारोपहितमहमिति विजानाति, इति न, अहंकरोमीत्यभिमानाभावेऽपि न कर्मानुष्ठानम्, इति जीवन्मुक्तस्याहम्भावावभास आमोदोक्तो न व्याहन्यते ॥

अनेन—भिक्षाटनादिप्रवृत्तिरपि—व्याख्याता। तत्राप्युपहितस्यैव प्रवृत्तिः, उपाधिगततया तु क्षुदाद्यनुसन्धानम्, न स्वगततयेति न विरुध्यते ॥

तत्रैकजीववादे तत्कल्पितानां सर्वेषां स्वप्नकल्पितानामिव कल्पकमुक्तावेव मुक्तिः, वामदेवादीनां मुक्तिव्यवहारस्तु स्वाप्निकमुक्तव्यवहारवदुपपद्यत इत्यादि तत्तन्निबन्धेषु विशदम्, अर्थवादो वा वामदेवादिमुक्तिवचनमिति। सर्वथा तु प्रस्थानभेदमात्रम्, इति प्रस्थानविशेषस्य प्रस्थानान्तरेण विरोधोऽकिञ्चित्कारः। यथा भक्तिबलेन कर्मणां निवृत्तौ परमते शास्त्रं प्रमाणम्, एवमद्वैतिनामपि तत्त्वज्ञानेनाज्ञाननिवृत्तौ तदेव प्रमाणम्, अन्यथा योजनं तूभयत्र समानम् ॥

तत्त्वज्ञानं तु तत्त्वस्य ज्ञानमिति षष्ठीतत्पुरुषमपेक्ष्य, तत्त्वं ज्ञानमिति वा कर्मधारयसमासम्। तत्र तत्त्वस्य वृत्तिमात्रविषयत्वं निर्विशेषत्वेऽप्युपपद्यते। तत्र वृत्तिरुपाधिमात्रम्, न विशेषणम्, येन स्वविषयापि स्यात्, इति वृत्तिविशिष्टतया न सविशेषता स्यात्। वृत्तिमात्रेण तत्क्षण एवाज्ञानतत्प्रयुक्तानां सर्वेषां बाधेऽनावृतचिन्मात्रमद्वितीयं कथं सविशेषम्? वृत्तिकाले, ततः पूर्वं वा विद्यमाना अपि विशेषा न ज्ञाने भासन्तेऽविवक्षया, इति वृत्तेर्न सविशेषविषयत्वम्, पश्चात्तु बाधितत्वात् न ते सन्त्यपि। अत. षष्ठीसमासपक्षे न सविशेषत्वापत्तिः। अज्ञाननाशानन्तरमज्ञानप्रयुक्तत्वादन्तःकरणादेस्तस्यापि सर्वस्य निवृत्त्याऽद्वैतसिद्धिः ॥

ज्ञानविषयत्वं हि विवक्षाधीनम्, तात्पर्याधीनं वा। न हि सन्तीति सर्वे धर्माः सर्वत्र भासन्ते, अन्यथा घटज्ञानदशायामुदकाहरणनिमित्तत्वकुलाल-

कार्यत्वपरिमाणविशेषगन्धादीनां सर्वेषामपि ज्ञानं स्यात्। ततश्च सत्स्वपि विशेषेषु वृत्तेः प्राक्काले न तेषां भाननियमः, पश्चात्तु यदि सन्ति, यदि च विवक्ष्यन्ते, भासन्तां नाम यथाविवक्षमपरे विशेषाः। अखण्डाकारवृत्त्यनन्तरं तु बाधात् सर्वेषां विशेषाणाम्, कथं नाम सविशेषस्यैव शास्त्रार्थत्वम्। स्वरूपज्ञानं नाज्ञानस्य निवर्तकम्, किन्तु प्रमाणजन्यवृत्तिरूपमेव। न हि स्वरूपज्ञानं सविषयम्, वृत्तिस्तु स्वरूपज्ञानविषया, इति तदनधिकविषयकत्वं वा, तदधिकविषयकत्वं वा वृत्तिज्ञानस्येति विकल्पो दुःस्थ एव, इति कथं वृत्तिज्ञानविषयत्वं ब्रह्मणः संपादयितुं यत्किंचिद्धर्मविशिष्टत्वं कल्पनीयमद्वैतसिद्धान्ते ॥

तत्त्वमेव ज्ञानं तत्त्वज्ञानमिति तु—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ॥"

इति वार्तिकानुसारात् यत्राखण्डाकारवृत्त्युपलक्षितस्वरूपज्ञानं मोक्षस्वरूपम्, तत्र तत्त्वज्ञानादेवेति पञ्चमी तत्त्वज्ञानमुपलक्ष्येत्याशया। तथाचानावृतचिन्मात्र तत्त्वमिति तदाशयः ॥

न चास्मिन् पक्षेऽनावृतं तत्त्वरूपं ज्ञानं सर्वदाऽस्ति, येन सर्वदा मोक्षः, बन्धाप्रसक्त्यादयो वा दोषाः प्रसज्येरन्। अतस्तत्त्वज्ञानादेव मोक्ष इत्यत्र षष्ठीसमासपक्षः, कर्मधारयपक्षश्चोभावपि नाद्वैतमते विरुद्धौ ॥

कथं च भवतां मते तत्त्वज्ञानमित्यत्र षष्ठीसमासपक्षे स्वरूपज्ञानविषयकज्ञानान्तरस्यापि तदनधिकविषयत्वेन निवर्तकत्वासंभवदोषो न समानः। तदधिकविषयं तु न तदज्ञाननिवर्तकम्। किं तत्त्वस्याज्ञानमेव भवतां मते नास्ति? तत्त्वमेव ज्ञानमिति कर्मधारयपक्षेऽपि तस्य सर्वदा सत्त्वात् कथं सर्वदा न मोक्ष इत्यादिशंकाः परिहरणीयाः, इति समानावुभयत्र शंकापरिहारौ ॥

अयं भावः—घटादीनि कार्याणि मृदात्मनैव तत्त्वम्; अनुवर्तमानत्वात्। घटाद्यात्मना त्वतत्त्वम्; व्यावृत्तत्वात्, तत्र मृदपि तत्कारणात्मना तत्त्वम्, कार्यात्मता त्वतत्त्वम्, इति क्रमेण सर्वस्य नामरूपात्मकस्य प्रपञ्चस्याविद्यात्मतैव

तत्त्वम्, तत्राविद्याया उपादानत्वमपि ब्रह्मण्यनाद्यध्यासेन ब्रह्मावरणमपेक्ष्यैव, न तु स्वतः। तत्र ब्रह्मापि शास्त्रेणोपादानं प्रतिपाद्यते, इति तदात्मतैव तत्त्वमविद्याया अपि, इति ब्रह्मरूपतत्त्वज्ञानात्तत्रानाद्यध्यस्ताज्ञानतत्परिणामादीनां सर्वेषां निवृत्तौ मोक्ष इति क्रमस्तत्त्वज्ञानात् मोक्ष इत्यनेन विवक्षितम्। इदमेवाभिप्रेत्योक्तम्—

"कार्यात्मना तु नानात्वमभेदः कारणात्मना"॥ इति।

तथाच यदा घटरूपकार्यरूपतया न प्रतीतिः, न वा सत्ता, तदा घटादीनां मृत्सत्तातिरिक्तसत्ताभावात् नष्ट इति व्यवहारः। स तु घटात्मना प्रतीतिदशायामेव। सति चैवं वस्तुस्थितिमनुरुध्य मृदात्मना तत्त्वनिरूपणपरमामोदमन्यथा गृहीत्वा **घटसत्तायामेव घटो नष्ट इति प्रतीत्यापत्तिरिति दूषण**मदूषणम्॥

शुक्तिरूप्यादिस्थलेऽपि रजतस्य तूलाविद्यापरिणामस्य तद्विषयशुक्त्यवच्छिन्नचैतन्यविवर्तस्य च शुक्तिव्यतिरेकेण तदवच्छिन्नचैतन्यव्यतिरेकेण वाऽभावः शुक्तितत्त्वज्ञानादेवेत्यनुभवसिद्धम्। तत्रापि रजताध्यासाप्रमाणिकत्वकथा, तत्प्रामाणिकत्वसमर्थनं च पौनःपुन्येनोभाभ्यामपि चर्व्यते। तत्र मतद्वयमपि परस्परं विप्रतिपन्नमिति स्वस्वकथायाः स्वस्वगोष्ठीमात्रे पौनःपुन्येन पेषणं निष्प्रयोजनम्। अद्वैतप्रक्रियामनुसृत्याद्वैतमतनिरसनार्थं खलु श्रीभाष्यादीनां यथासंभवं प्रवृत्तिः। तत्र मतान्तरप्रक्रियया मतान्तरनिरसनं न फलाय कल्पते; किं भवतां मतं सर्वसम्मतम्? मतान्तरेण वा न निरस्यते?

अद्वैतमतं तु सविशेषोपासनस्यापि स्वीकारात् यथासंभवमद्वैताविरोधेन सविशेषवादिनां प्रक्रियां स्वीकृत्यैव स्वमतं पोषयति—सविशेषवाक्यानामिव निर्विशेषवाक्यानामपि विना संकोचं गतिवर्णनेन। तथा चाध्यासो नाङ्गीक्रियते, स चाङ्गीक्रियत इति क्रियासमभिहारेण पिष्टपेषणप्रकारं परित्यज्यैव विचारप्रणाळी युक्ता। अन्यथा तु न विचारस्य कापि काष्ठा। तत्राद्वैतिनां मूलप्रक्रियाः सर्वा दूरीकृत्य तन्मतनिरसनं स्वगोष्ठ्यां कामं नाम

क्रियताम्। अद्वैतिनोऽपि स्वस्वगोष्ठ्यां तथाऽनुकरणेन चरितार्था भवितारः, किमेतेन ?

श्रुतौ मृदादिदृष्टान्तोपन्यासे कारणं पूर्वमेवोपपादितम्। तत्र मृत्पदमुपादानकारणस्योपलक्षणमित्युभयसंमतम्। तेन च प्रकृतिरेवोपलक्ष्यते, न ब्रह्म। सति चैवं ब्रह्मविज्ञानेन, प्रकृतिविशिष्टब्रह्मविज्ञानेन वा सर्वविज्ञानम्, शरीरिविज्ञानेन सर्वशरीरविज्ञानं वा कथमुपपद्यते? तत्र यदि शरीर्येव सत्यम्, न शरीरम्, तर्हि न प्रकृतिः सत्या। यदि तु मृत्तिकापदेन तच्छरीरकः परमात्मा विवक्षितः, तर्हि सूक्ष्मचिदचिद्विशिष्ट कथमत्र प्रतीयते ? अचिन्मात्रोदाहरणेन कथमत्र चितोऽपि सूक्ष्मायाः प्रतीतिः ? उपादानकारणज्ञानेन कार्यज्ञानमत्र यदि विवक्षितम्, तर्हि उपादानकारणताया यत्र विश्रान्तिः तद्विज्ञानेन सर्वविज्ञानमेवात्र विवक्षितमिति वक्तव्यम्। ब्रह्म चोपादानं साक्षादद्वैतमत एव, विशिष्टाद्वैतमते तु परम्परया, इति कथमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिकमद्वैतमत इवोपपद्यत इत्यद्वैतामोदोऽप्रामाणिकः ? किमिति वा तदीयमद्वैताशयानुसारि परित्यज्य यथाश्रुतं गृहीत्वा तन्निरासार्थं प्रयत्यते ?

यथा चाध्यासपक्षेऽपि सृष्टिक्रमो न विरुध्यते, तथा पूर्वमेवोक्तम्। तत्र प्रकृतिकारणतां परित्यज्य ब्रह्मकारणतावादे सृष्टिक्रमो भवितुमर्हति वा, न वेति तु विचारान्तरम्। प्रकृतेरपि कारणत्वस्याद्वैतमते स्वीकारात् तत्कारणवादिनामिवैषामपि प्रकृतिपरिणामांशे क्रममुपादाय कथं वा नोपपत्तिः सृष्टिक्रमस्य ?

तत्राध्यासपक्षे परिणाम्युपादानानपेक्षेति परमार्थप्रकाशिका वदति ॥

तदिदं भामतीप्रस्थाने ? उत विवरणप्रस्थाने ? प्रस्थानान्तरे वा ? तत्राद्येऽपि किमविद्याया एव निरासः, उत तस्याः परिणामितायाः। तत्राद्ये विनाऽविद्यामध्यासाधिष्ठानत्वं न संभवति। द्वितीये त्विष्टापत्तिः; तन्मतेऽविद्याया ब्रह्मावरणमात्रेण निमित्तकारणतामात्रत्वात्। विवरणप्रस्थाने हि परिणाम्युपादानमविद्याऽपीति स्वीक्रियते। अन्त्येऽपि प्रकृतिपरिणामवादिनोऽपि सन्तुष्यन्तु—इति॥

भामती हि प्रकृतिपरिणामवादमेव निरस्यति, विवरणं तु तुष्यतु दुर्जनन्यायेन प्रकृतिपरिणाममपि स्वीकृत्य ब्रह्मविवर्तोपादानतां समर्थयते। उभयोरपि ब्रह्मविवर्तोपादानतायामेव निर्भरः। आस्तामियं कथाऽद्वैतवादे। विशिष्टाद्वैतमते प्रकृतिपरिणामवादः कुतः, किं वा प्रयोजनमस्य, कथं वा स्वप्नस्थल इव विचित्रशक्तियोगेन ब्रह्मकारणतामात्रेण न निर्वाहः? किं तत्रापि प्रकृतिरेवोपादानम्? यद्योम्, तर्हि कथं स्वप्नद्रष्टृमात्रानुभाव्यत्वं स्वाप्निकाना-मीश्वरस्रष्टानाम्? यदि ब्रह्मण एव शक्तिविशेषस्तत्र कारणम्, तर्हि जागरिकेष्वपि तेनैवापरेण शक्तिविशेषेण निर्वाहः, इति किं परिणाम्युपादा-नस्यान्तर्गडोः प्रकृत्याः स्वीकारेण? श्रुत्यनुसरणं तूभयत्र समानम्। अनादे-रप्यविद्याया ब्रह्मण्यध्यासादिसमर्थनं कृतहानाकृताभ्यागमप्रसङ्गादिनिरासेन पूर्व-मेवाकारि॥

तत्र विज्ञानवादादद्वैतमतस्यायं विशेषः—यत् क्षणिकविज्ञानातिरिक्तो विषयो विज्ञानवादे नास्ति, अद्वैतमते तु जन्यवृत्तिज्ञानातिरेकेण विषयो मतान्तर-वत् स्वीक्रियते। जन्यज्ञानाकारत्वमेव विषयाणामिति विज्ञानवादिनिरसनं सर्वेषामपरेषां समानम्। विशेषस्तु स्वरूपज्ञानविवर्तत्वाद् विषयाणाम्, तद्व्यति-रेकेण विषयो नास्तीति। त्रिपुट्यन्तर्गतज्ञानातिरिक्तज्ञेयाभावः खलु विज्ञानवादे, तदन्तर्गतं तु ज्ञातृज्ञेयातिरिक्तं जन्यज्ञानम्, धर्मभूतज्ञानं वा न स्वरूपज्ञानम्। जन्यज्ञानातिरिक्तविषयनिरासपरत्वाद् विज्ञानमात्रवादस्य॥

एतेन—विषयनिरूप्यत्वाद् ज्ञानस्य तन्निरासे ताभ्यां सह ज्ञाताऽपि निरस्तो भवति, इति शून्यमेव तत्त्व स्यात्। अत एव विज्ञानमात्रवादो बाह्यालम्बनावश्यकत्वेन सर्वैर्निराक्रियत इति—परास्तम्।

शून्यं तु तत्त्वं सदसत्सदसत्तदनुभयात्मकचतुष्कोविनिर्मुक्तमपरमेव तत्त्वम्। यत्र ज्ञानस्वरूपं ब्रह्म नोरीक्रियते, इति तत्र प्रथमकोटेः, सद्रूपस्य चतुष्कोटिविनिर्मुक्तत्वाभावात् नाद्वैतमते शून्यवादगन्धोऽपि। तदिदं सिद्धम्—तत्त्वज्ञानादेव मोक्षः, तत्त्वं चाध्यासाधिष्ठानं विवर्तोपादानं वा निर्विशेषं ब्रह्मैव।

सविशेषं तूपासनामात्रेणाभ्युदयसाधनं तत्त्वज्ञानस्यान्तरङ्गतरसाधनोपासनामात्रार्थतयोपयुज्यते ॥

कर्मकाण्डदेवताकाण्डज्ञानकाण्डभेदेन विषया भिन्नभिन्नाः। तत्र कर्मविचारब्रह्मविचारयोर्नैकशास्त्रत्वम्। साधनचतुष्टयसंपत्त्यनन्तरमेव ब्रह्ममीमांसा। साधनचतुष्टयानन्तर्यमेवाथशब्दार्थः, न तु कर्मविचारानन्तर्यमिति प्रागेव निरूपितम्। अनेन च पूर्वोत्तरमीमांसयोर्भिन्नशास्त्रत्वमुपपादितप्रायम् ॥

तत्र प्रयोजकानि तु। (1) कर्तृभेदः (2) प्रतिपाद्यभेदः (3) विरुद्धार्थत्वम् (4) अथशब्दस्यानारभ्याधीतत्वेन प्रकरणभेदः (5) सञ्ज्ञाभेदः (6) प्रयोजनभेदश्चेत्यादीनि प्रधानानि ॥

(1) तत्रानुबन्धचतुष्टयैक्यं तद्भेदश्च शास्त्रैक्य-तद्भेदप्रयोजकौ सर्वत्र। तत्र पूर्वमीमांसायामधिकारी त्वधीतवेदः, उत्तरमीमासाया न स एवेत्युभयसंमतम्। तत्राध्यायभेदादधिकारी न पृथक् पूर्वमीमांसायामपि मुख्याधिकारिपरित्यागेन। तथाच तृतीयाध्यायादावथशब्दप्रयोगेऽपि वेदाध्ययनानन्तर्यमेव प्रधानं तत्रेति संप्रतिपन्नम्। सति चैवम्—"अथातो ब्रह्मजिज्ञासे"त्यत्रापि वेदाध्ययनानन्तर्यं मुख्योऽथशब्दार्थः, तदीयषोडशाध्यायानन्तर्यमवान्तरोऽथशब्दार्थ इति वक्तव्यं शास्त्रैक्यवादे, इति जैमिनीयकर्मविचारानन्तरमधीतवेदेन देवतामीमांसा कर्तव्या, तेनैव तदनन्तरं ब्रह्मजिज्ञासा कर्तव्येत्येव पर्यवस्यति। सति चैवम्—"अथातो धर्मजिज्ञासे"ति प्रस्तुतधर्मविचारस्यैव मुख्यत्वम्, अवान्तरमीमांसा, ब्रह्ममीमांसेति शास्त्रैक्यवादे फलति ॥

तत्र धर्मैकदेशविचार एव यद्यत्र विवक्ष्येत, तर्हि "चोदनालक्षणोऽर्थो धर्मः" इत्यनेनैव गतार्थत्वात् "जन्माद्यस्य यतः," "शास्त्रयोनित्वात्", "तत्तु समन्वयादि"ति त्रिसूत्री, यत्र ब्रह्ममीमांसातत्त्वं सर्वमाविष्क्रियते, वितथा स्यात् ॥

सर्वथा तु देवतामीमांसानन्तर्यमेवाथशब्दार्थो वक्तव्यः, न कर्मविचारानन्तर्यम्, न वा कर्मफलानित्यत्वनिर्णयेन मुमुक्षया ब्रह्मजिज्ञासायां प्रवृत्ति-

रपि साधनीया पृथक्; देवतामीमांसयैव गतार्थत्वात्। तत्र "तत्तु समन्वयात्" इत्यत्रोपास्यदेवतास्वरूपमेव नास्तीति जैमिनीयमतमपास्य ब्रह्मपारमार्थ्यं साधयितुं समन्वयाधिकरणमिति शङ्कासमाधानादिकं कथमुपपद्यते? देवतामीमांसयैवोपास्यस्वरूपस्य, तत्रापि देवतापरकाष्ठात्वं विष्णोरेवेति व्यवस्थापनात् किमनेन समन्वयाधिकरणेन शास्त्रैक्यवादे?

तत्र पूर्वोत्तरमीमांसाकर्त्रोरेकसिद्धान्तत्वे पूर्वमीमांसासिद्धान्तनिरसनमुत्तरमीमांसायां कथम्? एवमेव देवताधिकरणे जैमिनिमतनिरसनं कथम्? पूर्वमीमांसाधिगतस्यैवोत्तरमीमांसायामपशूद्राधिकरणसिद्धान्तस्य किमर्थं साधनम्? वेदाध्ययनानन्तरं कर्तव्याया ब्रह्ममीमांसायास्तदनधिकारिषु कथं प्रसक्तिरपि? पूर्वमीमांसायां त्वध्ययनविधिफलनिरूपणार्थमपशूद्राधिकरणमिति युज्यते। कथं च नाध्ययनानन्तर्यं मुख्योऽथशब्दार्थः? अवान्तरमेव कर्मविचारानन्तर्यमथशब्दार्थ इति पक्षे किमिति पुनरुक्तिः साधितस्यैवार्थस्य? यदि जैमिनिमुखमपेक्ष्यैव तदूरितार्थपूरणार्थं बादरायणीया मीमांसा स्यात्। अतः परस्परानपेक्षया ग्रन्थरचनमुभयोरपि, इति विरुद्धसिद्धान्तकर्तृभेदः शास्त्रभेदप्रयोजक इति स्वीकर्तव्यम्। तत्र च सिद्धान्तभेदस्यैव विवक्षणाद् न पूर्वापरविरोधः, न वा पुनरुक्तिदोषः॥

पृथक्शास्त्रत्वे साधनचतुष्टयसम्पन्नस्यानुपनीतस्य ब्रह्मजिज्ञासायामधिकारापत्तिरिति परमार्थप्रकाशिका—वदति॥

उक्ताशङ्कानिराकरणार्थमेव स्वतन्त्रमपशूद्राधिकरणमुत्तरमीमांसायाम्। ब्रह्ममीमांसा हि वेदान्तार्थमीमांसा, न तु सर्ववेदार्थविचारः। न च तावन्मात्राध्ययनस्य "स्वाध्यायोऽध्येतव्य" इत्यनेन विधानम्। अतो वेदान्ताध्ययनमात्रेण ब्रह्मजिज्ञासायां प्रवृत्तिरनुपनीतानामपि भवतीति शङ्कावारणार्थमपशूद्राधिकरणं सफलमुत्तरमीमांसायाम्। वेदान्ताध्ययनस्यापि वेदाध्ययनविधिप्रयुक्तत्वेऽपि तदर्थमात्रविचारस्य वेदाध्ययनविध्यप्रयुक्तत्वात् अनधीतवेदान्तस्य ब्रह्ममीमांसायामधिकारः स्यात्। इदमेवाभिप्रेत्य भाष्यम्—"धर्मजिज्ञासायाः प्रागप्यधीतवेदा-

न्तस्य ब्रह्मजिज्ञासोपपत्तेरि"ति । जन्मत एव विरक्तानामपि वेदाध्ययनं विना न ब्रह्मविचारेऽधिकारस्त्रैवर्णिकानामपीति हि तदाशयः, इति कर्तृभेदात् शास्त्र-भेदोऽपरिहरणीयः ॥

एतेन—वेदत्वेन सर्वेषामैक्यवदत्रैक्यमिति—परास्तम् ।

न हि शास्त्रत्वेन साङ्ख्ययोगवैशेषिकार्हतसौगतद्वैतविशिष्टाद्वैताद्वैत-शास्त्राणा सर्वेषामैक्यम् । यदि तत्र प्रतिपाद्यभेदः प्रयोजकः, तर्हि स्वागतम् । अत्रापि प्रतिपाद्यभेदादेव शास्त्रभेद इति जानातु भवान् । यथा च कर्म-विचारोऽतीतो नाधिकारिविशेषणम्, तथोपपादितमधस्तात्, इत्यधिकार्यभावो विशिष्टाद्वैतमते ॥

कर्मफलानित्यत्वनिर्णयद्वारा कर्मविचारस्याधिकारिविशेषणत्वे तु कर्म-फलानित्यत्वज्ञानस्य वैराग्यपादाधीनस्य ब्रह्मविचारतः पूर्वमसंभवादन्यो-न्याश्रयो भवतामपि । न च जैमिनीयकर्मविचारे कर्मफलानित्यत्वं कुत्रापि । अधिकमधस्तादत्रैव । अत्राद्वैतमते मतद्वय इव पूर्वमीमांसायामधीतवेदोऽधिकारी, उत्तरमीमांसायां तु साधनचतुष्टयसपन्नः स इत्यधिकारिभेदात् शास्त्रभेदः । शास्त्रैक्यवादे, यत्र धर्मजिज्ञासया ब्रह्मजिज्ञासाऽपि प्रतिज्ञाता ; ब्रह्मणोऽपि धर्मशब्दवाच्यत्वात्, तत्रोभयत्र प्रधानमधिकारिविशेषणमधीतवेदत्वमेवेति सत्यं नाधिकारिभेदः ; तथापि तत्पक्षे पूर्वोक्तरीत्या कृतकर्मविचारः, क्रियमाणकर्म-विचारो वा नाधिकारी । सर्वथा तु न कर्मविचारानन्तर्यमथशब्दार्थः ॥

(२) विषयभेदोऽपि पूर्वोत्तरमीमांसयोरैक्यवादं बाधते । धर्मजिज्ञासा-याम्—"चोदनालक्षणोऽर्थो धर्मः" इत्युत्तरसूत्रात् साध्यधर्मो विचार्यते, सिद्धो धर्मस्तूत्तरमीमांसायाम् । पूर्वत्राविरक्तोऽधिकारी, उत्तरत्र विरक्तोऽधिकारीति हि शास्त्रैक्यवादिनोऽपि । अत एव—"अथातो ब्रह्मजिज्ञासे"ति पृथग् जिज्ञासा-प्रतिज्ञा-लक्षण-प्रमाणादिविवेचनम् । तत्र ब्रह्मपदार्थो यः कोऽपि भवतु, धर्मविचाराद्भिन्नो ब्रह्मविचारो विषयभेदनिबन्धन इति तु नापह्नोतुमलम् ॥

(३) एतेन—फलभेदोऽपि—व्याख्यातः। कर्मविचारफलं प्राधान्येन कर्मानुष्ठानद्वारा स्वर्गादिः। ब्रह्मविचारफलं निःश्रेयसं मोक्षो वेति न विप्रतिपन्नम्, मोक्षस्वरूपं तु यदि विप्रतिपन्नम्, तर्हि भवतु नाम, फलभेदः कथं नात्र दुर्निवारः। स्वतन्त्रस्वर्गसाधनस्य विनियोगान्तरेण मोक्षे कर्मणां विनियोगमात्रेण ततस्तस्योपकारकत्वमात्रं भवेत्, न तु तयोरैक्यम्। न हि "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते"ति विनियोगवशात् दर्शपूर्णमाससोमानामैक्यम्। संयोगपृथक्त्वमात्रं हि तत्र, इति कर्मणां ज्ञाने विनियोगमात्रेण कर्मब्रह्मज्ञानयोरिव कर्मब्रह्मविचारयोरपि नोपकार्योपकारकभावोऽपि ॥

न हि धर्मशब्दार्थत्वमात्रेण विहितं साध्यक्रियारूपं सिद्धपरमात्मस्वरूपं चैकम्, येन विषयैक्यादैकशास्त्र्यमुपपद्येत। न चोपासनमपि कर्मैव, इति न तदैक्यवादः संभवदुक्तिकः। तथा सति कर्मतया करणतया वा सिद्धद्रव्यविचारस्य जैमिनीयद्वादशलक्षण्यामेव कृतत्वात् किमनया ब्रह्ममीमांसया [१] ॥

उपास्यस्वरूपं सत्यम्, स च विष्णुरेव ब्रह्मपदवाच्य इति निरूपणं तु देवतामीमांसयैव गतम्। यदि वाक्यविशेषाणां विष्णुपरत्वमन्यपरत्वं वेति संशयनिरासार्थमियं मीमांसा, तर्हि काशकृत्स्नेन, पैलेनान्येन वा प्रस्तुताया देवतामीमांसाया एवानुकर्षेणेक्षत्याद्यधिकरणमारभ्यैव जिज्ञासा प्रस्तूयताम्, किमनया चतुःसूत्र्या [२] इदं सर्वमभिप्रेत्यैवोक्तं भाष्ये—आरभ्यमाणं चैवमारभ्येत—"अथातः परिशिष्टधर्मजिज्ञासा"—"अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासे"ति वदि"ति। अतो देवतामीमांसानिर्णीतसगुणब्रह्मानुषङ्गेण सगुणनिर्गुणोभयब्रह्मजिज्ञासैवोत्तरमीमांसायां विवक्षिता ॥

तत्रापि प्राधान्येन मुख्यतात्पर्यविषयतया निर्विशेषमेव ब्रह्म विषयः, इति विषयभेदोऽपि शास्त्रभेदप्रयोजकः ॥

प्रयोजनभेदस्तूभयोः स्यादेवेति कर्मब्रह्मविचारयोरैक्यवादो न क्षोदक्षमः। विषयप्रयोजनभेदेन संबन्धभेदोऽप्यर्थसिद्धः, इत्यनुबन्धचतुष्टयं

शास्त्रैक्यवादस्य नितरां प्रतिकूलम् । अत एकार्थप्रतिपादकत्वाभावान्नैकशास्त्रत्वमित्यामोदोक्त दुष्प्रकम्प्यम् ॥

(4) आरभ्याधीतत्वम्, अनारभ्याधीतत्वं च न क्रमपाठमादाय निर्वहति । सत्यङ्गाङ्गिभावसंबन्धयोग्यत्व आरभ्याधीतत्वम्, तत्तत्प्रकरणसंबन्धायोग्यत्वेऽनारभ्याधीतत्वम्— यथा "यस्य पर्णमयी जुहूर्भवती"ति । न हि तदपि वाक्यं कस्यचन वाक्यस्यानन्तरं पठितमिति कृत्वाऽऽरभ्याधीतम् ॥

न च जैमिनीयकर्मविचारानन्तरमेव ब्रह्मविचारो बादरायणीय इति क्रमे किमपि प्रमाणमस्ति, सकर्षकाण्डानन्तरमेव वेति । "अथातो ब्रह्मजिज्ञासे"ति स्वतन्त्रं जैमिनिमनपेक्ष्य बादरायणेन ब्रह्ममीमासा पूर्वं युगपद्वा कृतेति वादे का वा बाधा? एवं जैमिनिनाऽपि बादरायणमनपेक्ष्य कृता धर्मजिज्ञासेति वादेऽपि का वा हानिः?

अनादिसंप्रदायसिद्धानां न्यायानां जैमिनिना, बादरायणेन वा संग्रहमात्रं सूत्ररूपेण ग्रथितमिति हि सांप्रदायिकः पन्थाः; अन्यथा जैमिनिना, बादरायणेन, तत्प्राचीनैर्वा कर्मविचारं जैमिनीयं बादरायणीयं वा विना कर्मब्रह्मतत्त्वज्ञानमनधिगतं स्यात्, देवतानां ब्रह्मविद्याधिकारो वा कथं बादरायणेनापि समर्थयितुं शक्यते? किं बादरायणीयब्रह्मजिज्ञासायां बादरायणोऽधिकारं नियमयति? सर्वथा तु जैमिनीयकर्मविचारस्य बादरायणीयब्रह्मविचारस्य च न क्रमः, न वा कर्मप्रकरणे ब्रह्मविचारः, इति कथं कर्मविचारमारभ्याधीतत्वं ब्रह्मविचारस्य? अतोऽनारभ्याधीत एव ब्रह्मविचारः, सोऽपि स्वतन्त्र एव बादरायणस्य ॥

(5) अस्तु वा कथंचनारभ्याधीतत्वमपि, तथापि—"अथैष ज्योतिरथैष विश्वज्योतिरि"त्यादाविवाथशब्देन प्रकरणविच्छेदपूर्वकम्—"अथातो ब्रह्मजिज्ञासे"ति, ब्रह्ममीमांसेति नामान्तरेण च प्रस्तुतो ब्रह्मविचारः संज्ञयाऽपि भेदमेवार्हति कर्मविचारात्, यस्य धर्मजिज्ञासेति संज्ञान्तरम् ॥

तत्र 'अथातो धर्मजिज्ञासे'ति धर्मपदेन सिद्धसाध्यधर्मद्वयस्य विवक्षायां धर्मपदमपरित्यज्य परिशिष्टधर्मजिज्ञासेति सिद्धधर्मजिज्ञासेति वा सूत्रणीयम्। न तु तत्पदं दूरीकृत्य ब्रह्मपदप्रक्षेपेण। तेन च ज्ञायते "कृष्णं धर्मं सनातनमि"त्यादिवचनसिद्धसगुणविचार एव तत्र प्रक्रान्तः, न तु निर्विशेषसंवित्स्वरूपजिज्ञासाऽपि। अतश्च पृथक् ब्रह्मपदेन न सगुणब्रह्ममात्रप्रस्तावो ब्रह्ममीमांसायाम्॥

तत्र निर्गुणं न धर्मपदार्थः, सगुणं तु धर्मपदार्थोऽपि, ब्रह्मपदार्थोऽपि। अत एव धर्मपदत्यागेन ब्रह्मपदप्रयोगः। तेन च धर्मजिज्ञासातः पृथक्त्वं ब्रह्मजिज्ञासाया निगदव्याख्यातम्॥

भिन्नकर्तृकत्वं हि तत्कार्यभेदं न प्रयोजयति, अन्यकृतस्यापूरितस्य प्रासादादेः कादम्बर्यादेर्वाऽन्येन पूरणं क्रियते विषयस्य चैक्ये। न चात्रोभयमपि। कर्मविचारः पूरित एव जैमिनिना; अन्यथा ब्रह्मजिज्ञासेति किं नामान्तरेण? न हि बहुकर्तृकस्यैकस्य प्रासादस्य, कादम्बर्यादेर्वा कर्तृभेदप्रयुक्तकार्यभेदस्य नामान्तरेण व्यपदेशः। अतो धर्मजिज्ञासा, ब्रह्मजिज्ञासेति नामभेदात् तत एव तत्कर्तृभेदादपि शास्त्रभेद एव शरणम्॥

सर्वथा तु क्रमिकत्वेऽपि कर्मविचारादेः कर्मविचारानन्तरं देवताकाण्डविचारः, तदनन्तरं ब्रह्मविचार इत्येव युक्तम्। देवताविचारानन्तरं ब्रह्मविचारविवक्षायां तु देवतामीमांसाया एव सगुणब्रह्मविचारत्वात् तदानन्तर्यं निर्विशेषब्रह्मविचारस्यैवायातम् न तु सगुणब्रह्मविचारस्यैव, इति घट्टकुट्यां प्रभातम्॥

श्रीभाष्यमते हि सगुणोपासनकर्मणोरेवोपकार्योपकारकभावः; निर्विशेषज्ञानस्यैवानङ्गीकारात्। तत्र यदि ब्रह्मजिज्ञासेति सगुणब्रह्मवेदनमभिप्रेत्यैव, तर्हि सगुणोपासने सहानुष्ठानेन कर्मणामुपकारकत्वमद्वैतिनामपि संमतम्। तथाच श्रुतिः—"विद्यां चाविद्यां च यस्तद्वेदोभयं सहे"ति। न च कर्मविचारस्य ब्रह्मविद्यया साहित्ये किमपि प्रमाणमस्ति॥

फलं चास्य ततो विलक्षणमेव। न चोक्तविधब्रह्मजिज्ञासायां कर्मणः, तद्विचारस्य वोपयोगः। साक्षात् परम्परया वा तदुपयोगस्तु जन्मान्तरीयेण कर्मणाऽपि, इति भामत्यादौ व्यक्तम्, इति न कर्मविचारानन्तर्यं ब्रह्मविचारस्य। नच ततः शास्त्रैक्यवाद इति वस्तुस्थितिः॥

(३) एतेन—आराधनाराध्यभूतयो. कर्मब्रह्मणोरविरोध इति—परास्तम्।

सगुणब्रह्मकर्मणोस्तदविरोधित्वेऽपि निर्विशेषब्रह्मणा तस्य विरोधस्य निराबाधात्।

यत्तु—श्रेयःसाधनत्वात् कर्मेव ब्रह्मापि धर्म—इति,

तत्र कर्मणः फलसाधनत्वे भगवत्प्रसादस्य द्वारत्वेन तद्द्वारा फलदातृत्वेऽपि न भगवतः श्रेयस्साधनत्वम्; कर्मविधौ कर्मवत्साधनत्वेनेश्वरस्याप्रतिपादनात्, अन्यथा कर्मणः श्रेयस्साधनत्वानुपपत्तिरिति कथं कर्मवत् ब्रह्म श्रेयस्साधनम्; अननुष्ठेयत्वाच्च ब्रह्मणः। क्रिया, तत्साधन वा क्रियासम्बद्धमेव फलसाधनम्, यत्र फलं साध्यम्। तत्र क्रिया तत्साधनं वा परम्परया फलसाधनम्। उपास्यं हि ब्रह्म नोपासनाया करणम्, किन्तु तत्कर्म, इति तद्विशिष्टोपासनमेव भगवत्प्रसादद्वारा फलसाधनमिति कथं चोदनालक्षणोऽर्थो धर्म इति सूत्रोपन्यस्तं धर्मत्वं ब्रह्मण.? येन ब्रह्मविचारोऽपि धर्मजिज्ञासाविषयः स्यात्॥

अतो धर्मविचारत्वं न विचारद्वयानुगतो धर्मः। वेदार्थविचारत्वमात्रविवक्षायां "चोदनालक्षणोऽर्थो धर्म" इति सूत्रवैयर्थ्यमेकं दूषणम्। अपरं तु भामत्युक्तम्—'अथातो ब्रह्मजिज्ञासे'ति सूत्रवैयर्थ्यम्। वेदार्थविचारत्वेनैक्यं तु द्वैताद्वैतविशिष्टाद्वैतविचाराणामैक्यापत्त्या नोचितम्। तत्र द्वैताद्वैतविचाराः पूर्वपक्षतया विशिष्टाद्वैतेऽपि क्रियन्ते, एवं विशिष्टाद्वैतविचारः पूर्वपक्षतया द्वैताद्वैतविचारयोरिति स्थितेऽपि वेदार्थविचारत्वं सर्वेषामक्षतम्॥

यदि सिद्धान्तार्थमादायैव वेदार्थविचारत्वमैक्यप्रयोजकम्, न पूर्वपक्षतया विचारत्वम्, तर्हि "धर्मं जैमिनिरत एव" "मध्वादिष्वसंभवादनधिकारं जैमिनिः" 'तत्तु समन्वयादि'त्यादौ, देवताधिकरणे 'शब्द इति चेन्ने'त्यादौ च जैमिनीयविचारस्यापि पूर्वपक्षतया ग्रहणात् तेनापि विशिष्टाद्वैतरीत्या ब्रह्मविचारस्य नैक्यम् ॥

जैमिनीयधर्मविचारः कर्मविचार इति मत्वा खलु कर्मब्रह्मविचारयोरैक्यं मन्यते, तेन च जैमिनीयो न ब्रह्मविचार इति निगदव्याख्यातम्, इति विषयभेदे स्पष्टे, कथमैक्यं वेदार्थविचारत्वमात्रेण ? दर्शपूर्णमासाग्निहोत्रादिकर्मविचारस्य कर्मत्वेन वेदार्थविचारत्वात् तद्विचाराणामैक्यम्, न तु ब्रह्मापि कर्म। धर्मविचारत्वेनैक्यं तु वेदार्थविचारस्य जैमिनिप्रतिज्ञातस्य कर्मातिरिक्तधर्मविषयत्वे सत्यं स्यात्, न चैतद् भवताऽपि मन्यते। जैमिनीयः कर्मविचार इति हि पौनःपुन्येनावर्त्यते। धर्मशब्देन ब्रह्माविवक्षाकारणानि तु पूर्वमेवोपन्यस्तानि ॥

तत्र कर्मकाण्डोपनिषद्भागयोरेकवेदाध्ययनविधिगोचरत्वेन सशिरस्कवेदस्यैव तत्तच्छाखाभेदभिन्नस्य "स्वाध्यायोऽध्येतव्यः" इत्येकवचनान्तस्वाध्यायपदेन ग्रहणादेकत्वम्, न त्वर्थैक्यमभिप्रेत्य, वेदत्वजात्याक्रान्तत्वेन जातावेकवचनेन हि तत्रैकत्वम्; अन्यथा सर्वेषां वेदानामपि वेदत्वेनैक्यापत्त्या वेदविभागकथैव लुप्येत ॥

इदं चैकशास्त्र्यं जैमिनेरपि नाभिमतम्; यतो ब्रह्मविचारविरुद्धं धर्मस्यैव फलसाधनत्वम्, शब्ददेवतात्वम्, देवताविग्रहनिषेधम्, तत एव देवतानां ब्रह्मविद्यानधिकारित्वम्, उपनिषदर्थवादत्वम्, यथा—"शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिरि"ति सूत्रोक्तविधया स्वानभिमतं बादरायणविचारं जैमिनिर्मन्यते ॥

उत्तरस्यां मीमांसायां "तदुक्तमि"ति त्वविरुद्धांशे जैमिनीयन्यायानामपि 'अनुक्तमविरुद्धमन्यतो ग्राह्यमि'ति न्यायेनानुसन्धानं बादरायणस्य स्वशिष्यस्यापि

तन्त्रान्तरप्रवर्तकस्यांशविशेषे समादरणमभिप्रेत्य—स्वीयमुद्देशं किञ्चन सम्यगुपक्षिपतीति ॥

अधिकारिभेदमूलस्य तस्य तत्र प्रवर्तकत्वम्। अन्यं चाधिकारिणमभिप्रेत्य तस्य तन्त्रान्तरप्रवर्तकत्वमिति तु तत्त्वम्। न च जैमिनेरप्युक्तन्यायविस्तरः स्वबुद्धिप्रभावेण, किन्तु बादरायणोपदेशप्रभावमात्रेण। न्यायाश्च सर्वेऽनादिसंप्रदायसिद्धाः, न तु जैमिन्याद्युपज्ञाः, इति जैमिनि प्रति स्वोपदिष्टस्य न्यायस्यैव "तदुक्तमि"ति स्वयमनुसन्धानं न दोषाय। व्यक्तं चैतदन्यत्र—न पूर्वमीमांसोपजीवकत्वमुत्तरमीमांसायाः—इति। अतो पूर्वमीमांसोक्तन्यायानुसरणेनोत्तरमीमासेति वाक्यं यदि पूर्वगीमांसाद्वारैव तदीयन्यायानुसरणमभिप्रेत्य, तर्हि बाधितम्। स्वोपदिष्टानामपि न्यायानामनुस्मरणं जैमिनिगुरोः स्वशिष्यकृतिमपेक्ष्येति न श्लिष्टतरम् ॥

"एक आत्मनः शरीरे भावात्" इत्यधिकरणे भाष्ये—"ननु शास्त्रप्रमुख एव प्रथमे पादे शरीरानात्मत्वं शबरस्वामिने"त्यादिना यद्यपि शास्त्रैक्यं मीमांसात्वेनोपन्यस्तम्, तथा सर्वसिद्धान्तसारसग्रहे, पुराणन्यायमीमांसेत्यादौ मीमांसात्वेन मीमांसयोरैक्यानुसंधानवत् विंशतिलक्षणी मीमांसेति; तथापि न तद्विषयैक्यम्, प्रयोजनैक्यम्, अधिकार्यैक्यम्, कर्मविचारानन्तर्यं ब्रह्मविचारस्येति वा मत्वा; जिज्ञासाधिकरणे सर्वेषामेषां निरसनात्। एतादृशमैक्यं तु वेदत्वेनैक्यमिवाकिंचित्करम् ॥

शिवार्कमणिदीपिका हि बहुभिः कारणैः शास्त्रैक्यं प्रसाध्य, न तत्राग्रह इत्युपसंहरति—विषयभेदादिना शास्त्रभेदमेवान्ततो व्यवस्थापनेन विशिष्टाद्वैतवादमाश्रित्यापि ॥

वस्तुतस्तु—वृत्तिकारमताभिप्रायेणैव "एक आत्मनः" इत्यत्रैकशास्त्र्यं भाष्य उक्तम्, न तु स्वमतेन—स्वसिद्धान्तविरोधिनामन्येषामाचार्या-

णामपि तत्रैकमत्यमिति । तत एव विस्तारोऽवगन्तव्य इति ज्ञापनार्थं पूज्यतया वृत्तिकारादीनामनुसन्धानम्, न तु तदीये शास्त्रैक्येऽपि स्वाभिमतसूचनार्थम् ॥

न चेमे वृत्तिकाराः पूर्वाचार्या बोधायनाचार्याः ; एतन्मते आत्मविभुत्वादीनामङ्गीकारात् । विस्तृतं चैतत् श्लोकवार्तिके वृत्तिकाराभिमतात्मवादनिरूपणावसरे । अत उक्तम्—भाष्यानुसारेणापि न शास्त्रैक्यं साधयितुमलम् ॥

इमे हि वृत्तिकाराः—अद्वैतिनां विशिष्टाद्वैतिनां च ब्रह्मपरिणामवादे, ज्ञानकर्मसमुच्चयवादे, अविकृतात्मपरिणामे, नित्यधर्मभूतज्ञानवादे च विरुद्धाः, सर्वात्मना विशिष्टाद्वैतिनां तु आत्मविभुत्ववादेऽपि, इति तन्मतानुसरणमुभयोरपि विघातायैव । अंशतः स्वाभिमतानुवादमात्रेण शास्त्रैक्ये भगवत्पादानां तात्पर्यमिति कल्पनायां विशिष्टाद्वैतमतेऽप्यात्मविभुत्वज्ञानकर्मसमुच्चयब्रह्मपरिणामवादाद्यापत्तिः, उपवर्षाचार्या एव भास्करसंप्रदायप्रवर्तका इति भास्करभाष्ये व्यक्तम् । भास्करमतं तु विशिष्टाद्वैतमतेऽपि निरस्यते ॥

अत एव—

कपिलस्य कणादस्य गौतमस्य पतञ्जलेः ।
व्यासस्य जैमिनेश्चापि शास्त्राण्याहुः षडेव हि ॥

इति वचनम् ।

इदं वचनमद्वैतसिद्धान्तपक्षपातिनः कस्यचिदिति न प्रमाणमिति परमार्थप्रकाशिका—भणति ॥

तत्राद्वैतपक्षपात एव यद्यप्रामाण्यनिमित्तम्, तर्हीदं विविच्यताम्—किमिदं विशिष्टाद्वैतिनां दृष्ट्याऽप्रमाणम्, उताद्वैतिनां दृष्ट्या, उतोभयदृष्ट्येति ? आद्येऽद्वैतपक्षपातिनां केषां वाक्यं विशिष्टाद्वैतिनां प्रमाणम् ? द्वितीये तु बाधितम् । अत एव न तृतीयः ; इदमेवात्रानुयुज्यते—विशिष्टाद्वैतपक्षपातिनां किं वाक्यमद्वैतवादिनां प्रमाणमिति, इति स्वविरोधमात्रेणाप्रामाण्यव्यवस्था न फलाय कल्पते, किञ्चित्करी वा ॥

यथाच पूर्वोत्तरमीमांसयोर्विषयादिभेदनिबन्धन एव भेदः प्रामाणिकः, न च मीमांसात्वेन तदैक्यम्, तथा पूर्वमेवोक्तम्। अतः पुराणन्यायमीमांसेति वाक्ये मीमांसात्वेनैक्यनिर्देशो नोक्तवचनविरुद्धः; अन्यथा पुराणत्वेन सात्त्विक-राजसतामसपुराणानाम्, अङ्गत्वेन शिक्षाव्याकरणछन्दोनिरुक्तज्योतिषामप्येकत्वमापद्येत ॥

एतेन—एकव्याख्येयव्याख्यानत्वेनैकग्रन्थत्वमपि—परास्तम्;

निर्णयसिन्धु-रघुनन्दनतत्त्व-वैद्यनाथदीक्षितीयादीनामेकस्मृतिव्याख्यान-त्वेनैकत्वापत्तेः। यदि तत्र कर्तृभेदः, तर्हि अत्रापि समानम्। सायण-भट्टभास्कर-भाष्याणाम्, किं बहुना? तत्तद्ब्रह्मसूत्रभाष्याणामप्येकग्रन्थत्वापत्तिरेकव्याख्येय-व्यख्यानत्वादिति पूर्वमेवावेदितम् ॥

यथा च ब्रह्मजिज्ञासा नियमेन कर्मविचारं नापेक्षते, उपनीतानामधीत-वेदान्तानामपि साधनचतुष्टयसंपन्नानां जन्मान्तरीयकर्मानुष्ठानेन विगलितान्तः-करणमलानां जैमिनीयकर्मविचारं विनापि जैमिनिबादरायणतत्प्राचीनपराशर-प्रभृतीनां देवतानां च कर्मानधिकारिणां ब्रह्मविचारस्य विष्णुपुराणादितोऽवग-मात्, तथा पूर्वमेवोपपादितम् ॥

यत्तु—वेदाध्ययनजनितापातप्रतीतिकाल एव केवलकर्मणैवानन्तस्थिर-फललाभसंभवे किमिति कर्मोपकारबलेन फलहेतुतया प्रतीयमानब्रह्म-विज्ञानेनेति बुद्ध्यापि कर्मविचार एव प्रवृत्ति प्राथमिकी स्यात्—इति,

तदिदम्—सशिरस्कवेदाध्ययनजनितापातप्रतीतिकाले, उपनिषद्भाग-मात्राध्ययनजनितप्रतीतिकाले वा केवलब्रह्मज्ञानेनैवानन्तस्थिरफललाभः, कर्मणां त्वल्पास्थिरफलहेतुत्वमिति बुद्ध्या ब्रह्मविचार एव प्रवृत्तिः प्राथमिकी स्यात्, इति विपरीतशंकाया अपि संभवाद् नोपपद्यते ॥

शङ्कितं चैवं श्रुतप्रकाशिकायामपि। यत्रोक्तशंकापरिहारमुखेन—"अथातो ब्रह्मजिज्ञासेत्येव प्रथमा प्रतिज्ञा, जैमिनीयकर्मविचारस्तु तृतीय-

चतुर्थचरणशेषतया, पाठक्रमादर्थक्रमो बलीयानिति न्यायावष्टम्भेनेत्यादि। तत्र सर्वस्य जैमिनीयकर्मविचारस्य साधनाध्यायशेषतया योजनकल्पना तु व्यासस्य ब्रह्ममीमांसाया यथायथं रचनायामसामर्थ्यमेव ज्ञापयति॥

यद्ययमेव व्यासाशयः, तर्हि "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति कर्मणामिव तद्विचारस्यापि साधनाध्याय एव सूत्रणं न कुतः? यदि सर्वापेक्षयेति सूत्रेणैव तद्विचारसाधनत्वमपि सूचितम्, तर्हि किमनेन कर्मविचारेण पृथक् सूत्रितेन, तृतीयतुरीयचरणशेषतया योजनेन च? यदि वस्तुस्थितिकथनमात्रमिदम्, तर्हि किमिति व्यासेनैव कर्मविचारोऽपि न कृतः? किमिति वा स्वशिष्यद्वारा स्वसिद्धान्तविरुद्धानामर्थानां पूर्वं स्वविचाराङ्गानामेव प्रचारणम्?

"अथातो ब्रह्मजिज्ञासे"त्यत्र विवक्षितं ब्रह्मज्ञानं कर्मविरुद्धम्। देहातिरिक्तत्वेनात्मज्ञानमात्रं कर्मण उपकारकम्, न त्वकर्तृत्वादिरूपेण। तच्च कर्मानुष्ठानस्य कर्तृत्वादिज्ञानसापेक्षस्य विरोधि, भेदगर्भत्वात् कर्मणाम्। सत्यं सविशेषज्ञानमपि भेदगर्भम्। को वा विप्रतिपद्यते तस्य भेदगर्भतायाम्? विप्रतिपत्तिस्तु ब्रह्मज्ञानमत्र विवक्षितं निर्विशेषाकर्त्रभोक्त्रादिसंविन्मात्रविषयकमेव विवक्षितं वा, न वेति॥

तदेवात्र विवक्षितमित्यद्वैतिनः। परे तु तत्र विवदन्ते। एकांशवादमध्ये वादान्तरमादाय दूषणं शाखाचंक्रमणमेव। ब्रह्मनिर्विशेषत्वं कृत्वाचिन्तयाऽत्राभ्युपगम्यैव कर्मब्रह्मणोर्विरोधचर्चा प्रस्तुता। ब्रह्मसविशेषत्ववादे तु तदविरोधः संप्रतिपन्न एव। ततश्च सविशेषमेव मनसि निधाय कर्मब्रह्माविरोधसमर्थनं सिद्धसाधनमेव॥

अस्तु वा श्रवणादाविव भेदगर्भत्वं कर्मणोऽपि ब्रह्मणा विरोधं विरुणद्धीति, तथापि निर्विशेषब्रह्मज्ञानसाधनत्वं न साक्षात् शमदमादीनामिव ज्ञानकालपर्यन्तमनुवर्तमानानाम्; शमाद्यन्तरङ्गसाधनेनैव तस्य गतार्थत्वात्। प्रमाणमात्रापेक्षे प्रत्यक्षे तु कर्मणां न कथमप्युपयोगः॥

न च—अत्र, वेदनं न साक्षात्कारः, किन्तु दर्शनसमानाकारध्रुवानुस्मृतिरूपं निदिध्यासनमेवेति—वाच्यम्; विप्रतिपन्नं हीदम्। न च साक्षात्कारकाले सह, समुच्चयेन वा कर्मणोऽपि सम्बन्धः। न च साक्षात्कारोऽपि कर्मवत् पुरुषतन्त्रः, किन्तु प्रमाणतन्त्रः। निदिध्यासनान्तसाधने परम्परयोपकारकत्वं तु संप्रतिपन्नमेव ॥

"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेने" ति श्रुतिर्हि न निर्विशेषात्मसाक्षात्कारार्थत्वं कर्मणां बोधयतीति संप्रतिपन्नम्। तत्र सविशेषवेदनसाधनत्वमेव, न तु निर्विशेषज्ञानसाधनत्वमिति तु विप्रतिपन्नम् ॥

तत्र विदन्तीत्यप्रयोगेण विविदिषन्तीति सन्नन्तप्रयोगस्य किमस्ति प्रयोजनमिति विवेचनीयम्। ततः परं तु सन्नन्तप्रयोगस्थले इच्छाया एव फलत्वम्, उतेष्यमाणस्येति चर्चोत्तिष्ठति। तत्र वेदनसाधनताया एव विवक्षणे सन्नन्तप्रयोगवैयर्थ्यं विशदमेव। तत्सार्थक्यं तु विविदिषासाधनत्वेनैव यज्ञादीनाम् ॥

तत्र ससाधानसन्नन्तप्रयोगस्थले साध्यत्वं सन्नर्थस्य वा, उत प्रकृत्यर्थधात्वर्थस्य वा। तत्र द्विविधाऽपि गतिर्वर्तते—'अश्वेन जिगमिषति,' 'असिना जिघांसति,' 'औषधेन बुभुक्षती' त्यादौ ॥

तत्राश्वस्य गमनसाधनत्वम्, असेर्हननसाधनत्वमिति सन्प्रकृत्यर्थस्यैव साध्यत्वमाद्ययोः। औषधेन बुभुक्षतीत्यत्र तु सन्नर्थस्यैव साध्यत्वम् ॥

तत्र प्रथमे द्वितीये च न सन्नर्थविवक्षा, यत्र धात्वर्थस्य साध्यस्यापि भाव्यवस्था न विवक्ष्यते, तृतीये तु भोजनप्रतिबन्धनिवृत्तीच्छापर्यन्तत्वम्, तत्र साध्यत्वं भाविन एवेति सन्निरर्थकः। अतस्तत्र लक्षणया प्रकृत्यर्थमात्रस्य विवक्षा। "विविदिषन्ती" त्यत्र तु यज्ञादीनां न साक्षात्साधनत्वमश्वादेर्गमनादाविव, किन्तु परम्परयेति संप्रतिपन्नम्। तृतीये तु साक्षात्साधनत्वं लक्ष्यार्थे व्याहतम्, इति तन्न्यायेन विविदिषार्थत्वमेव यज्ञादीनामित्यद्वैतिनां केषांचनाशयः, अन्येषां तु परम्परया ज्ञानसाधनत्वमपि यज्ञादीनामिति। तत्र द्विवि-

घोऽप्यर्थोऽद्वैतिनामविरुद्धः। वेदनस्वरूपमात्रे विप्रतिपत्तिः। तच्च जन्मान्तरानुष्ठानमात्रेण, उतेहैव जन्मन्यनुष्ठानेन वेति त्वन्यदेतत्। तत्र विविदिषासाधनत्वपक्षोऽपि न वेदनरूपफलेच्छासाधनत्वेन, किन्तु कर्मणां वेदनप्रतिबन्धकचित्तमालिन्यनिवृत्तिद्वारेत्येत्यद्वैतिनामाशयः॥

ऐतेन—विविदिषा नाम वेदनरूपफलेच्छा। न च फलेच्छां विनोपायफलेच्छा भवति। न च ता विनोपायभूतकर्मानुष्ठानं भवतीति विविदिषारूपफलविषयिणीच्छा काचित् कल्प्या, विविदिषाया अपि स्वयं फलत्वाभावात् तदिच्छापि तत्फलेच्छाऽधीना, इच्छाया इष्यमाणप्रधानत्वात्। विविदिषाया वेदनमेव फलम्। तथाच वेदनेच्छां विना विविदिषेच्छा न भवतीति तस्याः सर्वप्राग्भावित्वेन कर्मानुष्ठानं विनैव विविदिषा न भवति, इति तस्याः सर्वप्राग्भावित्वे कर्मानुष्ठानं विनैव विविदिषोत्पन्ना, इति कुतः कर्मानुष्ठानम्? अतो वेदनार्थमेव कर्मेति—परास्तम्॥

तत्र फलेच्छया साधने प्रवृत्तिः, न तु साधनेच्छापि साधनानुष्ठानानुष्ठानार्थपेक्ष्यते, यदि साधनमपि फलत्वेन न विवक्ष्येत; फलेच्छामात्रेण साधने प्रवृत्तिसंभवात्। तत्र विविदिषायाः फलत्वे तद्विषयेच्छान्तरमपेक्षितं स्यादित्यनवस्थापत्त्या नेच्छायाः फलत्वम्। एतदभिप्रायेणैवोक्तम्—"ब्रह्मजिज्ञासायाः अनधिकार्यत्वात्"—इति। तेन न्यायेनात्रापि न फलं भवितुमर्हति। अतो वेदनप्रतिबन्धकनिवृत्तिरेवात्र विविदिषापदार्थः। वेदननिर्वृत्तिस्तु तत्साधनश्रवणादिसाधनाधीना। अत एव "अथातो ब्रह्मजिज्ञासे" त्यत्रेच्छाविषयज्ञानस्यावगतिपर्यन्तनिश्चयात्मकज्ञानजनकविचारविषयैवेच्छाविषयत्वं विवक्ष्यते। तेन विचार एव साधनान्वेषणा, न तु वेदने, इति नात्र—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"ति वाक्यार्थो विचार्यते॥

तदर्थमेव हि—सर्वापेक्षाधिकरणं तृतीयाध्यायतुरीयचरणे, इत्यत्र कर्मोपयोगविचारचर्चैव नास्ति, सुतरां कर्मविचारस्य ब्रह्मविचारसाधनत्वचर्चा शमदमादिसंपत्तेरिव ज्ञानप्रकरण एव श्रुताया इव॥

उद्देश्यत्वं हि वेदनप्रतिबन्धकेच्छानिवृत्तेरपि संभवति। तत्र वेदनम्—जिज्ञासाधिकरणविषयवाक्ये "आत्मा वा अरे द्रष्टव्यः" इत्यत्र फलतयाऽभिप्रेत आत्मसाक्षात्कारः, न तु ध्यानम्, तस्य विधेयत्वेनाफलत्वात्। 'द्रष्टव्यः' इत्यस्य दर्शनसमानाकारध्रुवानुस्मृतिपरत्वे दर्शनमपि ध्यानरूपत्वाद् विधेयमेव, न फलम्। न च—फलविशेषं विना कुत्रापि विधिः। सर्वथा त्वत्र प्रकरणे सर्वशास्त्रोपसंहारन्यायेन पञ्चपादिकोक्तरीत्या नित्यानित्यवस्तुविवेकादीनामेव साधनाना निर्देशः। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"त्यत्र जिज्ञासाविषयवाक्यगतदर्शनमेवानूद्य कर्मणाम्, तद्विचारस्य वा विधाने—

"प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः"

इति न्यायविरोधः, इति तत्प्रतिबन्धकनिवृत्त्युद्देशेनानेकविधानमेव युक्तम्॥

अतः "औषधेन बुभुक्षती"त्यादाविव सन्नर्थविवक्षया विवरणमेव युक्तम्। अतो नात्र वेदनं फलम्, किन्तूक्तविधया विविदिषैव। अभ्युपगतं च परमार्थप्रकाशिकयाऽपि "औषधसेवनेन बुभुक्षती"त्यादौ भोजनप्रतिबन्धकनिवृत्तेरुद्देश्यत्वम्। न चात्र भोजनस्योद्देश्यत्वं संभवति; औषधस्य भोजनसाधनत्वाभावात्। परम्परया साधनत्वं विविदिषावाक्येऽपि समानम्। अत एवाद्वैतिनामेव केषांचन वेदनोद्देश्यत्वपक्षः। न चात्र वेदनस्योद्देश्यत्वं साक्षादित्युक्तमेव; उत्पत्तिशिष्टगुणावरोधन्यायेन नित्यानित्यवस्तुविवेकाद्यतिरिक्तस्य साक्षात्साधनत्वेनान्वयायोगात्॥

तत्र सगुणोपासनाङ्गत्वं कर्मविचारस्य न वार्यते। सगुणोपासनमपि स्वतन्त्रम्, कर्माङ्गोपासनं वा कर्मविचारमपेक्षताम्। अत एव कर्मविचारानन्तरं देवतामीमांसा॥

"अथातो ब्रह्मजिज्ञासे"त्यत्र प्रस्तुतनिर्विशेषसाक्षात्कारे कर्मणाम्, तद्विचारस्य वा पूर्ववृत्तत्वं खलु वार्यते। सगुणोपासनस्यापि ब्रह्ममीमांसायामनुषङ्गेऽपि मुख्यं प्रतिज्ञाविषयत्वं निर्विशेषजिज्ञासाया एव। तत्र च कर्मणां तद्विचार

एवोपकारकत्वम् । अत एवोक्तम्—"उद्गीथादिविचारस्तु प्रासङ्गिकः" इति । प्रासङ्गिके तत्र कर्मविचारापेक्षाऽकिंचित्करी ; निर्विशेषज्ञाने तदप्रयोजकताया एव विवक्षणात् ॥

न हि सर्वात्मनाऽप्रसङ्गोऽपि सकर्मविचारस्य सगुणोपासनस्य निर्गुणसाक्षात्कारान्तरङ्गसाधनस्य । अन्यथा का वा सङ्गतिरत्र कर्माधिकाररहितानां देवतानां ब्रह्माधिकारविचारस्य ? ॥

तत्राधीतवेदस्यानधिगतजैमिनीयकर्मविचारस्येन्द्रादेर्यदि ब्रह्मविद्याधिकारः, तदा कैव कथा धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मविचाराधिकारे ?

तत्र कर्मविचारोऽप्रधान. सगुणब्रह्मविचार एवोपयोगी, न प्रधानब्रह्मजिज्ञासायाम्, इति न स प्रधानसाधारणविचारोपयोगी, इति प्रधानविचारमात्रापेक्षितसाधनचतुष्टयसंपत्तिरेवात्राधिकारिविशेषणम् । प्रतीकोपासनानि, दहरोपासनादीनि च सर्वाणि श्रवणमात्र एवोपकारकाणि । तदानीं ब्रह्मज्ञानं तु परोक्षतया, नापरोक्षतया, इति न विरोधलेशोऽपि । सगुणोपासनादीनामप्यप्राधान्येन निर्णयस्यात्र विवक्षितत्वात् कथञ्चनोद्गीथादिविचारोऽपि नाप्रसक्त इति विवेचितम् । कथञ्चन कर्मविचारस्यापि तदीयोपयोगनिरासार्थमन्ततोऽपेक्षणात् तदानन्तर्यस्याथशब्दार्थत्वे न्याय-वैशेषिक-सांख्य-पातञ्जल-शैव-जैन-सौगतादिमतानामपि निरासात् तदानन्तर्यमप्यथशब्दार्थः स्यात् ॥

तत्र यदि साङ्गोपाङ्गवेदमधीतवतो विचारात् प्राक् वैशेषिकादिशास्त्रपरिज्ञानमपि पूर्ववृत्तमेव, तर्ह्यत्रापि तादृशं पूर्ववृत्तत्वं काममास्ताम् । परं तु तस्य ब्रह्मवेदनोपकारकत्वेनाधिकारिविशेषणत्वं तु नास्ति । न हि ब्रह्मजिज्ञासापूर्ववृत्तत्वं परम्परयाऽपि वैशेषिकादिज्ञानस्य श्रुतिचोदितम् । यदि तत्तच्छास्त्रप्रस्तावसमये तत्तच्छास्त्रार्थज्ञानम्, तर्हि कर्मविचारस्यापि तत्प्रसङ्गमात्रे तदर्थज्ञानं भवतु, किमिति तस्यापि ब्रह्मविचारपूर्ववृत्ततया ?

न चैतावता कर्मणामविरुद्धता ; अन्यथा वैशेषिकादितन्त्राणामपि न कथं विरोधः ? इति समान. पर्यनुयोगः कर्मविचारवैशेषिकादिपूर्ववृत्तत्वयोः । इदमेवाभिप्रेत्य भाषितम्—"धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः" इति । न चानधीतवेदस्यापि साधनचतुष्टयसपन्नस्यैव ब्रह्मविचारप्रसङ्ग इति पूर्वमेवोक्तम् ॥

अतः—"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इत्युक्तरीत्यैकैकमपि वेदं सृजन् भगवान् जीवराशेर्विपरीतप्रवृत्तिविघटनार्थम्—यथाकालमुपनयनम्, वेदाध्ययनम्, कर्मकाण्डार्थविचार., ततस्तदनुष्ठानम्, नित्यानित्यविवेकादौ ब्रह्मविचारः, भक्तियोग, ज्ञानयोग इत्यादिषु यथारुचि पुरुषं नियुङ्क्ते, इति वस्तुस्थितौ कथं कर्मविचारानन्तर्यमत्राथशब्दार्थः ॥

तत्र कर्मविचारस्य कर्मफलानित्यत्वनिर्णयेन वैराग्योपयोगः श्रीभाष्येऽपि प्रतिपाद्यते, इति तत्फलस्य विरागस्याधिकारिविशेषणत्वोक्तावर्थात् परम्परया वाऽवगमोऽकिंचित्करः ॥

तत्र कर्मविचारेण कर्मफलानित्यत्वं केषांचिदेव जायते, केषाञ्चन तु प्रत्यक्षानुमानाभ्यां कर्मफलानित्यत्वम् । कर्मविचारावगततदनित्यत्वबुद्ध्यधीनमेव वैराग्यमिति न नियमः । कर्मविचारेण कर्मफलनित्यत्वनिर्णयोऽपि तत्र दृश्यते ॥ "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायादि"त्युक्तरीत्या प्रत्यक्षानुमानावगततदल्पफलत्वादिना तु वैराग्यं दृढं नियमेन भवति । अतः कर्मविचारस्य कर्मफलाल्पास्थिरफलत्वनिर्णयोपयोगित्वानियमात् वैराग्यसाधनविधयाऽपि पूर्ववृत्तत्वं न नियतम् ॥

मुमुक्षायास्तूत्कटाया नित्यानित्यवस्तुविवेकादिक्रमेण साध्यत्वम्, इत्युत्कटमुमुक्षाया अधिकारिविशेषणत्व एवात्र तात्पर्यम् । तथापि मुमुक्षाया उत्कटत्वानुत्कटत्वनिर्णयो नित्यानित्यवस्तुविवेकादिसाधनत्रयस्याप्यनुवृत्तिदशायामेव, नान्यथेति मत्वा साधनचतुष्टयपूर्ववृत्ततोक्तिरिति व्यक्तमन्यत्र । न चैवं

सकृत्कर्मविचारावगतकर्माल्पास्थिरफलत्वनिर्णयः कर्मविचारस्याभ्यासेन सर्वदाऽनुवृत्तावेवेति वक्तुं शक्यम् ॥

तत्र—'अधीतसाङ्गसशिरस्कवेदस्याधिगताल्पास्थिरफलकर्मज्ञानतया संजातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी' इति श्रीभाष्यम्—कर्मणामल्पास्थिरफलकत्वनिर्णयेन मोक्षेच्छा भवति । सा च ब्रह्मजिज्ञासारूपोपायेच्छाहेतुभूता फलेच्छा, मुमुक्षाजिज्ञासयोः कार्यकारणभावस्योभयसंप्रतिपन्नत्वात्, इति वदत् मुमुक्षाया एव ब्रह्मजिज्ञासाधिकारिविशेषणत्वमद्वैतमत इवानुमन्यते । मुमुक्षाहेतुस्तु—कर्मास्थिरफलत्वनिर्णय इति वचनात् इहामुत्रार्थफलविरागः कारणमिति च प्रतिपादयति । तच्च साक्षाद्वा शमदमादिद्वारेण वेत्यनुक्तत्वेऽपि शमदमादेरपि तैरपि मुमुक्षोपयोगित्वस्वीकारात् साधनत्रयसंपत्तिरप्यत्र द्वारतया विवक्ष्यते ॥

एवं कर्मफलानामनित्यत्वस्य, ब्रह्मणो नित्यत्वस्य च वैराग्यसाधनत्वमवगम्यते, इति तन्मतेऽपि साधनचतुष्टयसपत्त्यानन्तर्यस्य हेतुत्वं न विप्रतिपन्नम् ॥

कर्मणामल्पास्थिरफलत्वं ब्रह्मजिज्ञासाया अनन्तस्थिरफलत्वं च कुतोऽवगम्यत इति विचारणीयम् । कर्मणामल्पास्थिरफलत्वावगमः किं साङ्गकर्मभागाध्ययनेनाविचारितेन, अथवा विचारितेन कर्मविचारेण, अथवा कर्मपरकर्मकाण्डांशेन विचारितेन । एवं ब्रह्मजिज्ञासाया अनन्तस्थिरफलत्वनिर्णयोऽपि किमधीतसाङ्गोपनिषद्भागेनाविचारितेन, विचारितेन वेति । तत्राद्ये प्रथमे कर्मविचारस्य पूर्ववृत्तताकथा दूरं गता, प्रथमे द्वितीये तु भाष्ये अधीतसाङ्गसशिरस्कवेदस्येत्येतावन्मात्रनिर्देशात् विचारानवगमः, तत्रापि कर्मविचारपूर्ववृत्तता बाधितैव तत्रापि साङ्गसशिरस्केति विशेषणमहिम्ना कर्मणामल्पास्थिरफलत्वमुपनिषद्भागावगम्यम्, न कर्मकाण्डावगम्यमिति विमर्शनीयम् ॥

तत्र च कर्मकाण्डे कुत्रापि कर्मफलास्थिरफलत्वं न दृश्यते, उपनिषद्भाग एव, "प्लवा ह्येते अदृढाः यज्ञरूपाः" "तद्यथेह कर्मचितो लोकः क्षीयते एव-

मेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिना कर्मकाण्डस्यास्थिरफलत्वादिकं प्रतिपाद्यते, तदप्यध्ययनमात्रेण, न तु विचारितेनेत्यवधार्यते ॥

एतेन—द्वितीयपक्षोऽपि—व्याख्यातः, उपनिषद्भागाध्ययनमात्रेण तत्रासन्देहात्, तस्याप्यविचारेऽपि ब्रह्मणोऽनन्तस्थिररूपत्वं प्राप्यस्य जिज्ञासाफलस्याधिगम्यते ॥

सति चैवं कथमनेन भाष्येण कर्मविचारस्य कर्मफलाल्पत्वादिनिर्णायकतया पूर्ववृत्तत्वमवधारयितुं शक्यते? तत्र कर्मणामल्पास्थिरत्वज्ञानं प्रतिबन्धकनिवृत्त्यधीनमिति व्याख्यया चेदमवगम्यते—कर्मणां प्रतिबन्धकनिवृत्तिद्वारैव जिज्ञासोपयोगित्वम्, न साक्षादिति ॥

सति चैवं विविदिषासाधनत्वं कर्मणां प्रतिबन्धकनिवृत्तिद्वारेति विवक्षणाद् बुभुक्षतीत्यादाविव न सन्प्रकृतिधात्वर्थसाधनतया कर्मणाम्, कर्मविचारस्य वोपयोगं विवक्षति, किन्तु पूर्वोक्तविधया विविदिषासाधनत्वमेवेति फलितम्, इति कथं कर्मविचारस्य ब्रह्मविचारपूर्ववृत्तत्व इदं भाष्यमुपष्टम्भकम्। न हि प्रतिबन्धनिवृत्तिमात्रोपयोगमात्रेण जिज्ञासासाधनत्वं कर्मणः, कर्मविचारस्य वा युज्यते। अतः कर्मावबोधानन्तर्यं नात्राथशब्दार्थः ॥

एतेन—कर्मज्ञानं विनाऽधीतसाङ्गवेदस्य मोक्षाभिलाषो न भवतीति—परास्तम्; पूर्वोक्तविधया मोक्षाभिलाषे कर्मविचारस्यासामर्थ्यात्। इदमेवाभिप्रेत्यामोदो वदति—"कर्मज्ञानाभावेऽपि मोक्षाभिलाषसंभवात् तन्मात्रमलम्—इति ॥

जिज्ञासा हि—"ब्रह्मशब्दश्रवणेन तत्तदभिमतब्रह्मस्वरूपविषयेण। सा च किं तद् ब्रह्मस्वरूपमत्र विवक्षितमिति विप्रतिपत्तिनिबन्धनसंशयनिरासार्था। तत्र "अथातो धर्मजिज्ञासे"त्यत्रावैदिकाभिमतधर्मस्वरूपमत्र विवक्षितम्, उत वैदिकधर्मस्वरूपमिति संशयनिरासः—स एवात्र धर्मो विवक्ष्यते, यो वेदाध्ययनमन्तरेण नावगन्तुं शक्यते, इत्यथशब्देन वेदाध्ययनान्तर्यविवक्षया क्रियते "स्वाध्यायोऽध्येतव्य" इति वाक्यस्यैव विषयवाक्यत्वविवक्षया ॥

एवमेव "अथातो ब्रह्मजिज्ञासे"त्यत्रापि ब्रह्मशब्दतत्समानार्थकात्मशब्द-घटितविषयवाक्यस्यैवात्र विवक्षया तत्तत्प्रकरणपठितनित्यानित्यवस्तुविवेकाद्यानन्तर्यस्यैवाथशब्दार्थत्वव्यवस्था कर्तव्या, न तु "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेने"त्यादिवाक्यस्य विषयवाक्यत्वविवक्षया, ब्रह्मात्म-शब्दयोरन्यतरस्यात्राभावात्, श्रवणादिविध्यदर्शनाच्च ॥

सति चैवमत्र वेदाध्ययनानन्तर्यं नाथशब्दार्थः, चोदनालक्षणधर्मविचाराधिकारिविशेषणस्य तस्य ब्रह्मविचाराधिकारिविशेषणत्वायोगात् ॥

नचैवमनधिगतवेदस्यापि ब्रह्मविचारापत्तिः। किमनेन साङ्गसशिरस्क-क्रमिकतत्तच्छाखाध्ययनं ब्रह्मविचारार्थमपेक्ष्यत इत्यभिप्रेतम्, उताधीतवेदान्तभागस्यैवाधिकारो विवक्ष्यते। तत्रान्त्य इष्टापत्तिः। 'स्वाध्यायोऽध्येतव्य' इति वेदाध्यनविधिर्हि वेदैकदेशाध्ययनेन व्रात्यतापरिहारमनुजानाति। अत एव—'यं यं क्रतुमधीते' इत्यंशमात्राध्ययनमपि प्रयोजनाभिधानेन प्रशंसति। नाद्योऽपि दुष्टः; अधीतसाङ्गसशिरस्कस्य साधनचतुष्टयसपत्तौ वेदान्तविचारमात्रे विनापि कर्ममीमांसां प्रवृत्तिसंभवात् ॥

धर्मजिज्ञासा ब्रह्मजिज्ञासा च न क्रमेण वेदवाक्यानि विचारयति, किन्तु तत्र तत्राक्रमेण सन्दिग्धानि वाक्यान्येव न्यायसङ्गतिमात्रमादाय। अतोऽन्तरेणाध्ययनक्रमं धर्मजिज्ञासायाः, ब्रह्मजिज्ञासायाश्च प्रवृत्तिरित्यविवादम्। तत्र यस्य यस्मिन् प्रवृत्तिः, तस्य तावन्मात्राधिकारोऽप्रत्यूहः। अत्यन्तविरक्तस्योपनीतमात्रस्याधीतसाङ्गसशिरस्कवेदस्य गुरुमुखात् धर्मतत्त्वं सामान्यतोऽवगतवतोऽधीतोपनिषद्भागमात्रस्य वा विनापि धर्मजिज्ञासां ब्रह्मजिज्ञासा नानुपपन्ना ॥

तद्यथा विशिष्टाद्वैतमते कर्मविचारः, वेदाध्ययनं चोभयं नाधिकारिविशेषणम्; अतीतत्वादध्ययनस्य, एवमद्वैतमतेऽपि वेदाध्ययनं न पञ्चममधिकारिविशेषणम्, इत्युपनीतस्याधीतवेदस्य, अधीतवेदान्तस्यैव वा तत्तज्जिज्ञासायामधिकार इत्यवचनसिद्धम् ॥

तत्र यदि धर्मजिज्ञासायां वेदाध्ययनमधिकारिविशेषणं विवक्ष्यते, अधीतसाङ्गसशिरस्कवेदस्यैव ब्रह्मजिज्ञासायामधिकारवर्णनात्, तर्हि तत्रापि वेदान्ताध्ययनमात्रं साधनचतुष्टयसंपत्तिरिवाधिकारिविशेषणं काममास्ताम् । अत एव भगवत्पादानामपि भाष्यम्—"धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्ते."—इति । अत एवानुपनीतस्य न ब्रह्मविचाराधिकारापत्तिः साधनचतुष्टयसंपन्नस्यापि । पराक्रान्तं चात्र सिद्धान्तसिद्धाञ्जने ॥

उपनिषदध्ययनमपि "स्वाध्यायोऽध्येतव्यः" इति विधिप्रयुक्तमेव । यस्य तु शिष्यस्यानुपनीतस्यापि बाल्यत एव जन्मान्तरवासनावशाद् ब्रह्मविचार एव प्रवृत्तिस्तोटकाचार्यादेरिव, तस्य तु "उप त्वा नेष्ये" इति न्यायेन सत्यकामस्येव वेदान्ताध्ययनमात्रोपयोगितयोपनयनमपि विधीयत एव । तत्र च "उपनिषदमावर्तयेदि"ति विधिर्मूलमिति व्यक्तमन्यत्र ॥

एतेन—कृत्स्नवेदाध्ययन आवश्यके तस्य कर्मविचारं विना न मुमुक्षासंभव इति—परास्तम् ; कृत्स्नवेदाध्ययनानियमात्, तन्नियमेऽप्यधीतवेदान्तभाग मात्रस्य साधनचतुष्टयसंपन्नस्य ब्रह्मचर्यादेव संन्यस्तस्य यज्ञानधिकारिणोऽपि ब्रह्मजिज्ञासायामेवाधिकारसंभवाच्च ॥

न हि विशिष्टाद्वैतमतेऽपि ब्रह्मचर्यात् संन्यासोऽशास्त्रीयः, न वा ब्रह्मचर्यावस्थायामधीतसाङ्गसशिरस्कवेदस्य विरक्तस्यापि संन्यासं जिघृक्षोः कर्मानुष्ठानोपयोगिकर्मविचारो नियतः । कर्मविचारप्रयोजनं हि कर्माधिकारिणस्तद्विशेषार्थज्ञानम् । न च तत् कर्मानधिकारिणा संन्यासिनाऽपेक्ष्यते, इत्यगत्या धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासा स्वीकर्तव्या ॥

देवतानामकृतकर्मविचाराणामन्तराऽध्ययनं सर्ववेदवाक्यानाम्, विना च जैमिनीयकर्मविचारं ब्रह्मविचारो विशद एव ॥

कथं तर्हि—उत्तरमीमांसागतानां पूर्वमीमांसान्यायानामनुसन्धानमकृतकर्मविचाराणामिति चेत्, कथं तर्हि अनधीतवैशेषिकादिनास्तिकास्तिकदर्श-

नानां ब्रह्मविचारेऽधिकारः ? यदि तत्राचार्यमुखादपेक्षिततदंशमात्रावगमः, तर्हि स न्यायोऽत्र कथं दण्डेन वार्यते ?

साधनचतुष्टयसंपत्त्यानन्तर्यमथशब्दार्थ इत्युभयसंमतम्। तत्र परम्परया कर्मविचारोऽपि यद्यप्युपयुज्यते; तथापि तस्य कर्मानुष्ठानोपयोग्यर्थज्ञानद्वारा कर्मानुष्ठान एव साक्षादुपयोगस्तदर्थज्ञानेतिकर्तव्यतया, कर्मणा तु जन्मान्तरीयेणापि जिज्ञासाप्रतिबन्धकनिवृत्तिद्वारा तदुपयोगसंभवाद् न तदानन्तर्यमथशब्दार्थः। न तु तथा नित्यानित्यवस्तुविवेकस्यापि परम्परयोपयोगः, येन मुमुक्षयैव निर्वाहात् तदानन्तर्यमेवाथशब्दार्थः स्यात्। व्यक्तं चैतदधस्तात्॥

यथाच क्रमेणैव वेदवाक्यानां कर्मविचारे, ब्रह्मविचारे वा न विचारः, तथोक्तं पूर्वमेव, इति कर्मकाण्डोपनिषत्क्रमेण विचारस्य न नैयत्यम्। तत्र त्रिवर्गप्रवणानां स्वसाध्यकर्मविचारे प्रवृत्तिरावश्यिका, मुमुक्षूणां तु न तद-पेक्षेति तु निष्कर्षः॥

कर्मणामल्पास्थिरफलत्वं प्रत्यक्षानुमानाभ्यामेवावगम्यते, न तु कर्मवि-चारेण, तत्रापि न जैमिनीयेन। तत्र कर्मफलमात्रानित्यत्वनिश्चयवतां सगुणब्रह्म-प्राप्त्युपायसगुणोपासने, भक्तौ च प्रवृत्तिर्युक्ता। अत एव कर्मविचारानन्तरं देवतामीमांसा। तस्याप्यनित्यत्वनिर्णयवतां तु साधनचतुष्टयसंपत्तौ निर्विशेष-ब्रह्मज्ञानार्थत्वमिति मुक्तिसोपानः॥

प्रमाणजन्याखण्डाकारसाक्षात्कारनिर्वर्त्या हि मुक्तिः। द्रष्टव्यपदेन हि मुख्यया वृत्त्या साक्षात्कार एव बोध्यते। शुक्तिरजतादिस्थले हि तदुपादानस्य तस्य च साक्षात्कारमात्रनिवर्त्यत्वमेव दृष्टम्, न तूपासनादिना निवर्त्यत्वम्। न हि गुरुडोपासनादिनापि रज्जुसर्पनिवृत्तिः॥

द्रष्टव्य इति दर्शनसमानाकारं ध्यानमेव विवक्ष्यते, तत्साध्य एव मोक्ष इति तु न युक्तम्। तत्र साक्षात्कारे यद्यपि विधिर्न भवति; तथापि तत्साधन-तया श्रवणादिविधिर्न बाधितः। न हि पदार्थज्ञानं विध्यपेक्षम्। अद्वितीय-

ब्रह्मणि तात्पर्यनिर्णयानुकूलन्यायविचारे तु विधिर्भवत्येव । वाक्यस्यापि साक्षात्कारजनकत्वं विषयस्य प्रत्यक्षत्वयोग्यतायां तत्प्रयोजकसत्त्वे च न विहन्यते॥

प्रत्यक्षत्वं हि नेन्द्रियजन्यज्ञानत्वम्, किंतु विषयावच्छिन्नचैतन्याभिन्न-वृत्त्यवच्छिन्नचैतन्यत्वानावृतचिद्रूपान्यतररूपत्वं शब्दजन्याखण्डाकारवृत्त्युपहिता-नावृतचिद्रूपे ब्रह्मणि वर्तत एव ॥

तत्र वृत्तेरज्ञाननिवृत्तिमात्रे व्यापारः, न तु चिदुपरागार्थत्वे, अभेदाभि-व्यक्त्यर्थत्वे वा घटादिस्थल इव ॥

ब्रह्मज्ञानमात्रप्रत्यक्षत्वमेवंरूपम् । न चेदं घटादिज्ञानसाधारणम्; घटावच्छिन्नचैतन्यस्य तत्प्रत्यक्षतादशायामनावृतचिन्मात्रत्वाभावात् । अतो घटादिप्रत्यक्षे नाव्याप्तिः । तत्र मनन तु श्रवणाङ्गतयैवाद्वितीयब्रह्मसाक्षात्कार-साधनमिति नानुमानजन्यनिर्विशेषज्ञानमनावृतचिद्विषयम् । एवं श्रवणमपि न साक्षात् स्वत एवापरोक्षसाधनम्, इति सकृत् श्रवणमात्रेण न साक्षात्कारापत्तिः ॥

व्यक्तं चैतत् समन्वयसूत्रभाष्ये—श्रवणप्रतिष्ठापनार्थत्वात् मननादेर्न तद्वैय-र्थ्यमिति निरूपणावसरे। घटादिविलक्षणत्वाद् ब्रह्मणो न तत्र ज्ञानप्रत्य-क्षातिरिक्तं विषयप्रत्यक्षत्वम् । वृत्त्युपहितमपि चैतन्यं तत्र वृत्तेरभानात् चैतन्यां-शेऽनावृतचिद्रूपत्वेनैव प्रमाणजन्यं प्रत्यक्षम् । यत्र श्रवणमात्रेणापरोक्षसाक्षात्कारो जन्मान्तरे कृतमननादेरनुद्बुद्धरूपेणानुवर्तमानब्रह्मसाक्षात्कारस्य, परं तु तत्र मननादिकमपेक्षितम् ॥

"दशमस्त्वमसी"त्यत्रापि मनननिदिध्यासनसहकृतश्रवणेनैव दशमत्व-साक्षात्कारः; श्रवणानन्तरं स्वयमपि विचार्यैव दशमत्वसाक्षात्कारस्यानुभवात् । कस्यचन विना मनननिदिध्यासने साक्षात्कारानुभवस्तु न विरुध्यते पटुतम-प्राक्तनसंस्कारोद्बोधे यद्यासवचनादपि संशयविपर्ययौ निवर्तेते ॥

अनाद्यसंभावना, विपरीतवासना वा श्रवणमात्रेण निवर्तते । निवृत्तभेद-वासनानां तु श्रवणमात्रेण साक्षात्कारो न दोषाय। ब्रह्मणि सन्निहितेऽपि सतीष

च भेदवासनासु प्रत्यगभिन्नसंविन्मात्रमसंनिहितमिव । अतो न श्रवणमात्रेण प्रत्यक्षम् । भेदवासनासु मननेन निवृत्तासु हि स्वरूपेण संनिधानम्, साक्षात्कारश्च, मननेन वा भेदवासनानिवृत्तौ साक्षात्कारो न दोषाय ॥

प्रत्यक्षप्रमाकरणं शब्दः, अनुमानम्, प्रत्यक्षम्, अनुपलब्धिर्वा—यदि तत्रत्यं ज्ञानं प्रत्यक्षप्रमैव, निदिध्यासनसंस्कारसचिवेन मनसाऽपि ब्रह्मसाक्षात्कारो भामत्या स्वीक्रियते। तत्र निदिध्यासनमेव प्रधानम्, अथवा श्रवणमिति त्वन्यदेतत्। असंभावितविपरीतभावनानां निवृत्त्या श्रवणादीनामपि नाद्वैतमतेऽपि वैयर्थ्यम् । तत्र भक्तिर्ध्यानमित्यनर्थान्तरम् । तत्तु साक्षात्कारद्वारा मुक्तिसाधनम्, न तु साक्षात् ॥

तत्रापातप्रतीतिमनोऽभिगतगुरोरपि विना श्रवणं न ब्रह्मसाक्षात्कारो भवति, स्वयं तदर्थमनननिदिध्यासने विना। अत एव द्वात्रिंशद्वत्सरपर्यन्तगुरुकुलवासिनोरपीन्द्रप्ररोचनयोरुपदेशेनैवात्मस्वरूपानवगमः । कृतश्रवणस्यापि विरोचनस्य विपरीतभावनयाऽन्यथैवोपदिष्टार्थावगमः । अत एव मनननिदिध्यासने इन्द्रस्योपपद्येते ॥

न च प्रथमोपदिष्टादर्थादर्थान्तरोपदेश इन्द्रं प्रति प्रजापतेर्द्वितीयादिपर्यायेषु। अत एव हि—"एतं त्वेव ते पुनर्व्याख्यास्यामी"ति प्रतिपर्यायमावृत्तिः॥

तत्र श्रवणमङ्गि, मनननिदिध्यासने अङ्गे इति कल्पे नान्तिमविधानेन पूर्वस्य प्राप्तिः ; उत्तराङ्गविधानेन प्रधानप्राप्तेर्विध्यपेक्षायाः कुत्राप्यदर्शनात् । अयमेव न्यायो निदिध्यासनप्राधान्यपक्षेऽपि , प्रधानविधिमात्रेणाङ्गानुष्ठानस्याप्राप्तेः । त्रीण्यपि समप्रधानानीति पक्षेऽप्ययमेव न्यायः॥

तत्रापरोक्षज्ञानादेव वाक्यजन्यादविद्याया निवृत्तिः, न तु परोक्षज्ञानेन। व्यक्तं चैतत्—"पश्वादिभ्यश्चाविशेषादि"त्यत्र भाष्ये। विदुषामपि जीवन्मुक्तानां बाधितानुवृत्त्या सर्वव्यवहारोपपत्तिराऽऽप्रारब्धभोगावसानम् । ततस्तावत्पर्यन्तमभ्यस्यमानेन साक्षात्कारेण विदेहकैवल्यमिति व्यक्तमन्यत्र। "ज्ञानाग्निः सर्व-

कर्माणि" इत्यत्र प्रारब्धव्यतिरिक्तानीति विवरणं संप्रतिपन्नम्। तत्र कथं न प्रारब्धकर्मणोऽपि न नाशः? अयमेव न्यायोऽत्रापि ॥

अन्ते भेदवासनानां स्वतो निवृत्तिर्नाम—तदर्थं तन्निवर्तकसाक्षात्कारेणाभ्यस्यमानेन बाध एव। व्यक्तं चैतदन्यत्र ॥

जीवन्मुक्तावनुवर्तमाना भेदवासनास्तु प्रारब्धभोगमात्रोपयोगिन्य एव, नानन्ताः। अनन्ता अपि प्रारब्धभोगान्ते न सन्त्येव। यदि चिरं तदनुवृत्तिः, काममनुवर्तन्ताम्। तावत्पर्यन्तं व्यवहारा अप्यनुवर्तन्त एव ॥

न चात्र कालनियमः; "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति शरीरपाताकालावधिं श्रुतिरेव नियच्छति। प्रारब्धफलातिरिक्तानां सर्वेषामेकाज्ञानमूलकत्वेऽपि तत्त्वज्ञानेन जीवन्मुक्तिपरप्रमाणानामनुसारेण चाज्ञानेन साकं नाशेऽपि संस्कारात्मनाऽवस्थानं दग्धपटन्यायेनाभासमात्रतया न विरुद्ध्यते ॥

रज्जुतत्त्वज्ञाने सति रज्ज्ववच्छिन्नचैतन्याश्रिततूलाज्ञानानां तत्कार्याणामिव सर्पभूदळनजलधाराणां भिन्नत्वाद् न सकृदेव सर्वाज्ञानानां तत्कार्याणां च निवृत्तिः; सर्वेषामेकाज्ञानाकार्यत्वात्, इति क्रमिकस्तत्त्वज्ञानेनाज्ञानतत्कार्यविनाशो दृष्टचरः, इति प्रारब्धफलनाशनक्षमपटुतमसंस्काराभावेन तावन्मात्रानुवृत्तिः, अनन्तरं तन्नाशश्च न विरुध्यते ॥

तत्र यथा गाढान्धकारे प्रदीपज्वालाविकासवृद्धिक्रममनुसृत्य क्रमेणान्धकारस्य नाशः, न तु सद्य एव सर्वान्धकारविनाशः, तद्वत्प्रकृतेऽपि साक्षात्कारसंस्कारपाटववृद्धिक्रमेणाज्ञानप्रारब्धादिनाशः। तत्र यथा दीपज्वालोत्पत्तिकाल एव न गाढान्धकारनिवृत्तिक्षमप्रभाविकासः, तथैवात्रापीति न कोऽपि दोषः ॥

अत्र तत्त्वज्ञाननिवर्त्या अनिर्वचनीया भावरूपा चाविद्या, विपरीतभ्रमो वा, न तु ज्ञानप्रागभावः; शुक्तिरजतज्ञानानिवर्त्यत्वात् रूप्याज्ञानस्य। न हि रूप्यज्ञाननिवर्त्यं रूप्याज्ञानम्; शुक्तिज्ञाननिवर्त्यत्वाद् रूप्याज्ञानस्य। विपरीत-

भ्रमस्याविद्यात्वं तु न दुष्टम् । न ह्युत्तरज्ञाननाश्यत्वमेव पूर्वज्ञानस्य; कतिपयक्षणावस्थायिनः स्वप्नान्ते समुत्पन्नस्य विनापि ज्ञानान्तरोत्पत्तिं नाशदर्शनात् ॥

अत एव योगिनां सर्वचित्तवृत्तिनिरोधः स्वप्रयत्नसाध्य उपपद्यते । तत्र निरोधोऽपि यदि वृत्तिविशेषः, तर्हि योगत्वमेव भग्नम् । विपरीतभ्रमस्य तत्त्वज्ञाननिवर्त्यत्वं कारणात्मनाऽप्यभावः, न चोत्तरज्ञानप्रयुक्तः स कथमपि ॥

यत्र प्राथमिकेन साक्षात्कारेणाज्ञानस्यापि निवृत्तिः, तत्र मनननिदिध्यासने नापेक्ष्येते । यत्र तु भेदवासनानामनन्तत्वात् पटुतमसंस्कारसहितसाक्षात्कारेणैव निवृत्तिः, तत्र न प्रथमज्ञानेनैव भ्रमस्य निवृत्तिः । यथा रथ्यायां रज्जुं सर्पादिरूपेणावगत्य ज्वराक्रान्तः पित्रादिना रज्जुरेवेति बोधितोऽपि परोक्षज्ञाने यावत्स्वापरोक्षसाक्षात्कारं न विमुक्तज्वरो भवतीत्यनुभवसिद्धम्, इति न 'रज्जुरि'ति प्रथमज्ञानमात्रेण सर्पभ्रमनिवृत्तिः, किं बहुना? अपरोक्षसाक्षात्कारेणापि प्रथमेन न सर्पभ्रमनिवृत्तिः ॥

यथा स्वपित्रा यस्मिन् देशे भ्रमः संजातः, तत्र रज्जुरियमिति बोधनेऽप्यसंभावनया, विपरीतभावनया च सत्यप्यपरोक्षसाक्षात्कारे नेयं मया दृष्टसर्पाधिष्ठानरज्जुः, किन्तु रज्ज्वन्तरमेवेति मत्वा न विगतभ्रमो भवति, एवं वेदान्तबोधितेऽप्यर्थेऽन्यथा ग्रहणेन जातमपि प्राथमिकं साक्षात्कारमन्यथैव मत्वा न विमुक्तबन्धो भवति ॥

अतः प्राथमिकेन श्रवणेन जातोऽपि साक्षात्कारोऽसंभावनाविपरीतभावनादिदोषसध्रीचीनो नाज्ञाननिवृत्तिक्षमः; अपरोक्षभ्रमस्यापरोक्षप्रमामात्रनिवर्त्यत्वात्, "एकश्चन्द्रः" इति परोक्षप्रमायां सत्यामपि द्विचन्द्रप्रत्यक्षस्यानुभवात् । तत्र द्विचन्द्रप्रत्यक्षस्यैकश्चन्द्र इति प्रत्यक्षेणैव बाधः । तत्रैकश्चन्द्र इति प्रत्यक्षे दोषः प्रतिबन्धकः, तस्मिन्निवृत्ते तु एकश्चन्द्र इति प्रत्यक्षं जायते, ततो द्विचन्द्रप्रत्यक्षभ्रमनिवृत्तिरिति व्यवस्था ॥

यत्तु—दोषे नष्टे द्विचन्द्रभ्रमानुत्पादमात्रम्, नैकश्चन्द्र इति तत्र प्रत्यक्षज्ञानमपि—इति,

तत्र कथमुत्पन्नस्य द्विचन्द्रभ्रमस्यानुत्पादवादः? यः खलु द्विचन्द्रभ्रम-प्रत्यक्षस्य कारणं तिमिरादिदोषः, स एव चन्द्रैकत्वप्रत्यक्षमपि प्रतिबध्नाति। तदानीमाप्तवाक्येनैकश्चन्द्र इति बोधनेऽपि परोक्षतयैव तिमिरादिदोषदूषितोऽनुभवति। दोषनिवृत्तौ तु चन्द्रैकत्वमपरोक्षयति। तेन च भ्रमस्योत्पन्नस्य बाध एव, न त्वनुत्पादः॥

चन्द्रैकत्वप्रत्यक्षप्रतिबन्धके हि दोषे निवृत्ते चन्द्रैकत्वप्रत्यक्षमेव भवति। तेन च द्विचन्द्रप्रत्यक्षभ्रमो निवर्तते, न तु नोत्पद्यते; उत्पन्नत्वात्। तत्र यथा दोषस्यात्यन्तिकनिरासपर्यन्तं चन्द्रद्वित्वभ्रमोऽनुवर्तते, न तु दोषस्यांशतो निवृत्तिमात्रेण, एवमत्राप्यात्मसाक्षात्कारेण पटुतमसंस्कारादिसध्रीचीनेनैवाज्ञाननिवृत्तिः, न तु ततः प्राक्, इति प्राथमिकेन श्रवणेनाज्ञानानिवृत्तिर्न दोषः। न हि तिमिरमपि सकृदौषधलेपादिनैव नश्यति। तत्र यथा द्वित्रादिनौषधसेवनेन किंचित्तिमिरापनयेऽपि चक्षुष्मानिति न व्यवहारः, एवमत्रापि यावत्प्रारब्धेतर-सर्वनिवृत्ति न जीवन्मुक्तपदेन व्यपदेशः॥

वस्तुतस्तु—योगवासिष्ठोक्तासु जीवन्मुक्तस्य सप्तसु भूमिकासु द्वितीय-भूमिकायां विद्यमानोऽपि जीवन्मुक्त एव। श्रवणमननाद्यवस्थावान् प्रपञ्चं सर्वमपि सत्यं मत्वा व्यवहरन्नपि जीवन्मुक्त एव। अस्य प्राथमिकं भूमिकात्रयं हि जाग्रदवस्था नामेत्यादि योगवासिष्ठे व्यक्तम्॥

न हि परोक्षज्ञानं प्रत्यक्षज्ञानेऽप्रामाण्यनिश्चयायालम्, किन्तु तच्छङ्का-मात्रमादधाति। यत्र पीतश्शंख इति सोपाधिकोऽपरोक्षभ्रमः, तत्र चान्यथाख्याति-रेव, नानिर्वचनीयख्यातिः; पीतत्वस्य तत्र सन्निकर्षात्। तत्र चोपाधिरेव दोषः, इति तत्र सत्यपि भेदग्रहे भ्रमः स्वीक्रियते, इति श्वेतः शंख इति श्वेतत्वप्रत्यक्ष-दशायामेव पीतत्वभ्रमात् 'श्वेतं शंखमानये'त्युक्ते श्वेतशंखानयनं न विरुद्धम्॥

न चायं न्यायः प्राथमिकश्रवणजनितसाक्षात्कारेऽपि; आत्मन्यन्तःकरणाद्य-ध्यासस्य तन्निबन्धनभेदव्यवहाराणां च निरुपाधिकाध्यासनिबन्धनत्वात्। न चात्र

प्राथमिकश्रवणमात्रेणानाद्यविद्यानिवर्तनक्षमः साक्षात्कारो भवति, येनाविद्यानिवृत्तिः संपद्येत। दोषनिबन्धनाध्यासो हि सर्वात्मना दोषनिवृत्तावेव निवर्तते, यथा तिमिरादिनिबन्धनाध्यासः॥

अयमेव न्यायः शुक्तिरजतादिस्थलेऽपि। तत्र शुक्त्यवच्छिन्नचैतन्याश्रितप्रमातृचैतन्यनिष्ठतूलाविद्या रजतरूपेण, तदाकारवृत्तिरूपेण च परिणमते। तत्रापि नेदं रजतमिति परोक्षज्ञानेन न रजतं बाध्यते, किंत्वपरोक्षज्ञानेनैव।

यद्यपि यावद्बाधं रजतभ्रमः, रजतं च परोक्षज्ञानेन, ज्ञानान्तरेण वा यावत्काचादिनिवृत्ति तूलाविद्यात्मना वर्तते, तथापि रजतान्तरभ्रमे तस्यैव रजतस्य तस्यैव च भ्रमस्यापरोक्षस्य न भानम्॥

तत्रोत्तरज्ञानेनैव रजतज्ञानं यद्यपि नष्टम्, तथापि रजतं न निवृत्तं घटादिस्थल इव। इयान् विशेषः—व्यावहारिकघटादेर्दण्डादिना नाशः, प्रातिभासिकस्य तु सकारणस्यापरोक्षज्ञानेन नाशः। तत्र भ्रमान्तरे तूलाज्ञानान्तरम्, तत्परिणामो रजतं तदाकारवृत्तिश्च भिन्नानि॥

परमार्थप्रकाशिका पृच्छति—भ्रमान्तरेऽपि पूर्वोत्पन्नं रजतमेव परोक्षेऽपि रजताभावज्ञाने तत्र विद्यमानं कुतो नावभासते? किमर्थं रजतान्तरोत्पत्तिः स्वीकर्तव्या?—इति।

तत्रेदमनुयुज्यते—भ्रमान्तरे पूर्वोत्पन्नं रजतं भासतामिति पर्यनुयोक्त्रा भ्रमान्तरं ज्ञानमुत्पद्यत इति स्वीक्रियते वा, न वा? आद्ये तदविद्यापरिणामो वा, उतान्तःकरणपरिणामः। अविद्यापरिणामत्वे का वाऽविद्या तदात्मना परिणमते? पूर्वोत्पन्नरजततदाकारवृत्त्यात्मना परिणतैवाविद्योक्तभ्रमात्मनाऽपि यदि परिणमते, तर्हि सा प्रमातृचैतन्यनिष्ठा तूलाविद्या तद्रजतसत्तायां न रजतान्तरोत्पादनक्षमा, तदात्मना तु कालान्तरे परिणता, न पुनरपि तदात्मना तदाकारवृत्त्यात्मना च परिणमितुं शक्नोति॥

न हि घटसत्तादशायां घटान्तरात्मना मृत् परिणममाना दृष्टचरी। परोक्षज्ञानेन रजतभ्रमनिवृत्तौ हि तदुपादानाविद्या प्रमातृचैतन्यमेवाश्रिता, दोषसत्ता-

यामपि न शुक्त्यवच्छिन्नचैतन्याश्रिता भवति; अन्यथा शुक्तिप्रमादशायामपि प्रातिभासिकरजतप्रत्यक्षापत्तिः । तदाकारवृत्त्यभावाद्यदि न प्रत्यक्षम्, तर्हि भ्रमान्तरेऽपि प्राचीनाविद्यायास्तत्र प्राचीनरजतात्मना तदाकारवृत्त्यात्मना च परिणामायोगाद् न पूर्वोत्पन्नस्य भानसंभवः ; अन्यथा घटध्वंसानन्तरं मृदात्मतां गतस्य तस्यैव घटस्य पुनरुत्पत्तिरापद्यते ॥

परिणामिकारणं हि सकृद्यदात्मना भवति, तन्नाशानन्तरं स्वरूपेणैव कारणात्मना वर्तमानमपि न पुनस्तदात्मनैव परिणमते, किन्तु कार्यान्तरात्मनैव पूर्वोत्पन्नकार्यसदृशस्यैवोत्पादेऽपि । प्रागभावोऽपि तत्तदुत्पत्तिं प्रति कारणमेव । तत्प्रागभावस्तु तदुत्पत्तिमात्रेण नष्टः, तस्यैव पुनरपि कारणं न भवति। न हि तत्र स एवायं घट इति प्रत्यभिज्ञा ; अन्यथा कस्यापि कार्यस्य नाशे पुनस्तद्प्राप्ति-संभावनाभावेन दुःखमेव न स्यात् । न हि बाल्यनाशे प्राप्यमाणं यौवनम्, यौवननाशे प्राप्यमाणं वार्धकं वा तदेव बाल्यम्, तदेव यौवनमिति प्रत्यभिज्ञायते । तेनैव न्यायेन परोक्षज्ञानेन रजताकारनिवृत्तावपि तत्प्रागभावरूपकारणाभावात् तदुपादानाज्ञानाभावाद्वा पूर्वोत्पन्नरजतज्ञानमेव नोत्पन्नं भवितुमर्हति, इति शुक्तितत्त्वस्याऽऽब्रह्मसाक्षात्कारमेकत्वेऽपि तद्विषयतूलाज्ञानस्य तत्तद्रजतपरिणामिकारणस्य च भेदात् तत्तदज्ञाननाशकत्वमेव स्वीकर्तव्यम्, न तु सर्वाज्ञाननाशकत्वम्; अन्यथैकस्यां रज्जौ कालभेदेन संजातसर्पभूतळनादीनामेकेनैव रज्जुज्ञानेन विनाशापत्तिः ; शब्दबुद्धिकर्मणां विरम्य व्यापारायोगेनैकेन तत्त्वज्ञानेनैकस्यैवाज्ञानस्य निवृत्तेः, तथैवानुभवात् ॥

एकेनैव तत्त्वज्ञानेन सर्वेषां भ्रमाणां निवृत्त्यनुभवस्तु धारावाहिकभिन्नभिन्नतत्त्वज्ञानेष्वेकत्वभ्रमेण, तदेकत्वे तु पुनरपि ज्ञानान्तरेणैव निवृत्तिः । न चैवं व्यावहारिके भ्रमेऽज्ञानभेदः, किंत्वेकमेवाज्ञानम्, पूर्वपूर्वाहमध्यासनिबन्धन उत्तरोत्तराहमध्यास इति तु सृष्टिकालाभिप्रायम् ; तत्र तत्तदुपादानाज्ञानस्यानाशात्, सोऽयमिति प्रत्यभिज्ञानाच्च नाहमध्यासान्तरोत्पादः। न च शुक्तिरजतस्थल एकस्यैवाज्ञानस्य सर्वप्रातिभासिकरजतोत्पादकत्वम् ॥

नन्विदं सर्वं विपरीतभ्रमोऽविद्येति पक्षे कथमुपपद्यते ? तत्तद्विपरीतभ्रमनाशे तस्य तस्य स्वरूपतो नाशादहमादीनां स्वरूपतोऽनुवृत्तिरेव कथमिति, सत्यम्, कार्यभ्रमस्याप्यौपचारिकं भ्रमत्वव्यवहारमूरीकृत्येदमुक्तम् ॥

तस्यापि भावरूपाज्ञानपक्ष एव तु पर्यवसानम्। तत्र ज्ञानप्रागभावस्य विपरीतभ्रमस्य च बाध्यत्वं न लोकसिद्धम्, किन्तु निवृत्तिमात्रम्। तदुपादानभावरूपाज्ञानस्यापि नाशे तु त्रैकालिकबाध्यत्वे पर्यवसानमात्रम्। अत एव पुना रजतोत्पाद एव स्वीक्रियते प्रातिभासिकस्थले। व्यावहारिकस्थले तु तदुपादानाज्ञाननाशे न संभावनापि, कालान्तरे वा सत्वं तस्येति ॥

अत एवाद्वितीयत्वं ब्रह्मणः। तत्र वस्तुनो ज्ञाननिवर्त्यत्वं तु प्रातिभासिकस्थले वर्तत एव। अतोऽज्ञानमात्रस्य नाशो न परोक्षज्ञानेन ॥

अनिर्वचनीयवस्तूत्पत्तेरप्रामाणिकत्वोक्तिस्त्वेतावत्पर्यन्तं तदुपगम्य प्रवृत्तविचारस्य त्यागात् प्रतिज्ञाहानिपराहता, शाखा चंक्रमणं वा ॥

न केवलं कार्याणाम्, किंत्वज्ञानस्यापि भावरूपत्वमनिर्वचनीयत्वमन्यच्च सर्वं यथावसरं निरूपयिष्यते, तस्यैव प्रत्यक्षादिविषयत्वं च ॥

यद्यप्यद्वैतमतासिद्धं प्रत्यक्षलक्षणं प्राथमिकज्ञानेऽपि वर्तते ; तथापि पटुतरसंस्काराभावात् विपरीतभावनादिप्रतिबन्धाच्च न तत् कार्यक्षमम्, भेदवासनानां त्वभेदानुसन्धानपरम्परारूपेण निदिध्यासनेन निवृत्तौ त्वपरोक्षकल्पमिव भासमानं प्राथमिकज्ञानं निर्विचिकित्सं कार्यक्षमं प्रत्यक्षरूपं भवति ॥

अत एव प्रथमज्ञानेन नाविद्यानिवृत्तिः। अप्रामाण्यज्ञानानास्कन्दितपटुतमसंस्कारादिसाहित्ये त्वपरोक्षज्ञानस्य सा निवर्तते। प्रथमज्ञानेनापि मात्रयाऽज्ञाननिवृत्तिर्भवत्येव, यथा प्रभाविकासतारतम्येनान्धकारमन्दीभावः, क्रमेण सर्वात्मना तन्निवृत्तिस्तथेति मन्तव्यम्। प्राथमिकसाक्षात्कारोऽपि प्रारब्धभोगान्त एव भवतीति स्वीकार एव वरम्, इति तु पक्षान्तरम्। तथापि निर्विचिकित्सापरोक्षकल्पपरोक्षज्ञानमात्रेण मिथ्यात्वनिश्चयेन निर्बन्धा अपि

बद्धवदेव व्यवहरन्त्यनासक्त्येति तु तत्पक्षः। सर्वात्मना प्रारब्धेतरबन्धतो मुक्ता इत्यभिप्रेत्य जीवन्मुक्तिपक्षः। फलतस्तु नात्र भेदः॥

तत्र प्रष्टव्यम्—"तस्मिन् दृष्टे परावरे" इत्यादौ दृशिधातोः श्रवणाद-ज्ञाननिवर्तकं ज्ञानं साक्षात्कार एव, न तु ध्रुवानुस्मृतिपदवाच्यदर्शनसमानाकार-स्मृतिसन्तानः; तस्य दर्शनपदार्थत्वाभावात्, इति निदिध्यासनमननसहकृतं श्रवणं साक्षात्कारमेव जनयति, न तु दर्शनसमानाकारस्मृतिसन्तानम्; स्मृति-सन्तानस्य प्रमात्वाभावात्, दर्शनसमानाकारत्वाभावाच्च।

यदि "वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम्"

इत्यसन्निहितस्य श्रीरामस्य दर्शनं न साक्षाद्दर्शनम्, तर्हि परमात्मनोऽपि कथं साक्षाद्दर्शनम्? न चात्र दर्शनसमानाकारत्वं कविहृदयङ्गमम्। भावना-प्रचयसहकृतं हि मनः साक्षात्कारं जनयतीति लोकानुभवसिद्धम्॥

"स्मृतिप्रतिलम्भे मोक्षः" इति तु दर्शनसमानाकारस्मृतिप्रतिलम्भः। सैव साक्षात्काररूपा न पर्यवस्यतीत्यभिप्रायम्, येन "तस्मिन् दृष्टे परावरे" इत्यनेनैक-वाक्यता। दर्शनसमानाकारत्वे तु दर्शनव्यपदेशो गौणी कल्पना, मुख्यार्थत्या-गश्च। अतो ध्यानमेवात्र, न साक्षात्कारः॥

यदि ध्यानमात्रेणाभ्यस्यमानेन परमात्मसाक्षात्कारसमानाकारतामापन्नेन मोक्षः, तर्हि तेनैवाभ्यस्यमानेन निर्विशेषस्वरूपसाक्षात्काररूपमेव कुतो नेष्यते? भावनाप्रचयेन च व्यापकपरमात्मस्वरूपसाक्षात्कारो न कुतः?

अत्र ध्यानं दर्शनसमानाकारस्मृतिरिति चानर्थान्तरं भवन्मते। अत एव द्रष्टव्य इत्यनुवाद इत्यूरीक्रियते। तत्र ध्यानं यदि स्मृतिः, तर्हि कथं सा प्रत्यक्षा-नुभवः? न हि स्मृतिरनुभवो नाम। अद्वैतमते शब्देन साक्षात्कारो जन्यत इति स्वीक्रियते। तस्यानुभवत्वे न विप्रतिपत्तिः। शाब्दापरोक्षमपि लोक-सिद्धमेव। ध्यानमेवाङ्गि, न श्रवणमिति मते ध्यानस्य साक्षात्कारजनकत्वमपि संप्रतिपन्नमेव, दर्शनसमानाकारता यदि परित्यज्यते। दर्शनस्येन्द्रियसन्निकर्ष-

जन्यत्वं धर्मभूतज्ञानेनापरोक्षसाक्षात्कारे, भक्त्या परमात्मसाक्षात्कारे च व्यभिचरति परमते, अद्वैतमतेऽपि मनोऽनिन्द्रियत्वमते सुखादिप्रत्यक्षे ईश्वरज्ञाने च॥

विप्रकृष्टस्थले भावनातिशयेन कामिन्यादिसाक्षात्कारो यदि न प्रमा, तर्हि ब्रह्मणि परं कथं सा प्रमा ? यदि भगवान् सर्वत्र सन्निहितः, तर्हि कथं प्रथमेन ज्ञानेनैव न तस्य साक्षात्कारः, इति कुतो न परमतेऽपि—"आवृत्तिरसकृदुपदेशात्" "आप्रायणादि" त्यादिवैयर्थ्यम् ॥

'स्मृतिप्रतिलम्भे मोक्षः' इत्यत्र स्मृतिपदं ध्यानपर्यायमिति संप्रतिपन्नम्। तच्च न मुख्यं दर्शनम्, किन्तूपचारात। तदपेक्षया तु दर्शनत्वमेव वरम्। न चैवं सत्यदृष्टकल्पना। न च दर्शनवत् भानमेव, "वृक्षे वृक्षे च पश्यामी"त्यादावविद्याकृतत्ववादो वा ॥

"अविद्यावैदेही न लिपिकराणाम्" इत्यत्राविद्यावैदेहीत्वं च कवीनां चमत्कारमात्रम्। न हि भ्रमत्वमस्य युक्तम्। भ्रमत्वेऽपि दर्शनत्वं न हीयते, इति नात्र दर्शनसमानाकारत्वे किमपि प्रमाणम्।

भगवद्ध्यानादौ ध्यानप्रीतेनानुग्रहबुद्ध्या स्वेच्छया पारमार्थिकविग्रहपरिग्रहेणाविर्भूय साक्षात्कारप्रदानं नाद्वैतिनोऽनुमन्यन्ते। परमार्थतोऽविद्यमानेऽपि व्यावहारिकोपास्योपासनमात्रेण फलसिद्धिर्बहुशो दृश्यते। न चोपास्यसत्यतायां किमपि प्रमाणम्। समन्वयः पुरुषार्थत्वेनान्वयो न सगुणस्य ब्रह्मणः। यत्तु निर्विशेषचिन्मात्रस्य नित्यप्राप्तस्याप्यप्राप्तत्वेन ज्ञायमानस्य प्राप्तिश्रवणम्, तदप्राप्तत्वभ्रमनिरासमात्रेणेति ह्यद्वैतमतम्, इत्यद्वैतमते ध्यानस्य दृष्टविधयैवोपयोगः, न त्वदृष्टविधया। अनुग्रहसाध्यः साक्षात्कार इति पक्ष एव ह्यदृष्टकल्पना। कर्मणामदृष्टविधया फलोपकारकत्वमपि भगवदनुग्रहस्यैवादृष्टरूपत्वमङ्गीकृत्योपपद्यते। अत एव सूत्रम्—"फलमत उपपत्तेः" "पुरुषार्थोऽतः शब्दादिति बादरायणः" इति च।

"नायमात्मा प्रवचनेन लभ्यो न मेधया बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामि''ति श्रुतौ निर्विशेषस्य ब्रह्मणो वरण तदात्मना प्रकाशः। तनूश्च स्वरूपमेव। शरीरपदस्य स्वरूपपरत्वं पञ्चावयवमधिकरणशरीरमित्यादौ बहुशो दृष्टम्, कोशानुमोदितं च। लभ्यत्वं च व्रियमाणतैव। सा च भक्तिरेव। अतः—

"भक्त्या त्वनन्यया लभ्यः अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥"

इत्यादौ भक्त्याः दर्शनसमानाकारता प्रतिपाद्यते॥

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी।

इति तु स्पष्टं ज्ञानसाधनत्वं प्रतिपादयति। प्रत्यगात्मसाक्षात्कारसाधनत्वं भक्तेरत्र विवक्ष्यते। "भक्त्या त्वनन्यया लभ्यः" इत्यत्र प्रत्यगात्मसाक्षात्कारसाधनत्वं प्रतिपाद्यत इति न वैरूप्यकल्पना युक्ता॥

अत्र—

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम॥

इति हि भगवतः साक्षात्कार एवार्जुनस्य प्रतिपाद्यते, न तु दर्शनसमाकार-स्मृतिसन्तानः॥

अत्र सर्वात्मतया परमात्मदर्शनम्—विरुद्धानां विशेषाणां सर्वेषां परमात्मन्यध्यासम्, तद्व्यतिरेकेणाभावं च वस्तुगत्या सूचयितुमेव। अत एव द्वादशाध्याये—अव्यक्तनिदिध्यासनस्य प्रस्तुतस्य श्रैष्ठ्यम्, उत व्यक्तोपासन-स्येति प्रश्नः। तत्राव्यक्तपदं प्रकृतपरमात्मपरमित्येव युक्तम्, न त्वप्रस्तुतशुद्ध-प्रत्यगात्मपरम्। सगुणोपासनं निर्गुणसाक्षात्कारस्यान्तरङ्गतरं साधनम्, इति भूमिकाक्रमेण लक्ष्यलाभार्थमेव प्रयत्नो युक्तः। साक्षादन्तिमभूमिकाया एव साधनार्थं प्रयत्नो युक्त इत्युत्तरमपि भगवतोऽत एवोपपद्यते॥

अत्र—भक्तिज्ञानदर्शनप्रवेशा विशिष्टाद्वैताभिमताः सिंहीस्तन्यवद् विजातीयामृतरसिकानामेव सुज्ञानाः इति लिखन्ती परमार्थप्रकाशिका कस्या वा सिंह्याः स्तन्यरसपानेन तद्रसामृतमनुभवति—किं ग्रामसिंह्याः, उत वनसिंह्याः, इति सैवानुभूय संतुष्यतु सर्वत्र श्रीभाष्याशयतद्भावापत्त्या। न च दर्शनमत्र लाभो नाम। क्लिष्टकल्पना तूभयत्र समाना॥

इदं हि वाक्यं निर्विशेषप्रत्यक्स्वरूपचिन्मात्रस्य प्रकरणगतम्, न तु परमात्मपरम्। न चात्र परमात्मनः प्रश्नः, उपन्यासो वा; वरत्रयातिरेकेण परमात्मविषयवरान्तरकल्पनाया अयोगात्। "यस्य ब्रह्म च क्षत्रं च" इत्युत्तरत्र सगुणस्येश्वरस्याप्यधिष्ठानतया संविन्मात्रस्य प्रतिपादनाद् नात्र सगुणस्य ब्रह्मणः प्राधान्येन प्रतिपादनम्॥

सति चैवं "यमेवैषः" इत्यत्र निर्विशेषचैतन्यप्रधानस्य यच्छब्दार्थत्वम्। एषपदं तु साधकपरम्, न तु प्राप्यपरम्, इति साधकप्राप्ययोरभेदवर्णनं विना नात्र प्रकरणशुद्धिः। आपातदृष्ट्या क्लिष्टकल्पनाऽद्वैतमते प्रकरणानुगृहीता सहनमर्हति, परमते तु प्रकरणोल्लङ्घनम्, वरचतुष्टयकल्पनम्, "यस्य ब्रह्म च क्षत्रं च च उभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इत्यत्र यत्पदानन्वयः, तद्वैयर्थ्यादिकं च दोषः। परमात्मन उभयत्र सर्वगतत्वाद् लभ्यत्वं गौणमेव। परमते नित्यप्राप्तस्य व्यापकस्य परमात्मनो लाभार्थं का वाऽपेक्षा ध्यानादेः? भक्त्यतिशयो वा स्वेच्छया गृहीतशरीरमात्रस्य परमात्मनः परिच्छिन्नस्य कथमपरिच्छिन्नस्वरूपसाक्षात्कारः?

"तमेव विदित्वाऽतिमृत्युमेति" "विद्वान्नामरूपाद्विमुक्तः" "ब्रह्मविदाप्नोति परम्" इत्यादौ श्रूयमाणो विदिधातुः—"आत्मा वा अरे द्रष्टव्यः" इत्यादिवचनैकवाक्यतया स्वरूपसाक्षात्कारपर एव। सोऽपि प्रमाणजन्य., न तु पुरुषतन्त्रः। "किमप्यद्वैतामोदो न जानाति" इति लिखन्त्यद्वैतसिद्धान्तविरुद्धं बहु स्वखण्डनानुगुणमनुवदन्ती च परमार्थप्रकाशिकाऽद्वैतसिद्धान्ताभिज्ञतां सुष्ठु

स्वगोष्ठ्यां घोषयति। सादरमनुयुज्यते परमार्थप्रकाशिका—भक्ति-ज्ञान-दर्शन-प्रवेशरूपाणि विशिष्टाद्वैताभिमतान्येव परमार्थानि, नाद्वैताभिमतानीति किमिति परमार्थतत्त्वं न प्रकाश्यते, यत् सिंहीस्तन्यवत् कस्यापि दुर्लभम्, स्वगोष्ठीमात्र-विज्ञेयरहस्यतया गोप्यतया च सरक्ष्यत इति ॥

एतेन—अत एव श्रुतिस्मृत्योरेवमभिधीयते—"तमेव विदित्वाऽतिमृत्युमेती"ति श्रीभाष्योक्तिरपि व्याख्याता ॥

अत्राद्वैतामोदः—अत एव शब्दार्थं ध्रुवानुस्मृतेर्भक्तिशब्देनाभिधानादिति वा, भक्तिशब्दस्योपासनापर्यायत्वेनेति वा—लिखतीति परमार्थप्रकाशिकापि वेदनस्य भक्तिरूपोसनापरत्वादित्येव व्याचष्टे। परं तु लिखति—अत एवेति सूक्त्यज्ञानविलसितमद्वैतामोदस्य विवरणमिति। इदं तु श्वश्र्वा भिक्षानिषेधाधिकारन्यायं स्मारयति। अद्वैतामोदोऽपि भक्त्युपासनयोरैकार्थ्यमेवात्र प्रतिपादयति परमार्थप्रकाशिकेव, न तु किमप्यपूर्वं तत्त्वम् ॥

तत्राद्वैतामोदः—स्मृतौ भक्तिशब्दोपादानेऽपि श्रुतौ तदनुपादानेन तदुल्लेखस्य प्रकृतानुपयोगं यद्वदति, तत्र परमार्थप्रकाशिका—श्रुतौ भक्त्यनुपादानमामोदोक्तं हृदयेनानुमनुते। तथापि वदति—

> "भक्त्युपासनयोर्भेदेऽपि श्रुतौ वेदनोपायत्वविधानपूर्वकं तदतिरिक्तोपायनिषेधः, स्मृतौ भक्त्युपायत्वविधानेन भक्त्यनतिरिक्तोपायनिषेधश्च परस्परविरुद्धः स्यात्। अतोऽपि हेतोर्वेदनं भक्तिरूपोपासनं प्रतिपत्तव्यम्"—इति।

तत्र श्रुतौ वेदनोपायत्वं प्रतिपादितम्, स्मृतौ भक्त्युपायत्वं प्रतिपादितमिति श्रुतिस्मृत्योरविरोधो भक्तेरुपासनस्य चैक्यस्वीकरणेन कामं परिह्रियताम्। मोक्षसाधनं वेदनं श्रुतिसिद्धं ततोऽतिरिक्तमिति श्रुतिप्राबल्यमनुसृत्य स्मृतेरर्थवर्णनं प्रकाशिका कथं निराकरोति? यदि भक्तेरुपादानं श्रुतौ नास्तीति मन्यते, तर्हि स्मृत्या भक्तेरुपायत्वमुक्तं वेदनद्वारेति वर्णन एव स्वारस्यम्, न तु श्रुत्यर्थस्यान्यथानयनेन। स्मृतिरपि—

'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी'

"भक्त्या त्वनन्यया लभ्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥"

इति ज्ञानसाधनत्वमेव भक्तेः प्रतिपादयतीति स्पष्टमिदम्, इति सर्वस्य वाक्यस्यैकैकस्वस्वाभिमतार्थवर्णनमात्रं न पर्याप्तम्। न्यायानुमतं हि विवरणम्, न स्वेच्छामात्रनिबन्धनम्, इत्यद्वैतामोदाशयः ॥

तत्र ध्यानम्, श्रवणं वा सकृदनुष्ठितं न फलाय कल्पते, किं तु दृष्टार्थत्वाद् आप्रायणम्, यावत्पटुतमसंस्कारम्, यावत्प्रारब्धफलभोगान्तं वाऽऽवर्तनीयमिति सूत्रितम्—"आवृत्तिरसकृदुपदेशादि"ति सप्रतिपन्नम्। तत्र सकृद् ध्यानमात्रेण कस्य च भक्तप्रवरध्रुवादेरिव प्रायणात्पूर्वमपि भगवत्साक्षात्कार इव कस्य चनोत्तमाधिकारिणो जन्मान्तर एव कृतश्रवणादिकस्य साक्षात्कारः, तदानीमेव प्रारब्धभोगावशेषाभावे विदेहकैवल्यं च भवति, केषाञ्चन क्रियमाणश्रवणमनननिदिध्यासनानामपि भेदवासनादिप्राबल्येऽज्ञाननिवर्तनाक्षमसाक्षात्कारे, बहुकालपटुतराभ्यासविशेषेण साक्षात्कारे पटुतमेऽपि सञ्जाते प्रारब्धभोगावशेषाभावे मुक्तिर्मुख्या भवत्येव, केषांचन तु सजातेऽपि पटुतरसंस्कारे साक्षात्कारे प्रारब्धानुवृत्तौ तु प्रारब्धेतरोपादानांशनाशे प्रारब्धमात्रानुवृत्तौ जीवन्मुक्तानां स्थितप्रज्ञानां गुणातीतानां वा मिथ्यात्वबुद्ध्या व्यवहारानुवृत्तिः परं वर्तते। तत्र शरीरधर्माः क्षुत्पिपासादयस्तान् न बाधन्ते, तेषां भिक्षाटनार्था प्रवृत्तिरपि न संभवति समाधिदशायाम्। व्युत्थानानन्तरं त्वज्ञानलेशानुवृत्त्या भिक्षाटनादौ प्रवृत्तिः, गुरुशिष्यभावादिभेदबुद्धिनिबन्धनोपदेशाद्याश्चानुवर्तन्ते, यथाऽऽधिकारिकाणां रामकृष्णाद्यवताराणां च लोकसंग्रहार्थं व्यवहाराः, तेषां हि विदुषामपि देहाभिमानानुवृत्त्या सर्वे व्यवहारा न विरुध्यन्ते। भोगेन क्षपणयोग्यानामपि प्रारब्धकर्मफलानामाप्रायणादनुष्ठीयमानसाक्षात्कारेणैवाज्ञानलेशादिनाश इत्यत्र—हि "आप्रायणादि"ति सूत्रमेव प्रमाणम् ॥

तत्र सकृच्छ्रवणमात्रेण लब्धाज्ञाननिवर्तनक्षमसाक्षात्काराणामननुवर्तमानप्रारब्धशेषाणां प्राप्तविदेहमुक्तीनां न भिक्षाटनादौ प्रवृत्तिर्ब्रह्मभावमापन्नानाम् । अन्येषां त्वनुवर्तमानाज्ञानलेशानाम्, अप्राप्तपटुतमसंस्कारसाक्षात्काराणां वा मात्रयापि भिक्षाटनादौ पवृत्तिर्न समाधिदशायाम्, व्युत्थाने तु स्वयं शरीराभिमानस्यानुवर्तनात् "शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिष"मिति न्यायेन स्वयं भिक्षाटनादौ प्रवृत्तिर्न विरुध्यते । जीवन्मुक्तत्वं हि तत्त्वसाक्षात्कारेणाज्ञानांशानां बहुतराणां निवृत्तिमात्रेण, न तु सर्वात्मनाऽज्ञाननिवृत्त्या परमैकान्तिनामिव, आधिकारिकाणामिव वा ॥

तत्र—"आप्रायणादि"ति सूत्रं परमत इवाप्राप्तपटुतमसंस्कारसहितात्मसाक्षात्काराभिप्रायम् । आत्मसाक्षात्कारदशायामेवाहार्यज्ञानमिव वासनावशात् संप्रज्ञातसमाधाविवानात्मविदमभिप्रेत्यापि । "आप्रायणादिति" सूत्रं फलाध्याये प्राप्तफलस्यापि तद्रक्षणं यावच्छरीरपातमपेक्षितमिति सूचनार्थं परमत इव । परमतेऽपि हि ध्यानस्याप्रायणमनुष्ठानं सिद्धस्य फलपर्यन्तस्य वितथम्, साधनावस्थस्य तु फलाध्याये विचारोऽसङ्गत इति समानम् ॥

प्राप्तपटुतमसंस्कारस्य तु निवृत्तेष्वज्ञानांशेषु बहुतरेषु कर्तृत्वभोक्तृत्वाद्यभिमानाभावे जीवदवस्थायामपि न भाविकर्माधिकारः, न वा भाविकर्माकरणेन प्रत्यवायः, लोकसंग्रहार्थं कर्मानुष्ठानं त्वाधिकारिकाणामिव । जीवन्मुक्तानां कर्मानुष्ठानं ह्याधिकारिकाणामिव लोकसङ्ग्रहार्थमिति वदति भगवान् स्वयमेव—

"न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥"
"लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसी"त्यादि ।

तत्र लोकसङ्ग्रहो नामाश्रद्धया स्वमार्गभ्रष्टानां कर्मसु विश्वासोत्पादनमेव । न ह्यात्मस्वरूपस्य शरीरादिविविक्ततया ज्ञानानन्तरं शरीरधर्मब्राह्मणत्वाद्यभिमाननिबन्धनकर्माधिकारो जीवन्मुक्तानां लोकसङ्ग्रहाधिकारमतिरिच्य । जीव-

न्मुक्तस्य कर्म न भवतीत्यादिवचनानि तस्य कर्मानुष्ठानप्रयुक्तस्वार्थप्रयोजनाभावमुद्दिश्य, इत्यद्वैतामोदस्य न कुत्रापि व्याघातः। न हि विहितकर्मानुष्ठानं जीवन्मुक्तस्य विद्यानिष्पत्त्युपयोगि; विविदिषार्थत्वाद् यज्ञादीनाम्, विद्याप्रतिबन्धकचित्तमालिन्यादिनिरसनद्वारा परम्परयेह जन्मनि, जन्मान्तरे वा कृतानां कर्मणां कृतार्थत्वात्। न चायं नियमः—यत् जन्मतः प्रभृति विरक्तो विविदिषुः सर्वोऽपि। यस्तु तथा, तस्य जन्मान्तरीयेणैव कर्मणा चित्तशुद्ध्यादिनिर्वाहः। विविदिषासाधनत्वमेव कर्मणाम्, न तु विद्यासाधनत्वमिति गतमधस्तात्॥

आत्मोपासनादीनां तु विद्यान्तरङ्गतरसाधनत्वम्, न त्वेवं कर्मणाम्। तेषां चित्तशुद्धिद्वारा विविदिषाधिकारप्रयोजकत्वेन बहिरङ्गत्वात्, इति नोपासनासाम्यं कर्मणाम्, इति "कर्मानुष्ठानेनैव विद्यानिष्पत्तिः" इति श्रीभाष्योक्तावेवकारो नान्ययोगव्यवच्छेदार्थ इति संप्रतिपन्नम्। अयोगव्यवच्छेदार्थोऽपि यदि परम्परया तदुपयोगाभिप्रायेण, तर्हि स्वागतम्; जन्मान्तरीयैः कर्मभिरपि तन्निर्वाहात्॥

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इत्यत्र सहशब्द एकपदं वा भवतु, स., ह इति पदद्वयं वा; उभयथाऽपि कर्मोपास्त्योरेव साहित्यं समुच्चयो वा विवक्ष्यते; तत्र विद्याशब्देनोपास्तेरेव विवक्षणात्। तत्रोपास्तेरमृतप्राप्तिसाधनत्वं साक्षात्कारद्वारैव, न साक्षादित्येव विवक्ष्यते, उत्तरग्रन्थस्वारस्यात्, इति सहशब्दार्थविचारोऽयं नाद्वैतविरोधी, विशिष्टाद्वैतस्यात्यन्तमुपकारी वा। तत्त्वसाक्षात्कारस्य कर्मसाहित्ये तु न किमपि प्रमाणम्॥

"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया॥"

इति ज्ञानिना केशिध्वजेन जनकादिवत् कर्मणोऽनुष्ठानकथनं तु पटुतरसंस्कारं संप्रज्ञातसमाधिस्थानाम्, असंप्रज्ञातसमाधिस्थानामपि व्युत्थितानां मृत्युशङ्कया

तत्परिहारार्थं लोकसंग्रहार्थं वा न विरुध्यते। अत्र मृत्युशब्देन प्रारब्धफल-व्यवहारप्रयुक्तसंभावितमालिन्यमेव विवक्ष्यते, न त्वन्येषामिव स्वाभाविकं मालिन्यम्। अतो 'विद्यये'ति न विरुध्यते। केशिध्वजो हि पटुतरसाक्षात्कारानुदयात् तदर्थं यतमानः कर्मत्यागे नाधिकारीति तु निष्कर्षः। सर्वथा त्विहैव जन्मनि कर्मानुष्ठानद्वारा कर्मविचार एवाथशब्दार्थ इति तु नोपपद्यते ॥

यथाच पूर्वमीमासान्यायमुपजीव्य नोत्तरमीमांसा प्रवृत्ता, तथा पूर्वमेवोपपादितम्। वस्तुतस्तु जैमिनिरपि लोकसिद्धोत्सर्गापवादोद्देश्यविधेयभावादिनिमित्तमुपजीव्यैव मीमांसते, न त्वलौकिकप्रक्रियाविशेषेण। सा च स्वतन्त्रोत्तरमीमांसायां बादरायणमीमांसायामपि नियामिका भविष्यति। लौकिकानां न्यायानां विषयव्यवस्था खलु मीमांसाकृत्यम्। किमिदमपूर्वं बादरायणस्य जैमिनिगुरोः? येन जैमिनीयं विचारं विना बादरायणेन स्वयं न मीमांसितुं शक्येत। तत्र "व्रीहीन् प्रोक्षती"त्यादौ द्वितीयाश्रुतिरङ्गित्वमेव बोधयति, एवमश्वमानयेत्यादावपि; तथापि तस्या एवाङ्गत्वेऽपि परम्परया तात्पर्यं मीमांसान्यायप्रकाशे निरूपितम्। तृतीयाश्रुतिरेवाङ्गत्वबोधिका साक्षादित्यत्र तु न विवादः। पराक्रान्तं चात्र शास्त्रैक्यविचारप्रघट्टके ॥

सत्यम्—"तस्मादेवंविच्छान्तो दान्तः—आत्मन्येवात्मानं पश्येदि"त्यत्र शमदमादेः साक्षात्कारसाधनत्वमेवोक्तम्, न तु साक्षाच्छ्रवणसाधनत्वम्; तथापि "आत्मा वा अरे द्रष्टव्यः" इत्यादौ श्रवणादेः साक्षात्कारसाधनत्वबोधनात्, "शान्तो दान्तः" "एवंवित् पश्येदि"ति दर्शनात् पूर्वं वेदनस्य, तदङ्गतया शमदमादेश्च विधानात् श्रवणादिद्वारैव शमदमादिकमात्मसाक्षात्कारसाधनमिति निर्धार्यते, इति फलतोऽत्र जिज्ञासाधनत्वमेव पर्यवस्यतीत्यामोदः ॥

परमार्थप्रकाशिका त्वन्यथाग्रहणेन खण्डयतीमं सन्दर्भम्—कथमत्र साक्षात्कारसाधनत्वे शमदमादीनां श्रूयमाणे श्रवणसाधनत्वबोधनमिति? सर्वथा तु श्रवणकाले, तदुत्तरं च शमदमाद्यावश्यकता न विप्रतिपन्ना। शम-

दमादिस्वरूपं च विवेकचूडामणौ भगवत्पादैः सम्यगेव विवेचितमद्वैतसिद्धान्तानुगुणम्, इति तत एवाधिकमवगन्तव्यम्। निर्विशेषात्मसाक्षात्कारे, तत्साधने वा सति शमदमादिकं यथाऽनुवर्तते, न तथा कर्मविचारमात्रे। अत एव तस्य बहिरङ्गसाधनत्वम्। नचात्र सगुणब्रह्मवेदनमेव दर्शनसमानाकारं विवक्षितम्, न वा सविशेष एव वेदान्तानां प्रामाण्यम्, न निर्विशेषे; निर्विशेषे वस्तुन्येव वेदान्तानां परमतात्पर्यात्॥

तत्र वेदान्तानां यद्यपि भामतीप्रस्थाने वृत्त्युपहितपरत्वमेव, न तु शुद्धविषयत्वम्; तथापि वेदान्तजन्याखण्डाकारवृत्त्याऽज्ञाने निरस्तेऽनावृतं संविन्मात्रं स्वत एव प्रमेति स्वप्रकाशतया, वेदान्तजन्याखण्डाकारवृत्तिविषयतामात्रेण वाऽर्थात् निर्विशेषवस्तुसिद्धिः॥

यत्तु—प्रमाणानां प्रमाणान्तरानपेक्षेत्यामोदः, तत् स्वतः प्रामाण्यवादेन। तदुक्तम्—"तत्प्रमाण बादरायणस्यानपेक्षत्वात्" इति। यथा प्रदीपस्य प्रकाशकत्वं न प्रदीपान्तरापेक्षम्, एवं प्रमाणस्य प्रामाण्ये प्रमाणान्तरानपेक्षत्वम्, न तु प्रदीपस्य, प्रमाणस्य वा सहकारिकारणान्तरानपेक्षत्वमपि; अन्यथाऽनवस्थापातः। प्रमाणस्य प्रमाणान्तरापेक्षायां हि न प्रमाणसंख्याकॢप्तिः। तत्र ब्रह्म स्वयंप्रकाशं संविन्मात्रमपि तदावरणनिवृत्त्यर्थं सत्यं प्रमाणमपेक्षते। तत्र ब्रह्म संविन्मात्रं प्रमा, न प्रमाणम्, इति प्रमाणस्य प्रमाणान्तरानपेक्षायां तत्र व्यभिचारोन्नयनं न दोषाय। अयमेव न्यायः संविन्मात्रे प्रत्यगात्मन्यपि। न चैवं सति शास्त्रवैयर्थ्यम्, प्रत्यक्षादिप्रमाणानवकाशप्रसङ्गो वा॥

सत्यं सविशेषवाक्यानि विशेषनिषेधवाक्यापेक्षितविशेषसमर्पकाणि, उपास्यतया सविशेषप्रमाणानि च। न चोभयविधानामुक्तविधया प्रामाण्येऽन्यतराप्रामाण्यम्, अन्यतरसंकोचो वा। न च विधिनिषेधयोर्निषेधवाक्यबाधकत्वं सविशेषवाक्यस्य, निषेधस्य निषेध्यप्रसक्त्यपेक्षावद् विधिवाक्यस्य निषेधवाक्यापेक्षप्रवृत्त्यभावात्॥

"अग्नीषोमीयं पशुमालभेत", "न हिंस्यात्सर्वा भूतानी"त्यत्रापि निषेधवाक्यमुपजीव्य न विधिवाक्यं प्रवृत्तम्, एवमपि सामान्यविशेषभावाद्वाक्यद्वयार्थस्य, क्रत्वर्थत्वपुरुषार्थत्वाभ्यां विषयभेदाच्च न निषेधशास्त्रेण विशेषस्य बाधः। न चात्र सामान्यविशेषभाव इति प्रागेवोपपादितम्। क्रत्वर्थत्वपुरुषार्थत्ववदुपास्यत्वज्ञेयत्वाभ्यामविरोधोऽत्रापि समानः, इति न विशेषवाक्यानुसारेण निर्विशेषवाक्यानामन्यथा नयनं सांप्रतम्॥

निर्विशेषत्वं चेदं न स्वरूपातिरिक्तम्, किन्तु स्वरूपमेव। तत्र निर्विशेषे ब्रह्मण्यध्यारोपेण विशेषाणां निर्देशः क्रमेण "नेति नेती" ति निषेधविधया, अपवादविधया वा, न तु विशेषाणां पारमार्थिकत्वाभिप्रायेण। अतो निर्विशेषं नाप्रामाणिकम्॥

"यस्मिन् ब्रह्मणि सर्वशक्तिनिलये मानानि नो मानिनाम्।"

इति विष्णुपुराणादिवचनान्यप्यनावृत्ते निष्प्रपञ्चेऽद्वितीये च न प्रमाणानि, सर्वप्रपञ्चाधिष्ठाने तद्विवर्तोपादानकारणे च ब्रह्मणि यावदविद्यानिवृत्ति प्रमाणानि, अनन्तरं तु न किमपि प्रमाणं तत्रेति हि स्वरसोऽर्थः, न तु परिपूर्णमपरिच्छिन्नमनेकविभूतिमच्च ब्रह्मेति॥

तद्धि कथं न प्रमाणवेद्यम्? अन्यथा कथं तत्सिद्धिः? इति कथं वा न शून्यवादापत्तिः? न चेदं स्तुतिमात्रमर्थवादवत् न स्वार्थपरम्। अद्वैतमते तु प्रमाणानि न साक्षाद् ब्रह्म बोधयन्ति, स्वप्रकाशस्य तस्य स्वतः सिद्धत्वात्, किन्तु तदावरकाज्ञाननिवृत्तिमात्रेण दूरत एवावतिष्ठन्ते प्रमाणानीति प्रमाणानामुपयोगः साक्षादप्रमेयत्वेऽपि स्वप्रकाशस्य ब्रह्मणः। इदमेव प्रमाणानां दूरतोऽवस्थानम्—यत् साक्षात्तदसंस्पर्शः; तथापि तदप्रकाशप्रतिबन्धेन तत्प्रकाशोपयोगित्वम्, न तु साक्षात्तत्संबन्धित्वम्। प्रमाणानि स्वविषयत्वेन घटादिवद् ब्रह्म न बोधयन्तीति तु सारांशः। अत्र दृष्टान्तः प्रदीपः। स हि केनचन घटेन, अन्येन वाऽऽवृतो न स्वप्रकाशार्थं प्रकाशान्तरमपेक्षते, किन्तु दण्डादिना घटस्फो-

टादिना तदावरणनिवृत्तिमात्रम् । न चात्रावरणनिवर्तको दण्डादिरपि प्रकाशको नाम, इति नात्र प्रदीपवैषम्यं ब्रह्मण·, न वा प्रमाणानामावरणनिवृत्तिमात्रेणाप्रमापकत्वम् वा । न ह्यत्र दण्डः प्रदीपं संबध्यैव घटस्य प्रकाशकः ॥

अत्र "सर्वशक्तिनिलये" इति ब्रह्मणः सर्वशक्तिनिलयत्वं सर्वासां शक्तीनां ब्रह्मस्वरूपत्वाभिप्रायेण । तत्र शक्तिरपि न ब्रह्मणो विशेषः । सर्वशक्तित्वं हि तस्य सर्वविवर्तोपादानत्वेन । तच्च सर्वात्मना परिणममानाविद्यासंबन्धमात्रम् । तच्चानाद्यध्यस्तरूपमेव, इत्यविद्याया इव तस्यापि परमार्थतो विलय एव । न च विवर्तोपादानत्वं तदात्मना भानमात्रं ब्रह्मणोऽर्थान्तरम् । अत एव "सन् घट" इत्यादि सदात्मनैव सर्वेषामनुभवः । तत्र न केवलं शक्तिः, शक्यान्यपि सर्वाणि ब्रह्मस्वरूपाण्येव परमार्थतः । उक्तं च—

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रय ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥

इति । अतो न केवलम् शक्तिमत्त्वेन, किन्तु शक्यत्वेनापि न सविशेषत्वम् । अत एव—"एकमेवाद्वितीयमि"ति ब्रह्मणि सजातीयविजातीयस्वगतसर्वभेदराहित्योपदेशः ॥

तत्र सर्वस्य ब्रह्माभिन्नत्वम्—शुक्तिव्यतिरेकेण रूप्याभाववद् ब्रह्मव्यतिरेकेण तद्भिन्नसर्वाभावः, तत्सत्तातिरिक्तसत्ताकत्वाभावो वा, न तु गुणगुण्यादाविव भेदाभेदाभ्याम् । यथा च—

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥"

इति सिद्धान्ताद् ब्रह्मणि सर्वप्रपञ्चकल्पको जीवोऽनादिसिद्धः, तथा पूर्वमेवोपपादितम् । अतो नात्र दोषगन्धोऽपि परमार्थप्रकाशिकारोपितः प्रसरति ॥

तत्र परमत इवाद्वैतमतेऽपि सविशेष ईश्वरोऽनादिसिद्ध इत्यनुपदमेवोक्तम्, इति सृष्टिकालः, सृष्टिस्थितिसंहारपरम्परामालाऽद्वैतमतेऽपि तत्रैवोपपद्यन्ते ।

इयान् विशेषः—अनादिसिद्धोऽपीश्वरोऽयमनादिमायोपधानप्रयुक्तात्मलाभः, इति तद्विनाशे निर्विशेषब्रह्मात्मनाऽवतिष्ठते। एवमेव जीवोऽप्यन्तःकरणादि-सर्वोपाधिविलये निर्विशेषचिन्मात्रतयाऽवतिष्ठत इति। तावत्पर्यन्तं तु मतान्तर इव कालादिव्यवस्थाऽद्वैतमतेऽप्युपपद्यते। सति चैवम्—"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति" इति जगज्जन्मस्थितिलयकारणत्वेन तटस्थलक्षणविषयेश्वरस्य सविशेषस्याध्यारोपापवाद-न्यायेन सर्वविशेषविलये सच्चिदानन्दात्मकनिर्विशेषस्वरूप एव पर्यवसानम्। तद्धि निर्विशेषं स्वयंप्रकाशमप्यविद्ययाऽऽवृतं सदन्येषामस्वप्रकाशं च सत् तत्तत्कार्यात्मना विवर्तते। ततश्च सविशेषमिव भवति। तेन च तत्स्वरूपस्या-ज्ञानाद्विप्रतिपत्तयः, तत्तादृशा विवादाश्च समुल्लसन्ति; अविद्याप्रयुक्तत्वात् संशय-विपर्ययादिवृत्तिविशेषाणाम्, इति निर्विशेषस्वप्रकाशत्वम्, सर्वव्यवहारादि-निर्वाहाश्चाद्वैतमते न व्याहन्यन्ते॥

तत्र निर्गुणश्रुतेर्गुणविशेषमात्रनिषेधे तात्पर्यम्—अग्नीषोमीयहिंसावाक्य-नयेन न संभवतीति गतमधस्तात्। तत्र

"ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥"

इति सविशेषं ब्रह्म बोधयतीति, सत्यम्। को वाऽत्र विप्रतिपद्यते? निर्विशेष-वाक्यबाधकत्वमस्य सन्दर्भस्य कथमिति खलु पर्यनुयोगः। न चात्राग्नीषोमीय-न्यायः प्रसरति, कल्पितैरपि विशेषैः सविशेषत्वस्य वस्तुतो निर्विशेषत्वस्य चोपपत्तेर्वाक्यद्वयस्याप्यविरोधात्। अपहतपाप्मत्वादयो हि गुणा उपासनामात्र-विषयाः, तेनैवोपास्येन संबद्धा नोपास्यान्तरेण संबध्यन्ते। न च सर्वेषूपासनेषु सर्वेऽपि गुणा उपसंह्रियन्ते, न वा सर्वोपासनानामैक्यम्, येन "ब्रह्मविदाप्नोति परमि"त्यादिना प्रस्तुतस्य ब्रह्मण एव सर्वेऽपीमे गुणाः स्युः, तदतिरिक्ताना-मेव विशेषाणां निरासश्च स्यात्॥

सद्विद्या हि—सर्वतादात्म्यं ब्रह्मणः प्रस्तुत्य सर्वाभावं प्रतिपादयति, न तु यत्किञ्चिदभावमात्रम्। अधिकमधस्तात्। तत्र सविशेषं सर्वकारणमपि ब्रह्म न सर्वविशिष्टतयोपास्यम्, किन्तु हेयैर्गुणै रहितमेव; अन्यथा तत्क्रतुन्यायेनोपासकानां तद्रूपमपि प्राप्येत, ततश्च दुःखित्वाद्यापत्तिः, जगद्व्यापारवर्जं ब्रह्मभावविरोधः। ब्रह्मणस्तु सर्वकारणस्यापि न तैरसङ्गस्य सङ्गगन्धोऽपीति न तत्प्रसङ्गः, इत्यभिप्रेत्यैव केषाञ्चन गुणानामेवोपासनार्थमेवोपासनावाक्येषु सङ्कलनम्, न वा स्वाभाविकं तावन्मात्रविशेषवत्त्वम्, अन्यथा—

"ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि॥"
"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्।"

इत्यादौ ब्रह्मणः सर्वविशेषसंबन्धप्रतिपादनमसङ्गतं स्यात्। अतो गुणविशेषवत्त्वमात्रे न सविशेषवाक्यानां तात्पर्यम् किन्तु, निषेधस्य प्रसक्तिपूर्वकत्वात् तत्प्रसञ्जकान्येव सविशेषवाक्यान्युपासनामात्रोपयुक्तविशेषपराण्यप्युपासनावाक्येषु॥

सर्वप्रकृतित्वं तु ब्रह्मणः सर्वविवर्तोपादानत्वरूपं सर्वाधिष्ठानत्वरूपं वा सर्वत्र सदित्यनुवेधप्रयुक्तं ब्रह्ममात्रपारमार्थिकत्वमेव साधयत् तन्निर्विशेषत्वमेवोपबृंहयति। न च कार्यकारणयोः सामान्यतः, विशेषतश्चोपादानोपादेययोः सालक्षण्यनियम इति स्थितं नविलक्षणत्वाधिकरणे; अन्यथा वस्तूनां सलक्षणप्रकृतिकत्वस्यैव दर्शनेन विलक्षणब्रह्मोपादानत्वानुपपत्तिः। अद्वैतमते तु कार्यविलक्षणप्रकृतित्वरूपं कार्यविषमसत्ताकत्वरूपं वा विलक्षणत्वमेव ब्रह्मजगतोः, इति न सलक्षणप्रकृतित्वमपि। एवमपि नविलक्षणत्वाधिकरणसाफल्यं तु विवर्तोपादानोपादेययोरपि शुक्तिरजतादिस्थले सालक्षण्यदर्शनात् प्रसक्तं सालक्षण्यमप्रयोजकमिति निरूपयितुम्। व्यक्तं चैतद्भामत्यादौ। अतो ब्रह्मणः प्रकृतित्वं निर्विशेषत्वस्योपपादकम्, न सविशेषत्वस्य। घटादिकमिव शुक्तिरूप्यादिकमपि

सविशेषमेव, इति न सर्वः सविशेषः सविशेषप्रकृतिक एवेति नियमः , स्वाप्नानां हि साक्षिचैतन्यमधिष्ठानम् , इति न कारणस्य प्रातिभासिकेऽपि कार्ये सलक्षणत्वनियमः, व्यावहारिके तु नतराम् । तदधिष्ठानं हि—

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।"

इति वचनाद्—अविद्ययाऽऽवृतं निर्विशेषचिन्मात्रमेव, अन्यथा ब्रह्मोपादानताया न निर्वाहो विशिष्टाद्वैतमते । निर्विशेषं हि वस्तु न केवलं शब्दात् , प्रत्यक्षाद्वा, किन्त्वनुमानादपि सिध्यति । तथाच योगसूत्रम् (1-25) "सामान्यमात्रोपसंहारे च कृतक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थम्" इति । इदं हि सूत्र सामान्यमात्रोपसहारे न विशेषप्रतिपत्तिरनुमानेनेति बोधयद् न विशेषधर्मस्यानुमानं निषेधति ; अन्यथा वह्न्यादिसविशेषानुमानमप्रमाणं स्यात् , इति स्थितस्यापि विशेषस्य प्रतिपत्तिरनुमानान्न भवतीत्यत्रोक्तसूत्रस्य तात्पर्यम् । न चैवं पर्वतो वह्निमानित्यत्रापि वह्निसामान्यमेवानुमितं स्यात् , न तु तद्विशेषानुमानम् ॥

तत्र निर्विशेषं ब्रह्मापि तेनैव न्यायेनानुमेयमपि भवतीति शारीरकमीमांसाभाष्यवार्तिकं प्रतिपादयति । श्रुतयस्तु बहवो निर्विशेषबोधिका विशदा । तत्र "यतो वाचो निवर्तन्ते" इति श्रुतिर्विशेषद्वारा अभिधाविधया वा ब्रह्मस्वरूपं न बोधयितुमलम् , निर्विशेषत्वादिति स्पष्टमभिप्रैति निर्विशेषतां ब्रह्मणः ॥

तत्र—"स एको ब्रह्मण आनन्दः" इति वाक्यनिर्दिष्टं ब्रह्म 'ब्रह्मविदाप्नोति परमि" ति प्रस्तुतमत्र प्रत्यभिज्ञातं च ब्रह्म नैकम् ; 'स एको ब्रह्मण आनन्दः" इति प्रस्तुतब्रह्मानन्दस्य प्रजापत्यानन्दशतगुणितानन्दवत्तया वाक्परिच्छिन्नत्वेन तदपरिच्छेदस्यात्र विवक्षणासम्भवात् , इति निर्विशेषमन्यदेव ततोऽत्र विवक्षितमिति वक्तव्यम् । अतो नात्र पूर्वोक्तनिखिलगुणविशिष्टस्य ब्रह्मणो यच्छब्देन परामर्शः पूर्वप्रकृतस्यापि, किन्तु प्रकरिष्यमाण-

परामर्शी यच्छब्दोऽत्र। तत्र वाङ्मनसयोस्तद्ग्रहणसामर्थ्याभावो वाक्प्रवृत्ति-प्रयोजकविशेषाभावनिबन्धन एव, न तु गुणानामनन्तत्वनिबन्धनः। अत एव 'अप्राप्ये'तिपदमत्र, यस्य प्रधानेन ब्रह्मणाऽन्वयः, न तु तद्गुणैः; तेषामत्राश्रवणात्। अध्याहारे तु क्लिष्टकल्पनैव प्रधानं दूषणम् ॥

यत्तु—"यतो वाचो निवर्तन्ते इत्यत्रापि ब्रह्मणो ब्रह्म इति पदेन बोधनात्, यो यो विशेष, स स सामान्यप्रकृतिक इति पूर्वोक्तयुक्त्या च मनसापि कल्पयितुं शक्यत्वाच्च न वाङ्मनसातीतत्वसिद्धि। एवमानन्दस्य ब्रह्मरूपत्वे तस्यानन्दपदविषयत्वे वा ब्रह्मणोऽपि वाग्विषयत्वमायातम्। वस्तुतस्तु आनन्दनिरूपणप्रकरणत्वादस्य, यच्छब्देनानन्दग्रहणमेव युक्तम्। तत्र च 'ते ये शतं प्रजापतेरानन्दा' इत्यत्र शतपदं न तत्सख्यापरम्, किन्त्वानन्त्यपरम्। ततश्च ब्रह्मानन्दापरिच्छेदबोधन एवोक्तसन्दर्भस्य तात्पर्यम्—इति ॥

तत्र किं मनुष्यानन्दापेक्षया शतगुणितगन्धर्वानन्दादिस्थलेऽपि शतपदस्यानन्त्यपरत्वम्, उत 'ते ये शतं प्रजापतेरानन्दाः' इत्यत्रैव? आद्ये सर्वानन्दानामानन्त्ये शतगुणोत्तरोत्कर्षः कथम्? तत्र यद्यनन्तानन्दानामेव शतगुणोत्तरमुत्कर्षः सर्वत्र, तर्हि—"स एको ब्रह्मण आनन्दः" इत्यत्रापि प्रजापत्यनन्तानन्दशतगुणितोत्कर्षरूपेण परिच्छेदस्यैव विवक्षणात् "स एको ब्रह्मण" इत्यत्र नानन्त्यस्य पूर्तिः, इति वाङ्मनसापरिच्छेद्यत्वं निर्विशेषब्रह्मानन्दस्यैवेति वक्तव्यम्। न चात्र ब्रह्मानन्दपदाभ्यामेव परिच्छेदाद् वाङ्मनसापरिच्छेद्यत्वं बाधितम्। इदं तु समं परमतेऽपि, ताभ्यां परिच्छेदेऽपरिच्छेदवर्णनासंभवात्। ब्रह्मणः, ब्रह्मरूपानन्दस्य वा निर्विशेषस्याद्वैतमतेऽभिधाविधयाऽत्राविवक्षणात् नाभिधावृत्त्यविषयत्वमत्र विरुद्धम्। अयमेव न्याय आनन्दपदेऽपि। व्यक्तं चैतदिष्टसिद्धौ ॥

अथवा—"यतो वाचो निवर्तन्ते" इतीयं श्रुतिरिदन्तया विधिमुखेन। वाचः, मनसा सह ब्रह्मणो निवर्तन्ते, नेति नेतीति निषेधमुखेन तु प्रवर्तन्त

इत्याशया। एतेन—निर्गुणपदमपि—व्याख्यातम्, तस्यापि ब्रह्मणि गुणसामान्यनिषेधमुखेनैव प्रवृत्तेः। न चात्र पक्षे निर्गुणपदस्य "नेति नेति-पदयोश्च लक्षणा, न वाऽत्राध्याहारादिदोषः; परिच्छिन्नत्वप्रतिपादकवागविषय-त्वेनोक्तवाक्ययोजनायां त्वध्याहारादिदोषो विशद एव॥

वस्तुतस्तु—निर्विशेषवाक्यान्यग्नीषोमीयन्यायेन सत्यकामत्वादिगुणविशेषातिरिक्तगुणनिषेधपराणीति हि परमते विवरणम्। तत्र च तत्तत्प्रकरणपठित-गुणविशेषाणां परिच्छिन्नतया, परिच्छिन्नवाग्विषयत्वमेवात्रायातम्, इति कथं तत्र परिच्छिन्नवागविषयत्वेन सङ्कोचो युज्यतेऽपि? आनन्दमात्रपरिच्छिन्नत्व-वागविषयत्वपरतया विवरणं तु प्रागेव निरस्तम्। निर्विशेषत्वं प्रमाणमूर्धन्य-श्रुतिसिद्धं प्रमाणविरुद्धमिति व्याहतम्। न चात्र वाक्पदं लाक्षणिकपरम्, सर्ववागविषयत्वस्यैवाभिधाविधयाऽत्र विवक्षणात्। 'यतो निवर्तन्ते' इत्यस्य यन्न प्रतिपादयन्तीत्यर्थपरतया लाक्षणिकत्वं तु समानमुभयत्र विधिमुखेन प्रवृत्त्यभावविवक्षायाम्॥

"सत्यं ज्ञानमनन्तम्" इत्याद्यप्यसत्यादिव्यावृत्तिमुखेनैव ब्रह्म बोधयति। 'यस्सर्वज्ञः' 'यद्भूतयोनि' इत्यादि तटस्थलक्षणपरं सविशेषपरं तु विधिमुखेनैव प्रवर्तत इति सम्प्रतिपन्नम्। 'मनसा सहे'ति मनःपदमशुद्धमनःपरमिति स्वीक्रियते; निवर्तन्तेपदसमभिव्याहारात्। कल्पितसर्वविशेषवत्त्वेन सविशेषपरं वा सर्वं विधिमुखेन प्रवर्तमानम्। निर्विशेषवाक्यानि तदपवादेन निर्विशेष-पराणीति तु न विरोध इत्युक्तमेव प्राक्॥

यथा हि 'इदं रजत'मिति प्रतीयमानमपि रजतं "नेदं रजतमि"ति बाध-वशात्परत्वेन बाध्यते, एवं निर्विशेषवाक्यैरपि परत्वाद्बाध्यन्ते सविशेषवाक्यानि, इति कथं सविशेषतावाद एवाबाधित इत्युद्घोषणमर्हति? न केवलं तत्पदार्थः, किन्तु त्वंपदार्थोऽपि वस्तुगत्या निर्विशेषः, असति बाधके विशेषाणामनुगत-सामान्यप्रकृतिकत्वनियमात्, इति सर्वानुगतसंविन्मात्रमेवैकं स्वीकर्तव्यम्॥

स्वप्रकाशत्वं त्वहमर्थस्याज्ञाननिरासक्षमान्तःकरणोपहितसाक्षिरूपत्वेन, तत्तादात्म्येन वा, न तु स्वत इति न स्वप्रकाशत्वासिद्धिः। अनुभूतिः, स्वप्रकाशा, अनुभूतित्वात्, इत्यादाविव स्वप्रकाशत्वस्याप्यनुमानेनास्वप्रकाशत्व-शङ्कानिरसनेनोपयोगान्निर्विशेषस्यापि कल्पितधर्मधर्मिभावकल्पनयाऽनुमानवेद्यत्वं न विरोधि ॥

प्रकृतित्वं हि विवर्तमानतया, परिणामितया वा, इति चिन्मात्रमिव न गमनपचनादिकमपि सामान्यं न प्रकृतितयाऽऽपादनमर्हति। एतेन— माधुर्यादिरसरूपादिविशेषाणां सामान्यप्रकृतिकत्वमपि—व्याख्यातम् ॥

सच्चिदानन्दस्वरूपे ब्रह्मणि सत्त्वचित्त्वादिधर्मोऽपि कल्पित एव। तदुक्तम्—"आनन्दो विषयानुभवो नित्यत्वं चेति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते" इति, इति सत्त्वचित्त्वादिनापि न परमार्थतः सविशेषं ब्रह्म। जडत्वं हि अस्वप्रकाशत्वम्, स्वप्रकाशे चिद्रूपे चित्त्वाभावेऽपि नाबाधितम्। अवेद्यत्वसमानाधिकरणापरोक्षव्यवहारयोग्यत्वाभावरूपमस्वप्रकाशत्वं न ब्रह्मणि वर्तते, येन जडत्वं तस्यापद्येत। विशेषास्सामान्याश्रया इत्यादिप्रकारेण निर्विशेषस्योपसंहारविधया सिद्धावपि न तत्पक्षसाध्यहेतुकानुमानं तत्र स्वी-क्रियते। महाविद्यानुमानेन हि निर्विशेषानुमानम् ॥

निर्विशेषब्रह्मणि वेदान्तोपबृंहितार्थापत्तिरेव प्रमाणम्, नानुमानम्। कुत्रचनानुमेयत्वोक्तिरपि तदभिप्रायेणैव। अभावस्तु धर्मो ब्रह्मरूपत्वाद् नाद्वैत-विरोधी। भावाद्वैतमतेऽभावव्यतिरिक्तद्वितीयाभावपरतया सङ्कोचेऽद्वितीयादि-श्रुतिर्मानम्। हेयगुणनिषेधपरतया विवरणं तु निरस्तम्, येन कतिपयविशेष-रहितस्यापि ब्रह्मणः सविशेषत्वं सूपपादम्। न हि ब्रह्मणि निष्कर्षहेतुभूता विशेषा. केऽपि सन्ति; सर्वविशेषप्रतिषेधार्थत्वादद्वितीयादिवाक्यानाम्। तत्र विशेष इव विशेषाभावोऽपि कल्पितः, अपारमार्थिकश्च, इति कथं निर्विशे-षस्य विशेषाभाववत्त्वं कश्चन पारमार्थिको धर्मः, अद्वैतभङ्गश्च स्यात् ॥

अधिष्ठानत्वं हि ब्रह्मणो यावदज्ञानावरणं न पारमार्थिकम् ; अज्ञानविषयत्वरूपत्वात्तस्य । तच्चाखण्डाकारसाक्षात्कारेणाज्ञाननाशे, तत्प्रयुक्तानामन्येषामिव नाशाद् नानावृतचिद्रूपस्य वर्तते, इति न तेन ब्रह्मनिर्विशेषत्वव्याघातः । तथा चोक्तम्—

"अक्षमा भवतः केयं साधकत्वप्रकल्पने ।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ॥"

इति । अयमेव न्यायः सविशेषत्वेऽपि । इदमेवाभिप्रेत्याद्वैतामोदो वदति— विशेषप्रकृतित्वं भासमानविशेषानधिष्ठानत्वाभावमात्रमिति । तेन चाज्ञानविषयत्वमात्रं विवक्षितम् , इति न तावन्मात्रेणानावृतसविन्मात्रस्य सविशेषत्वापादनं सम्भवति ॥

एतेन—विशेषाभावस्यापि विशेषत्वाद् निर्विशेषत्वेनैव सविशेषत्वापत्तिरपि—निरस्ता ,

धर्मधर्मिभावस्य, विशेषाणां चाज्ञानकल्पितत्वेनैवात्मत्वाभावात् , अनावृते संविन्मात्रे तदतिरिक्तस्य कस्याप्यभावेन कमपि विशेषमादाय सविशेषत्वापादनस्यासम्भवाच्च ॥

एतेन—धीत्व – स्वयंप्रकाशत्व – नित्यत्वादीन्यपि—व्याख्यातानि ; तेषां सर्वेषां ब्रह्मधर्मतयोक्तविधया भावरूपतया, अभावरूपतया वा आब्रह्मसाक्षात्कारमेव ब्रह्मधर्मत्वात् , अनावृतावस्थायां तदभावात् कथं तैरपि वस्तुतो निर्विशेषत्वस्य हानिः ?

एतेन—विधिमुखेन, निषेधमुखेन, शक्त्या लक्षणया, स्वरूपलक्षणेन, तटस्थलक्षणेन वा केनापि प्रकारेण बोध्यत्वे तेनैव सविशेषत्वापत्तिरिति— निरस्तम् ;

सर्वविधस्यास्यानावृतचिन्मात्रधर्मत्वाभावात् । तत्त्वमस्यादिवाक्येनाखण्डाकारसाक्षात्कारे जननीये द्वारभूताः सन्तु सर्वेऽपि प्रकाराः, न तेन वाक्यार्थ-

साक्षात्कारानन्तरमप्यात्मानं लभन्ते ; अन्यथा सर्वशास्त्रवैयर्थ्यात् । साधनावस्थायां खलु सर्वेऽपीमे प्रकाराः, न तु मुक्तावस्थायामिति तु तत्त्वम् ॥

तत्र ब्रह्मणि तत्त्वमादिपदानां शक्तिः सविशेषे, लक्षणा निर्विशेषे शक्यसम्बन्धिनि । न चात्र शक्यार्थेनैव निर्वाहः ; तत्त्वमर्थाभेदस्यान्यथा दुरुपपादत्वात् । शक्यातिरिक्ते निर्विशेषे ब्रह्मणि सविशेषे ब्रह्मणीव श्रुतिरेवोक्तविधा प्रमाणम् , इति न तत्र मानाभावः सुशङ्कः ॥

तत्र निर्विशेषब्रह्मणो लक्ष्यत्वं सङ्केतविशेषवशाद् वाच्यत्वं वाऽज्ञाननिवृत्तिपूर्वक्षण एव, न तदनन्तरक्षणे, इति कथं तेन सविशेषत्वमनावृतस्य ब्रह्मणः । वाक्यानां प्रामाण्यं हि प्रकरणोपक्रमोपसंहारादितात्पर्यग्राहकप्रमाणावधृततात्पर्यवशादेव सर्वत्र, न तु पदद्वयादिसमभिव्याहारमात्रेण यत्किञ्चिदर्थबोधकत्वमात्रेण ; जरद्गवादिवाक्यानामपि प्रामाण्यापत्तेः । तात्पर्यं चात्र "सद्विद्यादौ निर्विशेषे ब्रह्मण्येव, इति सिद्धं निर्विशेषे ब्रह्मणि वेदान्तानां प्रामाण्यम् । इयमेव नीतिर्लौकिकेष्वपि वाक्येषु ॥

न हि शब्दप्रमाणमात्रावसेयं वस्त्वपि लोकसिद्धमेव ; अन्यथा—धर्मादौ, किं बहुना ? सविशेषे ब्रह्मण्यपि प्रामाण्यं श्रुतेर्न स्यात् । लोके हि सविशेषपरमिव निर्विशेषपरमपि सोऽयं देवदत्त इत्यादिवाक्यं वर्तते, इति लोकसिद्धप्रक्रिययैव निर्विशेषप्रामाण्यं वेदान्तानाम् । तत्र शक्यार्थबाधे लक्षणाऽपि हि लौकिक्येव । तत्त्वमस्यादिवाक्ये तु नान्या गतिः । तदुक्तम्—

"सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः
पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः ।
उत्पन्ने च विरोध एकरसिके वस्तुन्यखण्डार्थधीः"

इत्यादि । अलौकिकार्थवादो हि सविशेषवादेऽपि समानः, इति कथं निर्विशेषवादस्य प्रामाणिकस्य परमश्रेयोनिदानस्य निरसनम् ?

तत्र सत्यपि सामान्यविशेषसर्वग्राहिण्यां सामग्र्यां धर्मिमात्रग्राहि निर्विकल्पकं ज्ञानं परोक्षमपरोक्षं वा तात्पर्यानुसारि दुर्वारम्; वाक्यस्य तात्पर्यविषयमात्रबोधकत्वेन संसर्गविषयकत्वानियमात्। व्यक्तं चेदमधस्तात्। सामान्यविशेषसर्वधर्मग्रहणप्राग्भावि 'इदमि'ति निर्विकल्पकं ज्ञानं ह्यनुभवसिद्धम्। तत्र हि न देशः, कालः, धर्मो वा कश्चन भाति; इदमित्याकारमात्रोल्लेखात्, प्रकारसंसर्गयोस्तत्राभावात्॥

सत्यम्, धर्मिग्राहकसामग्र्येव धर्मग्राहकसामग्री, तथापि धर्मप्रतीत्यविवक्षया प्रयुक्तवाक्यात् स्वरूपमात्रप्रतीतिरविरुद्धा। न हि रूपप्रतीतिदशायां परिमाणस्यापि प्रतीतिर्नियता, उभयग्राहकसामग्र्यैक्येऽपि। अविद्यानिवृत्तिर्हि न सन्मात्रग्राहिप्रत्यक्षेण, किन्त्वखण्डसाक्षात्कारेण। न हि सन्मात्रग्राहिणि प्रत्यक्ष आनन्दांशोऽपि भाति। सदादिभेदस्यानाद्यविद्याकल्पितस्यानादेः खलु 'सन् घट' इत्यादौ भानम्, न तु निर्विभागस्य। अतो न प्रतिक्षणं जीवन्मुक्तत्वापत्तिः॥

सुषुप्तावात्मानुभवोऽपि निर्विकल्प एव। तत्र ह्यात्मा ना'हमि'ति भासते, किन्त्वज्ञानोपहिततया चिन्मात्रतयैव स्वप्रकाशः, तदाकाराविद्यावृत्तिरेव वा निर्विकल्प एव। तत्र ह्यात्मा वस्तुगत्या निर्विशेष एव। 'घटः सन्' इत्यादौ सन्मात्रे ज्ञानप्रामाण्ये ब्रह्मसिद्ध्यादिसम्मते तत्र सन्मात्रज्ञानं निर्विकल्पकमेव। न हि तत्र सन्मात्रातिरिक्तं भासते। अत एवोक्तम्—

"सन्मात्रग्राहि सम्प्रोक्तं प्रत्यक्षं निर्विकल्पकम्"।

इति। तत्राखण्डं ब्रह्म तु श्रुत्येकसमधिगम्यम्। तच्चाखण्डाकारवृत्तिविषयत्वेन प्रत्यक्षग्राह्यमपि, शाब्दापरोक्षवादस्वीकारात्। प्रकारानवगाहि ज्ञानं निर्विकल्पकमिति हि तल्लक्षणमिति न्यायदर्शनम्। तत्र हि ज्ञातुर्न भानम्, ज्ञेयस्यापि न प्रकारतयाऽपि भानमिति तु परे। 'इदं किञ्चिदि'त्यत्र किञ्चित्पदमिदंपदस्य विवरणमिदन्तया विषयस्याभानोपपादकम्, न तु स प्रकारो-

ऽपि। तत्र लौकिकं निर्विकल्पकं न शब्दजन्यं प्रत्यक्षमिति केचन, अन्ये तु तदपि शब्दजन्यं प्रत्यक्षं चेति। अयमेव न्यायो वैदिके निर्विकल्पकप्रत्यक्षेऽपि। विशिष्टाद्वैताभिमतं तु ससंस्थानप्रथमपिण्डग्रहणं निर्विकल्पकम्। सविकल्पकं त्वनुवृत्ततया संस्थानग्रहणमित्यादि पूर्वमेव निरस्तम्॥

तत्र निर्विशेषस्यानुमानवेद्यत्वम्, अनुमानेनापि तस्य प्रत्यक्षत्वं च पूर्वमेवोपपादितम्। तत्राभावस्य ब्रह्मरूपत्वाद् न तेन सविशेषत्वमित्यपि निरूपितम्॥

तत्र ब्रह्मणि सर्वस्य कल्पितत्वात् प्रपञ्चभेदो न प्रामाणिकः। प्रपञ्चे तु ब्रह्मभेदो वर्तते; कार्यात्मना भेदस्यैव स्वीकारात्। परस्पराध्यासोऽपि प्रपञ्चे ब्रह्मतादात्म्यमात्राध्यासेन, न तु ब्रह्माध्यासेन। सोऽपि कल्पित एव॥

अत एव घटपटादिभेदोऽपि व्याख्यातः। यथाच घटपटादिभेदोऽपि दुर्निरूपः, तथा खण्डनखण्डखाद्ये व्यक्तम्। प्रतिभासमात्रं न वस्तुसत्तामपेक्षते, येन प्रतीयमानत्वेनैव घटादिसत्त्वमापद्येत, शुक्तिरजतादाववभासमानेऽप्यबाध्यत्वविरहेण तस्य तदप्रयोजकत्वात्॥

न हि 'इदं रजतमि'त्यादावन्यत्र प्रसिद्धं रजतं प्रत्यक्षवदवभासितुं शक्नोति, लौकिकप्रत्यक्षवदिति वा। जगदनिर्वचनीयत्वम्, शुक्तिरजताद्यनिर्वचनीयत्वं च स्थापितमेव। अत एव भाष्यम्—"शुक्तिका हि रजतवदवभासते" इति। अत्र 'रजतवत्' इति वत्कारः प्रसिद्धरजतवैलक्षण्यं शुक्तिरजतस्य साधयति। अधिकं भाष्यवार्तिके॥

न च भासमानत्वमात्रं सत्त्वम्, न वा मिथ्यात्वम्, येन ब्रह्मवत् शुक्तिरूप्यस्य सत्त्वम्, शुक्तिरूप्यवत् ब्रह्मणोऽपि मिथ्यात्वं च स्यात्। ब्रह्म हि भासमानमपि बाधकज्ञाने बाध्यत्वेनाविषयत्वात्, बाध्याविद्याप्रयुक्तत्वाभावाद्वा पारमार्थिकम्। न चैव शुक्तिरूप्यादिकम्, अविद्यातत्प्रयुक्तघटपटादिभेदो वा, येन ब्रह्मवत् घटपटादिभेदोऽपि पारमार्थिकः स्यात्॥

तत्र भेदो गोत्वादिरूपः स्वाश्रये व्यवहारहेतुरपि स्वस्मिन् न स्वव्यवहारहेतुः, इति तत्रापि भेदान्तराभ्युपगमेऽनवस्थापत्तिः। अतो भिन्न इति व्यवहारोपपादनासंभवात् भेदस्य दुर्वचत्वमेव। वस्तुतस्तु भेददुर्वचत्वं तस्य सत्त्वेनासत्त्वेन वा दुर्निरूपत्वेनैव, न तु व्यवहारहेतुत्वाभावेन, इति घटादिवत् तद्व्यावहारिकसत्त्वाङ्गीकारो न दोषाय, तत्पारमार्थिकत्वनिरासमात्रनिर्भरत्वात्। अतो न वर्णाश्रमधर्माधर्मादि सर्वं दुर्निरूपम् ॥

तत्र जातिः संस्थानं चैकमिति मीमांसकाः। अन्ये तु संस्थानादतिरिक्तामेव जातिं मन्यन्ते। तदभिप्रायेणामोदो वदति—"संस्थानं प्रतिव्यक्ति भिन्नम्, जातिश्च सर्वत्रैके"ति। तत्र संस्थानजात्योरेकत्वानेकत्ववादः, सत्यम्, प्रकृतानुपयुक्तः। जातिवादस्तु वेदान्तिनाम्, किं बहुना? वैदिकानां सर्वेषामपि न सम्मतः। तथापि लोकदृष्ट्या न संस्थानवादो युक्त इति प्रासङ्गिकोऽयं विचार आमोदस्य। न तत्रामोदस्यापि निर्भरः। श्रीभाष्यमपि संस्थानैकपक्षपात्यपि भेदनिरूपणप्रसङ्गे गोत्वादिजातेर्भेदरूपत्वं समर्थयद् जातिव्यतिरिक्तं संस्थानं न व्यवहरति। ततश्च श्रीभाष्यस्यात्र पूर्वापरविरोधोद्भावनमात्र आमोदस्य निर्भरः। सर्वथा तु भेदस्य पारमार्थिकतया दुर्निरूपत्वमामोदस्याव्याहतम्। भेदप्रतीतिश्चेयमाब्रह्मसाक्षात्कारमेव ॥

यत्तु—सदनुभूतिविशेषयोर्विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वादनुभूतिरेव सतीत्यद्वैतसिद्धान्तो न युक्त इति—श्रीभाष्यम्,

तत्रानुभूतिविशेषपदेन वृत्तिरूपं ज्ञानं यदि विवक्षितम्, तर्हि तस्यास्सद्रूपत्वानङ्गीकारात् तयोर्भेदसाधनमिष्टसाधनम्। न च तावता संविन्मात्रस्वरूपस्य सद्रूपत्वं विरुध्यते। न हि प्रत्यक्षं सतः संविन्मात्रतां गोचरयति। अतो न सदनुभूतिस्वरूपत्वस्य तदभेदस्य वा काचन क्षतिः ॥

अत्रानुभूतिसद्विशेषयोरित्यत्र विशेषपदं हि सत्पदेन, अनुभूतिपदेन चोभयेनान्वेति? उत अन्त्येनैव? आद्येऽनुभूतिविशेषोऽन्तःकरणवृत्तिः, तद-

वच्छिन्नं चैतन्यं वा, सद्विशेषस्त्वनाद्यज्ञानसंबन्धवशात् कल्पितभेदं सद्रूपं सदात्मना ज्ञातम्, आनन्दात्मनाऽज्ञातं च ब्रह्मरूपमधिष्ठानं नाम। तत्रायं सद्रूपविशेषोऽधिष्ठानात्माऽविद्योपहित उपहितात्मना बाध्यः, न तु स्वप्रकाशानावृतसंविन्मात्रात्मना, इति न तयोरैक्यमद्वैतमतेऽपि। तथाच यस्या अनुभूतेरखण्डाकारवृत्तिव्याप्याया सतैक्यम्, तयोर्भेदो यदि विवक्ष्यते, तर्हि तत्र विशेषपदं व्यर्थम्, विरुद्धार्थं विपरीतं वा श्रीभाष्यकाराणाम्॥

इदमेवाभिप्रेत्यामोदो वदति—"अत्र विशेषपदं व्यर्थम्" इति। द्वितीयपक्षोऽप्यत एव परास्तः, सद्विशेषस्यानुभूत्याऽभेदस्यानङ्गीकारात्। अत्राप्यनुभूतिपदेन वृत्तेर्विवक्षणे तत्सामान्यस्याखण्डचिन्मात्रस्य वृत्तिविषयत्वेऽपि सतश्चिन्मात्रानुभूत्यविषयत्वाद् नानेन सन्दर्भेण सदनुभूतिभेदसाधनं संभवदुक्तिकम्। तथा चामोदः—'सत्सामान्यस्याप्यनुभूतिविषयत्वात्' इति॥

एतेन—विशेषपदेन सतां भिन्नभिन्नत्वाद् अनुवर्तमानत्वं नास्ति, किन्तु व्यावर्तमानत्वमेवेति सूच्यत इति—परास्तम्॥

न हि सत्, व्यावर्तमानम्, सर्वत्र प्रतीतिषु सन् घटः, सन् पट इत्येवमनुगतत्वात्, इति न व्यावर्तमानत्वमत्र सद्विशेषपदे विशेषपदार्थः। तत्र हि विशेषपदस्य व्यावर्तमानपरस्य विशेषणात् विशेषसदित्येव प्रयोगापातात्, न तु सद्विशेष इति। न च व्यावृत्तानां संविद्रूपानुभूतेश्च विषयविषयिभावः, न वा भेदोऽद्वैतमते, इत्यनुभूतिसद्विशेषयोर्भेदसाधनमिष्टमेव। परमतेऽनुभूतेः सत्त्वमभ्युपगम्यते, अन्येषां च सत्त्वमित्यनुभूतिमात्रस्य सत्त्वसाधनं वितथम्। अद्वैतमतेऽनुभूतेरेव सत्त्वाभ्युपगमात् तन्मतनिरसनमेव यदि लक्ष्यम्, तर्हि वितथमिदम्, अद्वैतिभिरनुभूतेः स्वयंप्रकाशायाः संविन्मात्राया वा सद्रूपत्वाङ्गीकारेऽपि सत्त्वानङ्गीकाराद् अनुभूतिरेव सतीत्यस्यापि तदभिप्रायत्वात्॥

तत्र यदि घटोऽस्तीत्यादिप्रतीतिविषयाणां सताम्, घटोऽनुभूयते इत्यादि प्रतीतिगोचराणामनुभूतीनां च नैक्यमत्र साध्यते, तर्हि स्वागतम्।

घटोऽस्तीत्यत्र प्रतीयमानाऽस्तिक्रिया, घटोऽनुभूयत इत्यत्र प्रतीयमाना वृत्तिश्चैकेति को वा प्रतिपद्यते? यन्मतनिरसनमत्र परमार्थप्रकाशिकाया लक्ष्यम् ॥

यत्तु—अद्वैतमते ब्रह्मात्मकानुभूतिव्यतिरिक्ता लौकिक्योऽनुभूतयो न सन्ति। तदतिरिक्तस्य सर्वस्य जडत्वात्, अन्त करणवृत्तीनामपि जडत्वाविशेषादनुभूतित्वासम्भवात्। अत एव जडत्वाद् वृत्तीना विषयग्राहित्वासम्भवाद् ब्रह्मचैतन्यसबन्धविशेषबलायत्तं विषयग्राहित्वं तत्रोरीक्रियते—इति,

तत्र विशिष्टाद्वैतमते धर्मभूतज्ञानमिवाद्वैतमतेऽन्तःकरणवृत्तिरपि स्वप्रकाशाऽजडा च। तस्य ब्रह्मणि केवलावरणाभिभवार्थत्वमात्रम्, घटादौ तु तस्य जडत्वेनावरणाभावात् तदवच्छिन्नचैतन्यगताज्ञानविषयत्वनिरसनद्वारेण परम्परया तत्प्रकाशकत्वम्, इति घटोऽनुभूयत इत्यादौ वृत्त्यवच्छिन्नं चैतन्यमेवानुभूतिः, न तु शुद्धसंवित्, यस्यास्सद्रूपत्वम्, अनुभूतिः सतीत्यादिना विवक्ष्यते, न तु तत्तदवच्छिन्नचैतन्यम्, तत्तदाकारवृत्त्यवच्छिन्नचैतन्यं वा सदिति। सन् घट इत्यादावपि सद्रूपब्रह्मतादात्म्यमेव भासते, न तु सद्रूपत्वम्, अबाध्यत्वरूपं वा सत्त्वम्। वृत्तीनामावरणनिवृत्तिद्वारा विषयग्राहित्वमावृतघटाधिष्ठानगताज्ञानविषयत्वद्वारकम्, तदवच्छेदकत्वप्रयुक्तं वा। सर्वथा तु—वृत्तयः, तदवच्छिन्नचैतन्यं वैव घटोऽनुभूयत इत्यादावनुभूतिपदार्थः। प्रमाणजन्यत्वेन प्रमात्वमपि तस्या एव। ब्रह्मचैतन्यं तु नित्यं प्रमाणव्यापारमन्तरा सर्वदा प्रमा, न स्वप्रकाशार्थं प्रमाणमपेक्षते, "अविद्यानिवृत्तिपरत्वात् शास्त्रस्ये"ति हि भगवत्पादाः ॥

अनावृतचिद्रूपानुभूतिस्तु सद्रूपा स्वतो निर्विषया। अत एव स्वप्रकाशाया अनुभूतेर्न परप्रकाश्यत्वम्। विषयवृत्त्यादिपरिहारेण ब्रह्मरूपानुभूतयः, लौकिक्यो ज्ञातृज्ञेयानुविद्धाश्च ता भिन्नाः। नैकत्वमासाम्। तत्र सर्वप्रत्ययवेद्यत्वं विवर्तोपादानत्वेन ब्रह्मणः, तदपि सद्रूपमात्रेण, नानन्दरूपेणापि ॥

अखण्डं हि ब्रह्म मुख्याऽनुभूतिः, न त्वनाद्यविद्यासंबन्धप्रयुक्ततद्भेदवत्यप्यनुभूतिः। अनावृताखण्डब्रह्मस्वरूपं संविन्मात्रप्रत्यगात्मरूपं चैकम्, न

त्वन्तःकरणधर्मभूतज्ञानमपि तथा। जीवब्रह्मैक्ये चोक्तविधे वेदान्ताः प्रमाणम्। अतो नासिद्धिरस्य। अतोऽनुभूतिसद्रूपत्वनिरसनं निरालम्बम्॥

न चानुभूतेरनुभाव्यत्वं प्रामाणिकम्। अत एवेष्टसिद्धिः—"अनुभूतिः, नानुभाव्या, अनुभूतित्वात्, अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गः" इति॥

यत्तु—अनुभूतेरननुभाव्यत्वेऽज्ञानाविरोधित्वं स्याद् गगनकुसुमादिवदिति—श्रीभाष्यम्,

तत्राद्वैतामोदो वदति—इहानुकूलतर्को नास्ति — अनुभाव्यस्य घटादेरप्यज्ञानाविरोधित्वं दृश्यते, इति नाज्ञानाविरोधित्वमननुभाव्यत्वप्रयोजकमिति॥

तत्राज्ञानाविरोधित्वं नाननुभाव्यत्वप्रयुक्तम्, वृत्तिज्ञानस्याननुभाव्यस्यापि स्वप्रकाशस्याज्ञानाविरोधित्वाभावात्, किन्तु चित्त्वप्रयुक्तमेव। तदुक्तम्—

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।"

इति। यदाश्रयमज्ञानं प्रपञ्चात्मना परिणमते, यदावृतं च यद् यदात्मना विवर्तते, तदेव तदविरोधि। न चासदज्ञानाविरोधि, अज्ञानस्य तदाश्रयत्वाद्यभावात्। अतोऽननुभाव्यत्वे न गगनकुसुमादिवदसत्त्वप्रसङ्गः। तदविरोधित्वं हि तदाश्रयत्वेन तद्विषयत्वेन ब्रह्मण इव, नासतः॥

वस्तुतस्तु—यदज्ञानं प्रपञ्चात्मना विवर्तते, यज्ज्ञानं च तत् बाधते, तदेवाज्ञानविरोधि। अज्ञानाविरोधित्वं तस्यैव, यद् अज्ञानविरोधिवृत्तिविषयोऽज्ञानस्य बाधकम्। न चोभयमपि गगनकुसुमादेः, इति नाननुभाव्यत्वेऽसत्त्वापत्तिशङ्कोत्तिष्ठति। तथाच—अनुभूतिः, अज्ञानाविरोधिनी, अननुभाव्यत्वात्, गगनकुसुमवदिति सत्प्रतिपक्षोऽस्मदभिमत एव; अनुभूतेरज्ञानाविरोधित्वस्यैवास्मदभिमतत्वात्। असत्तु न दृष्टान्तः, तस्य पूर्वोक्तरीत्याऽज्ञानाविरोधित्वाभावात्॥

अज्ञानविरोधिन्यनुभूतिस्तु वृत्तिरेव, न तु स्वप्रकाशचिन्मात्रस्वरूपचैतन्यम् ; तस्याज्ञानसाधकत्वात् , अत एवाप्रयोजकत्वम् । अज्ञानाविरोधित्वरूपसाध्याभाववति वृत्तिरूपज्ञाने व्यभिचारोऽप्यत एव। वृत्तिरूपाया अनुभूतेः प्रकरणसमे विवक्षायां तु बाधः । इदं सर्वमभिप्रेत्यैवाद्वैतामोदो वदति—अत्रानुकूलतर्को नास्तीति ॥

इष्टसिद्धिकारानुमाने त्वनुभूतेरननुभाव्यत्वे घटादिवदननुभूतिप्रसङ्ग एवापादितः, न तु घटादिवदज्ञानाविरोधित्वम्। अज्ञानाविरोधित्वं हि स्वप्रकाशाया अनुभूतेरिष्टमेव, इति नापाद्यम् । तत्राननुभूतित्वं घटादेरनुभाव्यस्य वर्तते, यत्र यत्रानुभाव्यत्वम् , तत्र तत्राननुभूतित्वं दृष्टम् , इति संविदोऽप्यनुभाव्यत्वेऽननुभूतित्वापादनं युक्तमेव । अत्रानुकूलतर्कः—यत्रानुभाव्यत्वं घटादौ, तत्राननुभूतित्वं दृष्टमिति व्याप्तिः । प्रतिकूलतर्कस्तु—अनुभाव्यत्वेऽननुभूतित्वापत्तिः । एतेन दृष्टान्तोऽपि—व्याख्यातः ॥

तत्र स्थाप्यानुमाने व्यतिरेकदृष्टान्तो घटादिः, बाधकानुमाने तु नानुकूलतर्कः, न वा प्रतिकूलतर्कः, न वा दृष्टान्तः । गगनकुसुमं नाज्ञानाविरोधि पूर्वोक्तविधया ; अज्ञानाश्रयविषयत्वरूपत्वादज्ञानाविरोधित्वस्य । साध्यसाधनवत्त्वेनाप्रसिद्धत्वाद् गगनकुसुममप्रसिद्धविशेषणाद्यपि । अतोऽपि न तस्य दृष्टान्तत्वम् । जगत् , नासत् , प्रतीयमानत्वादित्यत्र ब्रह्मान्वयदृष्टान्तोऽस्ति । नात्र व्यतिरेकदृष्टान्तोऽपि विवक्षितः, विवक्षणीयो वा ॥

एतेन—अनुभूतिनित्यत्वमपि—व्याख्यातम् । तत्रानुभूतेरनित्यत्वं तस्य प्रागभावप्रतियोगित्वेन वक्तव्यम् । न चैतत् सम्भवति ; स्वरूपज्ञानस्य प्रागभावप्रतियोगित्वस्य, अनित्यत्वस्य चोभयत्रास्वीकारात् । प्रागभावप्रतियोगित्वं हि लौकिकवृत्तिरूपज्ञानस्याद्वैतमते सम्भवति, अनित्यत्वं च तस्य तत इष्टमेव । परमते तु धर्मभूतज्ञानस्यापि नित्यत्वात ज्ञानप्रागभावकथा कथामात्रम् , इत्यनुभूतिसामान्यस्य प्रागभावो दुर्ग्रहः, इति वदतोऽद्वैतामोदस्यापि सर्वानु-

गतब्रह्मरूपस्वरूपज्ञानमेवानुभूतिसामान्यपदार्थः, न तु जन्यानुभूतिसामान्यम्। अनुभूतिः स्वरूपज्ञानमिति चानर्थान्तरम्। वृत्तिज्ञानस्यानुभूतित्वं हि स्वरूपज्ञानावच्छेदकत्वादुपचारमात्रेणेति हि पञ्चपादिकाप्रस्थानम्। अतो वृत्त्यतिरिक्तानुभूतिसद्भावे न प्रमाणाभावः, ब्रह्मणि प्रमाणस्यैव तत्रापि प्रमाणत्वात्॥

अयमत्र निष्कर्षः—स्वरूपज्ञानमनादिनिधनम्, तत एव प्रागभावशून्यं चेति सम्प्रतिपन्नम्। तत्र 'घटोऽनुभूयते' इत्यत्र भासमानाऽनुभूतिः स्वरूपज्ञानादतिरिक्ता। न च तस्यास्सद्रूपत्वमद्वैतिनोऽपि स्वीकुर्वन्ति, न वा तस्याः सद्रूपत्वं साधयितुमद्वैतिनामेकैकशः सङ्घशो वा प्रवृत्तिरपि। तत्र मुख्या ब्रह्मानुभूतिः सती निराश्रया, निष्प्रागभावा, एका च। तद्विपरीताश्च लौकिक्योऽनुभूतयः। न च तासां स्वरूपज्ञानस्य चैक्यमद्वैतसिद्धान्ते॥

तत्र 'सन् घटः' 'सन् पटः' इत्यनुगतसत्प्रतीत्या घटादीनां भेदानां सति कल्पितत्वं शुक्त्यादाविव रजतादेः, इति सर्वस्य ज्ञानस्याधिष्ठानांशे प्रामाण्यमिति नियमात् सन्मात्रस्याधिष्ठानस्य पारमार्थ्यम्, विकल्पानां तु घटादीनां रूप्यादीनामिवापारमार्थ्यम्। तत्र सदात्मनेव चिदात्मनाऽपि प्रकाशमानमेवाधिष्ठानम्, इति सदंश इव स्वरूपज्ञानांशेऽप्यधिष्ठाने ज्ञानसामान्यस्य प्रमाणजन्यस्य प्रामाण्यम्। तत्र सदनुभूत्योर्न विषयविषयिभावः, किन्तु स्वतःप्रकाश एवाधिष्ठानताप्रयोजकः। विषयविषयिभावस्तु जन्यज्ञानाधिष्ठानारोप्याणामेव, इति न सदनुभूत्योर्भेदशङ्कोत्तिष्ठत्यपि। तथापि नित्यानुभूतेः स्वरूपानुभूतेश्च भेदाग्रहेण केषांचन तद्भेदशङ्कायां तन्निरासार्थं सदनुभूत्येकतायाः, तत्प्रागभावशून्यतायाश्च साधनं तत्र तत्राद्वैतनिबन्धेषु। सर्वथा लौकिकानुभूत्या ब्रह्मणैक्यमिति नायमद्वैतसिद्धान्तः॥

तत्र प्रत्यक्षादेः घटाद्यविषयकत्वमिति नाद्वैतमतम्, किन्तु घटादिविकल्पांशे प्रत्यक्षस्य रजतांश इव भ्रमत्वमित्येव, यदेव गृहीत्वा विकल्पाप्रामाण्यभङ्गवादः शतदूषण्याम्, तत्परीक्षा च शतभूषण्याम्। तत्र शास्त्रमना-

वृतमखण्डं सच्चिदानन्दरूपं निर्विकल्पं तत्त्वं बोधयति। प्रत्यक्षं तु सन्मात्रं सर्वेषु ज्ञानेष्वधिष्ठानतया गृह्णाति। न चोभयमपि शास्त्रप्रवृत्तिदशायामेकम-द्वैतसिद्धान्ते ॥

प्रत्यक्षं हि सच्चिदात्मकं ब्रह्मानाद्यविद्याप्रयुक्तानादिभेदं गोचरयति, शास्त्रं तु निर्भेदं सच्चिदानन्दरूपमखण्डं ब्रह्म वृत्त्या विषयीकरोति। तत्राद्यम-ज्ञानदशायाम्। द्वितीयं तु भावितन्निवृत्तिदशामादाय। न चात्रोभयोरेक-विषयत्वम्। अतः सन्मात्रग्राहिणः प्रत्यक्षस्य सच्चिदात्मकाखण्डब्रह्मग्राहित्वं नाद्वैतराद्धान्तः ॥

तत्र प्रत्यक्षागमयोर्नैकविषयत्वम्, न वा विरोधः। शास्त्रं यद्यपि प्रत्यक्षांशे सन्मात्रं न बाधते, तस्यापि बाधकज्ञानविषयत्वात्, विकल्पांशे तु शास्त्रं प्रत्यक्षस्य बाधकम्। प्रत्यक्षं तु सन्मात्रावगाह्यपि विकल्पांशस्य साधकम्, न तु बाधकम्। तत्र प्रत्यक्षमावृतं ब्रह्म गोचरयति। शास्त्रं त्वनावृतम्, यदखण्डमित्यनुपदमेवोक्तम् ॥

परमते तु "सन् घट" इत्यादौ नाधिष्ठानविधया सदनुवेधः, किन्तु घटादीनां भेदानां स्वरूपतः सत्त्वम, तस्य कालत्रयेऽपि ब्रह्मज्ञानेनाप्यबा ध्यत्वम्, भेदस्य सुनिरूपत्वं च मन्यते, इति तत्र न प्रत्यक्षागमयोरविरोधो विवक्ष्यते, इति तन्मतरीत्याऽद्वैतसिद्धान्ते प्रत्यक्षविरोधोऽनिवार्यः ॥

तत्र प्रपञ्चमिथ्यात्वे न शास्त्रस्य विरोधोऽद्वैतमतेऽपि। प्रत्यक्षस्यापि विकल्पांशेऽप्रामाण्येन तत्सत्यत्वाग्रहादिति खल्वद्वैतराद्धान्तः। अनुभूतीनां स्वरूपज्ञानातिरिक्तानामेव प्रागभावप्रतियोगित्व–साश्रयत्वसविषयत्वानेकत्वान्य-द्वैतमते, स्वरूपज्ञानस्य तु तद्विपरीतम् ॥

तत्र स्वरूपज्ञानस्याप्यहमर्थस्यानेकत्वमात्मनः परमत इति तु विशेषः। तत्रानुभूतिसत्स्वरूपयोरन्यथाऽनुवादेन, सच्चिदानन्दाखण्डस्वरूपस्य सच्चिद्रूपस्य चाभेदावलम्बनेन जन्यनित्यानुभूतीनामैकरूप्येणानुवादेन चाद्वैतमतनिरसन

परमार्थप्रकाशिकायाः, तद्विपरीतं वस्तुसदर्थविवेचनेन स्वमतरक्षणमद्वैतामोदस्येति वस्तुस्थितिः ॥

सर्वथा चिन्मात्रस्यानुभूतेः प्रागभावशून्यत्वमवचनसिद्धम् ; स्वरूपज्ञाननित्यत्वस्योभयसंप्रतिपन्नत्वात् । तस्य सामान्यरूपत्वेनोल्लेखस्तु सर्वत्रानुवर्तमानत्वमात्रेण । अतो लोकप्रसिद्धसामान्यविशेषभावाभावोऽकिंचित्करः ; तत्रानिर्भरादद्वैतामोदस्य । तदिदं सिद्धम्—यत् प्रागभावशून्या स्वप्रकाशा संवित् , अनुभूतिर्वेति ॥

अत एवेयं संविद् नित्या । नित्येतिपदेनात्र नानित्येति निषेधमुखेन सा ज्ञाप्यते । अतो नित्यत्वधर्ममादाय ब्रह्मणो न निर्विशेषत्वस्य हानिः ॥

एवमेव स्वप्रकाशादिपदान्यद्वैतमतरीत्या परप्रकाश्यत्वाभावपरतया व्याख्येयानि । यथा परमते धर्मभूतज्ञानं स्वरूपज्ञानम् , इति ज्ञानानां भेदः, एवमत्रापि जन्याजन्यादिभेदेनानुभूतीनां भेदात् तद्वारणार्थं नानित्येति विवरणम् । तेन चान्यासामनुभूतीनामनित्यत्वसाश्रयत्वसविषयत्वानेकत्वान्यद्वैतमतेऽपि न विरुद्धानि ॥

तत्र सर्वस्य कल्पितत्वेन मिथ्यात्वमसत्यत्वं वा ब्रह्मसाक्षात्कारदशामभिप्रेत्य । नित्यत्वानित्यत्वे तु तत्पूर्वक्षणावस्थामाश्रित्य । अनित्यत्वं हि घटादीनां दण्डादिना निवृत्तिमात्रेण, मिथ्यात्वं तु शुक्तिरूप्यादीनामिव बाध्यत्वमाश्रित्य । तत्रानुभूतीनां व्यवहारदशायामनित्यत्वम् , न तु स्वरूपज्ञानस्येति सूचयितुमेव नित्येति पदं नानित्येति विवृतम् । अयमेव न्याय. स्वप्रकाशपदार्थविवरणेऽपि ॥

तत्र जन्यानुभूतयो नित्यसंविन्मात्रानुभूतिप्रकाश्यत्वाद् न संविद्वत् स्वयंप्रकाशाः । स्वसजातीयप्रकाशान्तरानपेक्षप्रकाशत्वेन प्रदीपवत् सूर्यादिवद्वा स्वप्रकाशत्वं तु नानेन वार्यते । सूर्यादयोऽपि स्वप्रकाशा एवमेव । अत एव श्रुतिः—“ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽय-

मग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति। लौकिकानुभूतीनां स्वप्रकाशत्वं परप्रकाश्यत्वं चोक्तन्यायेनाविरुद्धम्। अमुमर्थं सूचयितुमेव स्वप्रकाशपदं परप्रकाश्यत्वाभावपरतया विवृतम्॥

सम्मतमिदं परमतेऽपि ज्ञानं नित्यमनित्यं चेति। तत्र स्वरूपज्ञानं नित्यम्, धर्मभूतं ज्ञानमनित्यमिति। तत्र धर्मभूतं ज्ञानमद्वैतमतेऽन्तःकरणादिवृत्तिविशेषः, परमतेऽप्यात्मापृथक्सिद्धम्, नित्यं च। परं तु तस्य संकोचविकासद्वाराऽनित्यत्वम्, अद्वैतमते तु साक्षात्। उभयत्र ज्ञानमुत्पन्नं नष्टमिति प्रतीतिः समाना। तत्र धर्मभूतज्ञानस्य नित्यस्यापि तत्प्रसरविशेषापेक्षस्योत्पत्तिविनाशव्यवहारः, स्वरूपतस्तु धर्मभूतज्ञानमपि नित्यमेव परमते। तत्र नित्यत्वमनित्यत्वं च रूपभेदेनैकस्योच्यमानं न स्वरसमित्यद्वैतामोदो वदति॥

परमार्थप्रकाशिका तु—घटत्वावस्थाया मृदि घटो जातो नष्ट इति व्यवहारवत् सकोचविकासावस्थापन्ने धर्मभूतज्ञाने तथा व्यवहार इति लिखति।

तत्र मृदि घटत्वावस्थायां यथा मृत् उत्पन्ना, नष्टेति न व्यवहारः, एवं सङ्कोचविकासावस्थायां सङ्कोचविकासावुत्पन्नौ नष्टौ वेति व्यवहार एव स्यात्, न तु धर्मभूतज्ञानोत्पत्तिव्यवहारौ, इति ज्ञानमुत्पन्नं नष्टमिति व्यपदेशो नोपपद्यते। न च मृदो घटात्मनेव जन्म धर्मभूतज्ञानस्य संकोचविकासात्मना परिणामोऽपि। कारणद्रव्यस्यावस्थाविशिष्टं द्रव्यं खलु तत्परिणामो नाम। न च संकोचविकासौ धर्मभूतज्ञानस्य द्रव्यस्यावस्थाविशेषो मृद इव घटः, न वा सङ्कोचविकासौ तत्परिणामावस्थाविशेषो नाम॥

न हि मृद्धट इतिवत् धर्मभूतज्ञानं संकोचो विकासो वेत्यनुभवः, व्यपदेशो वा। अन्यथा धर्मभूतज्ञानस्यैव संकोचविकासात्मना परिणामे कथं ब्रह्मपरिणामवादे ब्रह्मण इव धर्मभूतज्ञानस्यापि नित्यत्वम्? कथंतरां च देहपरिणामवादिनामार्हतानां मतनिरसनं परमते? इति कथमामोदोक्तरीत्या न निरन्वयविनाशो धर्मभूतज्ञानस्य?

किञ्च किं नामानुभाव्यत्वं ब्रह्मणः साध्यते परेण ? यदि ज्ञेयत्वम्, तर्हि किं तदपि वृत्तिविषयत्वमात्रम् ? उत वृत्त्यवच्छिन्नचिद्विषयत्वम्, अन्यद्वा । आद्य इष्टापत्तिः, घटादिवैलक्षण्यात्, वृत्तिविषयत्वस्य तुच्छसाधारण्येनाननुभाव्यत्वे गगनकुसुमादिवदसत्त्वप्रसङ्गादिति व्याहतम् । द्वितीयं तु नोरीक्रियते ॥

किंच परमतेऽपि स्वस्मै स्वयंप्रकाशमानस्यात्मनः किं वा धर्मभूतज्ञानेन प्रकाशकेन ? यदि बाह्यप्रकाशार्थम्, तर्हि बाह्यानामेवानुभाव्यत्वम्, न स्वयंप्रकाशस्यात्मनः, परमात्मनो वा । न हि धर्मभूतज्ञानप्रकाशार्थं धर्मभूतज्ञानान्तरमङ्गीक्रियते ; अनवस्थानात् । धर्मभूतज्ञानवदात्मन एव सङ्कोचविकासाभ्यां बाह्यप्रकाशोपपत्तौ किं धर्मभूतेन ज्ञानान्तरेण ? यद्यात्मनः सङ्कोचविकासाभ्युपगमेऽनित्यत्वापत्तिः, तर्हि धर्मभूतज्ञानमात्रे सा कथं वार्यते ?

तत्रानुभूतीनां सविषयत्वम्, संविदस्तु निर्विशेषत्वं स्वापमदमूर्छासु संविन्मात्रस्फुरणेनावगम्यते । जागरे संविन्मात्राननुभवस्तु तदा तस्याः सविषयानुभूतिसंबन्धात् ॥

यत्तु—तत्र पिशाचशशविषाणादिस्फुरणस्य तदानीं निषेधासंभवः—
इति,

तदिदं सुप्तोत्थितस्याहमिति संविद एवाहमनुवेधेन प्रतीतिवत् पिशाचादीनां प्रतीत्यभावाद् नोपपद्यते । न च संविद इव पिशाचादेः स्वप्रकाशत्वम् । स्वापादन्यत्रेतरानुवेधः, स्वापे तु तदननुवेधेन स्वतः स्फुरणकल्पना न विकल्पसहा । स्वापे हि संविन्मात्रस्य प्रतीतिरविद्यावृत्तिः, तत्संस्कारश्चाविद्योपहिते तत्र, इति न तत्र संस्काराश्रयानुपपत्तिः, न वा सुप्तोत्थितस्य "न किञ्चिदवेदिषमि"ति स्मरणानुपपत्तिः ॥

वार्तिकं तु "न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः" इति संविदंशेऽनुभव एव, अहङ्कारविषयाद्यंश एव तु स्मरणमिति प्रतिपादयति ।

सर्वथा तु निर्विषयसंवित्प्रकाशः स्वापादिषु दुर्निवारः, नैमित्तिके सति निमित्तानुसरणम्, न तु निमित्तमस्तीति नैमित्तिकारोप इति न्यायात्। संवित्सामान्यानुभवोऽस्तीति गमनादिक्रियासामान्यानुभवोऽपि न सुकल्पः। न हि संविदिव गमनादिकं स्वापे सर्ववृत्त्युपरमे स्वप्रकाशं प्रकाशत इति कल्पनागन्धोऽप्यवसरति ॥

तत्र "न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिरि"ति पक्षे स्वप्नजागरादौ पूर्वानुभूतस्य सुषुप्तौ लयं गतस्याहंकाराद्यंशे स्मरणमिति चेत्, स्वापादौ तदनुभवाभावेऽपि प्राचीनाहङ्काराद्यनुभवजनितसंस्कारोद्बोधात् तत्स्मरणोपपत्तिः ॥

अविद्यावृत्त्युपगमपक्षे तु संविन्मात्रेऽपि स्मरणमुपपद्यते, परन्तु प्रबोधदशायां न केवलं संवित् प्रकाशते, किन्त्वहङ्कारतादात्म्यापन्नैवानुभूयते। तत्राहमाद्यंशे पूर्वोक्तरीत्या स्मरणमुपपन्नमेव। अयमेव न्यायो विषयाद्यंशे स्मरणेऽपि। विषया हि संविन्मात्रानुभवेऽपि स्वापेऽज्ञानात्मनैवासन्, इति सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमिति सिद्धान्तादज्ञाततया साक्षिभास्याः स्वापे आसन्, इति तेषामपि स्मरणं न विरुध्यते। संस्काराधारस्त्वज्ञानोपहितः साक्षी प्राज्ञसम्परिष्वक्त इति न किञ्चिदनुपपन्नम् ॥

अयमत्र निष्कर्षः—जागरदशायां लौकिक्योऽनुभूतयः सविषया एव स्फुरन्ति, न निर्विषयाः। सुषुप्तिदशायां त्वविद्यावृत्त्या संविन्मात्रं स्फुरति। तत्र सुषुप्तौ संविद् निर्विषया, अविद्यावृत्तिस्तु जन्यानुभूतिः निर्विषयसंविन्मात्रविषया। तथाच न प्रबुद्धस्य तत्स्मरणानुपपत्तिः। को वा विप्रतिपद्यते—संवित् निराश्रया, निर्विषया च स्वापे न प्रकाशते, नानुभूयते वा? येन तत्स्मरणानुपपत्तिः। तत्रानुभवस्य, तत्संस्कारस्य चाश्रयोऽविद्योपहित आनन्दमयः प्राज्ञो जीव एव विलीनान्तःकरणादिरिति न किमपि छिन्नमद्वैतमते। तदेवं निराश्रया निर्विषया च संविदनुभूतिशब्दवाच्यैका, साश्रयसविषयजन्या

लौकिक्योऽनुभूतयश्चान्याः । तत्र प्रागभावादिशून्यत्वं प्रथमायाः, अपरस्यास्तु तद्विपरीतम् ॥

तथा निराश्रया निर्विशेषा चानुभूतिः प्रथमा निर्विकाराऽपि । विकारश्चात्र नाश एव । तत्रोत्पत्त्यभावसाधनेन नाशाभावोऽप्यर्थसिद्धः ॥

यत्तु—उत्पत्तिव्यतिरिक्तसत्कारणामुत्पत्तिव्याप्यत्वं न सभवति, प्रागभावेऽनुत्पन्नेऽपि विकाररूपनाशदर्शनादिति—श्रीभाष्यम्,

तत्राद्वैतामोदो वदति—तत्र प्रागभावस्य नाशो न विकारः; अवस्थान्तरप्राप्तिरूपविकारस्य प्रागभावे दुर्वचत्वात् । वस्तुतस्तु सत्कार्यवादे कारणभावापत्तेरेव विनाशरूपत्वाद् न प्रागभाव एव समस्ति, येन तत्रोक्तनियमो व्यभिचरेत्—इति ॥

तत्रेयं परमार्थप्रकाशिका—प्रागभाव पृथगङ्गीक्रियतां मा वा । विकारस्योत्पत्तिव्याप्यत्वं नास्त्येव, भावरूपेऽज्ञाने व्यभिचारात् । न च कारणरूपेण सत्त्वमेवोत्पत्ते प्राक् कार्यस्य, न तु प्रागभावोऽस्तीत्यपि युक्तम्, सद्भाववादेऽपि कारणरूपेण सत्त्वेऽपि कार्यरूपेणाभावात् प्रागभावस्यावश्यकत्वात् । न चैकान्तत प्रागभावानङ्गीकारोऽद्वैतमतेऽपि, अज्ञानानुमानादौ स्वप्रागभावव्यतिरिक्तेति विशेषणात् । स्वप्रागभावनाशस्यापि तद्रूपतया यत्किञ्चिद्विकारत्वस्यापि सम्भवाच्च—इति ॥

तत्रोत्पत्त्यभावेऽपि विनाशः किं नष्टमित्त्यनुभवानुपपत्त्या ? उतोत्पत्त्यतिरिक्तविकाराणामुत्पत्तिव्याप्यत्वनियमो नास्तीति मात्रेण ? आद्ये स्वरूपज्ञानस्य परमत इव नोत्पत्तिव्यवहारः, विनष्टव्यवहारो वा विद्यते । उक्तनियमो नास्तीति कृत्वाऽनादीनां सर्वेषां विनाशकल्पने ब्रह्मणोऽपि नाशकल्पनापत्त्या निरधिष्ठानकार्यवादापत्तिः, शून्यवादापत्तिर्वा । न चात्र संविद्रूपाया अनुभूतेर्नाशे किमपि प्रमाणमस्ति । लौकिकानुभूतीनां तूत्पत्तिरिव, विनाशोऽपीष्यत एव ॥

न चोत्पत्तिव्यतिरिक्तविकाराणामुत्पत्तिव्याप्यत्वनियमः परमतेऽपि; अनादेः प्रकृतेः परिणामिन्या अपि विनाशापत्तेः । अद्वैतिनं प्रति प्रकृतेर्ना-

शायोगित्वमनादित्वेन खलु परमते साध्यते। तच्च नाद्वैतदृष्ट्या; तत्रानादेरपि प्रकृतेः, जीवेशभेदादीनां च विनाशाङ्गीकारात् ॥

तत्राविद्यादिविनाशेऽनादित्वं न प्रतिबन्धकमित्यविद्यानिवृत्त्यनुपपत्त्या तन्नाशः स्वीक्रियते। न चायं न्यायः प्रकृते संविदि, स्वरूपज्ञानेऽपि वा, स्वरूपज्ञाननाशकाभावात्, तन्नाशाश्रवणाच्च ॥

ज्ञानमुत्पन्नं नष्टमिति परमते धर्मभूतज्ञानसङ्कोचाभिप्रायेण, अद्वैतमते त्वन्तःकरणधर्मभूतज्ञानाभिप्रायेणेति समानम्। अतोऽत्रोक्तनियमव्यभिचार-शङ्कादिकमप्राप्तकालम्, स्वव्याघातकं च ॥

आस्तामिदम्। कुत्र वाऽस्य नियमस्य व्यभिचारः? किं वाऽनुमानं तत्राभिप्रेत्य? तत्र यदि—अनुभूतिः, अविनाशिनी, अनादित्वादित्यनुमानस्य व्यभिचारः प्रागभावे, तर्हि भावत्वे सतीति विशेषणात्तत्परिहारः। अद्वैता-भिमताविद्या तु न भावरूपा, नाप्यभावरूपा, किन्तु भावाभावविलक्षणेतीष्ट-सिद्धिचित्सुख्यद्वैतसिद्ध्यादावुक्तम्, इति न तत्रोक्तहेतोर्व्यभिचारः ॥

अत्रानुभूतिपदेन लौकिकानुभूतिविवक्षणे तु न तत्र साध्यम्, न वा हेतुः, इति बाधासिद्धी। भावरूपमज्ञानं ब्रह्मणः शक्तिरूपं ब्रह्माभिन्नं च ब्रह्मवन्न नश्यतीति ब्रह्मपरिणामवादः, इति तन्मतरीत्या वा भावरूपेऽज्ञाने व्यभिचारपरिहारः ॥

यद्यपि मतद्वयविरुद्धो ब्रह्मपरिणामवादः; तथापि भवन्मतेऽपि प्रकृतेरेव मायात्वात् तस्या एवावरणशक्त्याधिक्यमात्रेणाद्वैतिभिरविद्यात्वस्वीकाराद् भवन्मतरीत्याऽपि तत्र न व्यभिचारः। अद्वैतमतरीत्यैव व्यभिचारोद्भावने तु तत्र भावाभावविलक्षणत्वस्यैव स्वीकाराद् न तत्र व्यभिचारः। भावरूपाज्ञानस्य ब्रह्मशक्तित्वपक्षनिरासस्त्वद्वैतिनामपि संमतः। न चात्र भावरूपाज्ञानसान्तत्वे विप्रतिपत्तिः, केवलं तद्भावरूपत्वमात्रे। अविद्यानुमानं त्वज्ञानस्याभावव्यतिरिक्त-त्वमात्रं साधयति, न त्वज्ञानमपीत्यन्यत्र व्यक्तम् ॥

तत्र ब्रह्मणोऽज्ञानव्यतिरिक्तत्वनित्यत्वैकत्वस्वयंप्रकाशत्वादयः पूर्वोक्तरीत्याऽनित्यत्वादिनिषेधरूपाः, भावरूपत्वेऽपि तद्विषमसत्ताका एव, इति न निर्विशेषत्वहानिः, ब्रह्मसमसत्ताकविशेषाभावस्यैव निर्विशेषपदार्थत्वात्। अनित्यत्वाद्यभावानां कल्पितं धर्मत्वमादाय धर्मधर्मिभावव्यवहारोऽधिकरणरूपत्वेऽप्यभावस्य ॥

तत्राभावस्याधिकरणात्मत्वमभावत्वोपलक्षितरूपेण, न तु तद्विशिष्टेन रूपेण, येनाभावत्वधर्मेण सविशेषत्वमापद्येत, अभाववद् ब्रह्मणोऽपि सप्रतियोगिकत्वं वा स्यात्। संविदि घटो नास्तीति प्रतीतिस्तु विशिष्टप्रतीतिदशायामेव, अन्यथा भूतले घटो नास्तीत्यादावपि कथं निर्वाहोऽभावस्याधिकरणात्मत्वे? कथं वा भूतलमभाव इति न प्रतीतिः?

एतेन—अभावत्वमात्रं तत्र स्वीक्रियते, न भूतलमभाव इति—परास्तम् ॥

सत्यभावेऽभावत्वमभावत्वस्य कल्पितत्वेन वा, अभाववत् तस्य सत्यत्वेन वा? आद्ये ब्रह्मण्यभावत्वधर्मस्वीकारेऽपि न निर्विशेषत्वस्य हानिः। द्वितीये कथं भूतलं नाभावोऽपि, सप्रतियोगिकश्च? इदमेवाभिप्रत्योक्तम्—अभावत्वोपलक्षितरूपेणाधिकरणस्याभावरूपत्वमिति। तत्र लौकिकानुभूतीनां सविषयकत्वादिकं संविन्मात्रस्य सविषयकत्वादावकिञ्चित्करम् ॥

अत एव संविद्रूपेणात्मनामेकत्वमित्यद्वैतसिद्धान्तः। तत्र स्वरूपज्ञानं हि साक्षान्निर्विषयमिति सम्प्रतिपन्नम्। धर्मभूतज्ञानद्वारा सविषयकत्वं त्वौपाधिकम्, न स्वाभाविकम् ॥

"अर्थेनैव विशेषो हि निराकारतया धियाम्" इति तु लौकिकजन्यानुभूतिविषयम्, न स्वरूपज्ञानविषयम्, इति स्वरूपज्ञानात्मकस्य संविन्मात्रस्य निर्विषयत्वे का वा बाधा?

यत्तु—यदि संविदमेकामभ्युपगम्य तत्राधारस्य ग्राह्यस्य बाह्यस्य च कल्पितत्वं कल्पयसि, नूनं प्रपञ्चापलापिनं बौद्धं प्रति प्रयुक्ताद् दूषणाद् न निस्तारः—इति ॥

तत्र सौगतनये प्रवृत्तिविज्ञानस्य ज्ञानाकारातिरिक्तविषयाकारानभ्युपगमात्, सत्यं तदतिरिक्तग्राह्याद्यभावः, अद्वैतमते तु परमत इव सौगतप्रवृत्तिज्ञानस्थानीयलौकिकानुभूतीनां सविषयकत्वम्, लौकिकपारमार्थिकत्वम्, ज्ञानाकारातिरेकेणार्थसत्त्वं च स्वीक्रियते, एवं लौकिकानुभूतिव्यतिरेकेण परमत इव स्वरूपज्ञानान्तरमपि स्वीक्रियते, इति परमत इव न प्रपञ्चापलापः, किं तु ब्रह्मसाक्षात्कारानन्तरभाविनं शास्त्रसिद्धं प्रामाणिकमभावमादाय परमार्थतस्तदभाव उच्यते। क्षणिकप्रवृत्तिविज्ञानविलक्षणार्थाकारलौकिकानुभूतिस्वीकारे, तदतिरिक्तबौद्धाभिमतक्षणिकविज्ञानातिरिक्तस्वरूपज्ञानात्मस्वीकारे च विशिष्टाद्वैतमतादद्वैतस्य न कोऽपि विशेषः—स्वरूपज्ञानस्यैवाहमर्थत्वतदनर्थत्वज्ञातृत्वाज्ञातृत्वैकत्वानेकत्वादिरूपं कञ्चन विशेषमपहाय ॥

तत्र स्वरूपज्ञानस्याहमर्थत्वम्, ज्ञातृत्वम्, अनेकत्वं च यद्यप्यद्वैतिनोऽप्यनुमन्यन्ते, परन्त्वौपाधिकम्, न तु स्वाभाविकमिति। परे तु तत्स्वाभाविकमिति। तत्राद्वैतमत उपपत्तयो यथावसरं प्रदर्शयिष्यन्ते। साम्प्रतं तु निराश्रयत्वं निर्विषयत्वं च सिद्धवत्कृत्य संविन्मात्रस्यात्मत्वम्, तदेकत्वं च साधयितुमेव प्रवृत्तिः ॥

तत्राहमर्थः—अन्तःकरणसंवलिता संवित्, न संविन्मात्रम्, न वाऽन्तःकरणमात्रम्। तत्राहं जानामीत्यादौ ज्ञातृतया स एवात्मा भासते। स च मिथ्यात्मा, न मुख्यात्मा। मुख्यात्मा तु संविन्मात्रम्। एतदर्थमेव ह्यध्यास भाष्यं भगवत्पादानाम्। तत्र संविन्मात्रेऽध्यस्तमन्तःकरणम्, तत्तादात्म्यप्रयुक्तवृत्तिरूपं ज्ञातृत्वं च मुख्यात्मनो बन्धः, तन्निवृत्तिश्च मोक्षः, बन्धमोक्षयोरात्मनाऽसम्बन्धः, अन्यस्य बन्धोऽन्यस्य मोक्षश्च, अन्तःकरणस्य ज्ञातृत्वमित्या-

द्युक्तिस्त्वामोदस्य वस्तुत आत्मधर्मत्वाभावमभिप्रेत्य, गुहाधिकरणपूर्वपक्षन्याय-मात्रमनुसृत्य च, इति न शास्त्रवैयर्थ्यम् ॥

वस्तुतस्त्वमहमर्थात्मधर्मत्वं तु "यथाच तक्षोभयथा" इत्यत्र गुहाधि-करणे च सिद्धान्ते च निर्णीतमेव । न च परमतेऽप्यहमर्थधर्मत्वमेव ज्ञातृत्वा-देरित्यत्र विप्रतिपत्तिः—अहमर्थमुख्यानात्मत्वमपहाय ॥

तत्र को वा विप्रतिपद्यतेऽहमर्थात्मतायाम्, विप्रतिपत्तिस्तु तस्य मुख्यात्मतायामेव । न चान्तःकरणमात्मेत्यद्वैतिनोऽपि स्वीकुर्वन्ति । निरस्तं चान्तःकरणादेः करणस्यात्मत्वमध्यासभाष्यभूमिकायां विस्तरेण भामत्याम् । गुहाधिकरणसिद्धान्तोऽप्ययमेव । अत एवात्मानौ इति द्विवचनम् ॥

अद्वैतामोदोऽपि — "न च व्यावहारिकास्मदर्थत्वमन्तःकरणे स्वीकुर्मः, परन्त्वस्मदर्थप्रतिकोटिभूतयुष्मदर्थविलक्षणधीविशेषसिद्धत्वरूपयुष्म-दर्थाक्रान्तत्वादन्यादृशास्मदर्थत्वमात्मनीष्यते" इति वदन् युष्मदर्थान्तःकरण-तादात्म्याध्यासप्रयुक्ताहंप्रतीतिविषयस्य युष्मदर्थान्तःकरणातिरिक्तस्यात्मानात्म-शबलितस्यैवाहंप्रतीतिविषयत्वम्, आत्मत्वं चामुख्यं स्वीकरोति, न त्वन्तः-करणमात्रस्य युष्मदर्थस्य । न चेदं व्यावहारिकास्मदर्थविलक्षणं परमार्थप्रकाशि-कोक्तरीत्या ॥

द्विविधो ह्यस्मदर्थोऽहंप्रतीतिविषयः—एकोऽहमिति प्रतीतावधिष्ठान-तयाऽहंप्रतीतिकाले स्वयं प्रकाशमानः, अपरश्च विशिष्टोऽहमर्थः । तत्राद्यो मुख्यः, द्वितीयस्तु मिथ्यात्मा, अमुख्यात्मा वा ॥

तत्र संविन्मात्रस्याहमर्थत्वं त्वधिष्ठानतयाऽन्तःकरणतादात्म्याध्यासाच्चौ-पचारिकम् । विशिष्टस्य तु मुख्यम् । न हि लोकसिद्धोऽहमर्थ एव मुख्यात्मा ; 'अहं गौरः' इत्यादिप्रतीत्या, 'अहं पश्यामी' त्यादिलौकिकप्रतीत्या च शरीरेन्द्रियादीनामपि व्यावहारिकास्मदर्थानां मुख्यात्मत्वापत्तेः । तत्र यद्य-

नात्मन्यात्माध्यासमात्रम्, तर्हि प्रकृतेऽपि समानम्; विशिष्टस्य व्यावहारिकस्याहमर्थस्याप्यौपाधिकस्यानात्मत्वेन तत्रात्माध्यासप्रयुक्तमेवात्मत्वमिति स्वीकारेणाहमर्थस्य मुख्यात्मत्वायोगात् ॥

तत्र युष्मदस्मत्प्रत्ययगोचरयोरिति भाष्ये युष्मदर्थोऽन्तःकरणम्, न तु सम्बोध्यः; परमतेऽपि सबोध्यस्य देवदत्तादेः सशरीरस्यानात्मनः संबोध्यत्वात्। न हि परात्मा पुरतोऽस्ति स्वस्य प्रत्यक्षः, येन तस्य संबोध्यत्वं स्यात्। तत्र यदि संबोध्यैकदेशत्वात्संबोध्यत्वम्, तर्हि अन्तःकरणस्यापि तत् समानम् ॥

वस्तुतस्तु—इदमस्मत्प्रत्ययगोचरयोरित्येवात्र विवक्षितम्। युष्मदर्थत्वोक्तिस्त्वन्तःकरणस्यानात्मत्वं सूचयितुमिति भामत्यादौ व्यक्तम्। न च विशिष्टोऽहमर्थो मुख्यो युष्मदर्थः; अन्तःकरणमात्रस्य तत्त्वात। दृग्दृश्ययोरित्येवात्र विवक्षितमिति तु न्यायरत्नावळी, याऽन्तःकरणस्य प्रतिभासतोऽहमर्थत्वेऽपि दृश्यत्वेनानुमानिकं युष्मदर्थत्वमिति वदन्ती—'युष्मदस्मत्प्रत्ययगोचरयोरि'तिपदं दृग्दृश्यपरं व्याचष्टे ॥

न चाहं जानामीति प्रतीतिसिद्धो ज्ञाता युष्मदर्थ इत्यद्वैतसिद्धान्तः, किन्त्वन्तःकरणमेव युष्मदर्थः ॥

येन—'अहं जानामी'ति प्रतीतिसिद्धो ज्ञाता युष्मदर्थ इति वचनं जननी मे वन्ध्येतिवद् व्याहतार्थमेवेति परमार्थप्रकाशिका—सावसरा स्यात्।

तत्र ज्ञाताऽहमर्थः, अन्तःकरणं तु नाहमर्थो ज्ञाता वेति ह्यद्वैतामोदोऽभिप्रैति ॥

सति चैवमहमर्थो विशिष्टो नात्मा, किन्तु तत्राधिष्ठानतया प्रतीयमान एवात्मा। प्रत्यक्त्वमपि तस्यैव। तत्तादात्म्याद् विशिष्टस्यापि प्रत्यक्त्वोपचारमात्रम् ॥

प्रत्यक्त्वं च 'अहंप्रतीतिविषयत्वम्। तत्र प्रतिभासमानस्यैकस्यैव, नानेकेषाम्। तच्चाधिष्ठानात्मना भासमानस्य संविन्मात्रस्यैव, न विशिष्टस्य, न

वा तत्र विशेषणतया तत्तादात्म्याश्रयस्यान्तःकरणस्य; अन्यथा शरीरादेरपि प्रत्यगात्मत्वप्रसङ्गः। आत्मनि भासमाने स्वप्ने शरीरप्रतीत्यभावात्, जागरेऽपि शरोरादेरहंप्रतीतिविषयत्वाभावाच्च यदि नात्मत्वम्, तर्हि स्वप्नेऽपि मनसोऽहं-प्रतीतौ भानात् तदप्यहमर्थः स्यात। सुषुप्तावात्मनि प्रतिभासमानेऽन्तःकरणा-देरसत्त्वात्, तस्य तदाऽभानाच्च यद्यनात्मत्वम्, तर्हि सुषुप्तावात्मनि भास-मानेऽप्यहंप्रतीत्यभावात् नाहमर्थः प्रत्यगात्मा, किन्तु संविन्मात्रमेव स इति सिद्धम् ॥

ततश्च, आत्माऽहमर्थ एव, प्रत्यक्त्वादित्यनुमानस्य सौषुप्तात्मनि बाधः। अहमर्थत्वं ह्यहंप्रतीतिविषयत्वमेव। तच्च सौषुप्तात्मनि नास्तीति नाहमर्थः प्रत्यगात्मा। प्रत्यक्त्वं स्वप्रकाशत्वम्। तत्तु संविन्मात्रस्याधिष्ठानस्यैव। एतेन—जीवे प्रत्यगात्मव्यवहारोऽपि—व्याख्यातः, तस्यान्तःकरणादिसंबन्धरहित-शुद्धप्रत्यगात्मविषयत्वात् ॥

यत्तु—प्रत्यक्शब्दार्थः सर्वव्यापित्वमित्यामोदः, तदपि संविन्मात्रस्यैव सर्वत्र सद्रूपेणानुवेधात् न विरुद्धम्। न चाविद्यापि सर्वत्रानुगतरूपेण प्रतीयते, संविद्वद् व्यापिनी च। सर्वव्यापित्वं ह्यधिष्ठानविधयाऽनुवर्तमानत्वम्। तच्च संविद्रूपे त्वंपदलक्ष्येऽप्यविशिष्टम्। संविन्मात्रस्य सर्वत्र व्याप्तिः—"तदनुप्रविश्य सच्च त्यच्चाभवत्" "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"त्यादि श्रुतिसिद्धं संविन्मात्रे वर्तते। संविन्मात्रमेव जीवस्येश्वरस्य च परमार्थम्। अहमादिपरिच्छिन्नरूपेण भानं तु परिच्छिन्नतादात्म्याध्यासमात्रेण। अतो व्यवहारदशायां जीवस्य सर्वव्यापित्वाज्ञानं न तस्य सर्वव्यापित्वं पारमार्थिकं विरुणद्धि ॥

यत्तु—"अहमिति प्रत्यगात्मनि भावात् परत्राभावाद् अर्थान्तरप्रत्यक्षः" इति काणादसूत्रम्, तत्र यत्—अहमिति प्रत्ययस्य प्रत्यगात्मनि स्वात्मनि भावात् परत्र परात्मन्यभावादिति शङ्करमिश्रविवरणम्, तदिदं "एतेन

शिष्टापरिग्रहा अपि व्याख्याताः" इति बादरायणनिरस्तप्रस्थानाभिप्रायं न वेदान्तार्थनिर्णय उपकरोति ॥

इदं हि सूत्रं व्याचक्षाणा परमार्थप्रकाशिकाऽपि—

स्वदेहस्येव परदेहस्यापि प्रत्यक्षत्वात् तत्राप्यहंप्रत्ययापत्ति । अतो देहादिभ्योऽर्थान्तरमस्य विषय । तत्रापि प्रत्यक्षाप्रत्यक्षत्वविमर्शेन देहाद्यति-रिक्तात्ममात्रविषयकत्वस्वीकारे परमात्मन्यहंप्रत्ययापत्ति , प्रत्यक्षभूतार्थान्तर-विषयकोऽहंप्रत्यय इत्युपसंहरन्ती च परमात्मन परोक्षस्याहंप्रत्ययाविषयत्वं विवेचयति ।

इदं च स्वसिद्धान्तविरुद्धम् । मुख्यमहंप्रत्ययविषयत्वं सर्वात्मनः परमात्मन एवेति हि तत्सिद्धान्तः । अतो नोक्तं सूत्रं प्रमाणमात्मस्वरूपनिर्णय इति सम्प्रतिपन्नम् ; अन्यथा आत्मविभुत्वस्य, तत्स्वरूपज्ञानत्वाभावस्य स्वतोऽचेतनत्वस्य च काणादाभिमतस्यापि स्वीकारापत्तिः ॥

वस्तुतस्तु—नेदं काणादसूत्रमद्वैतमतविरुद्धम् । तत्र हि—अहमिति प्रयोगः स्वान्तःकरणतादात्म्यापन्ने संविन्मात्र एव, नान्तःकरणादितादात्म्यापन्ने । तत्र संविन्मात्रस्य प्रत्यक्त्वेऽपि अहमितिप्रयोगो नान्यत्र ॥

इदं हि सूत्रं परमात्मनोऽपि प्रत्यगात्मत्वं निषेधतीति जानन्त्यपि परमार्थप्रकाशिका कुतः स्वसिद्धान्तोपष्टम्भार्थमुपन्यस्यति ? यद्यद्वैतामोदस्य, अद्वैतसिद्धान्तस्य वा खण्डनमात्रं स्वहत्यामपि तृणवत्कृत्य लक्ष्यं मत्वा, तर्हि चित्रम् । न चानेनाद्वैतामोदस्याद्वैतस्य वा वधः, किन्तु स्वस्यैव हत्येति विज्ञाय स्वयं सन्तुष्यतु परमार्थप्रकाशिका ॥

तत्र युष्मत्प्रत्ययविषयपरागर्थवैलक्षण्येन प्रत्यगात्मेति व्यवहारोऽस्मत्प्रत्ययविषयत्वनिबन्धन इति सम्प्रतिपन्नम् । स च संविन्मात्रानुबन्धी, न तु संविदसंवित्संवळिताहमर्थसंबन्धी, अन्तःकरणमात्रानुषङ्गी वा; संविन्मात्रस्याप्यन्तःकरणानुषङ्गप्रयुक्त्यैव, नान्यथेति ह्यद्वैतसिद्धान्तः । तेन च परात्मनि नाहं-

प्रत्ययव्यवहारोऽद्वैतदृष्ट्याऽपि । परात्मा हि तदीयान्तःकरणान्तरानुषङ्गेणैवाह-मिति स्वात्मानं प्रत्येति । तत्र—

"अहंबुद्ध्या परागर्थात्प्रत्यगर्थो हि भिद्यते"

इति श्रीभाष्यकारोक्तिस्त्वहंप्रतीतिविषयत्वमात्रं प्रत्यगर्थत्वं मन्यते । इदं तु तद्दृष्ट्या, नाद्वैतदृष्ट्या, इति परमार्थप्रकाशिकोक्तरीत्या नात्र मतद्वयस्यापि संप्रतिपत्तिः । संविन्मात्रस्यास्मत्प्रत्ययविषयत्वम्—"नायमेकान्तेनाविषयः ; अस्मत्प्रत्ययविषयत्वादि"ति भगवत्पादीयं भाष्यम्—आत्मनोऽहंबुद्धिविषय-त्वाभावः, अन्तःकरणमात्रस्य तद्विषयत्व इदमुल्लेख एव स्यात् , नास्मदुल्लेख इति परमतेन, इति भामतीकल्पतरुविवरणप्रसङ्गेन विवृतम् । तदाशयस्तु भामत्युक्त-रीत्याऽहमध्यासात्पूर्वं विन्मात्रस्य विषयत्वाभावेऽप्यहमध्यासकालेऽधिष्ठानतया संविन्मात्रभानं वर्तते । सति चैवं भ्रमज्ञानेऽधिष्ठानस्य वृत्त्या पूर्वं प्रकाशो न नियतः, स्वरूपप्रकाशमात्रेणालम् । वृत्तिविषयत्वं भ्रमकालीनेनापि वृत्तिविषय-त्वेन निर्वहतीति । व्यक्तं चेदं कवितार्किकचक्रवर्तिमतनिरूपणावसरेऽन्यत्र ।

परमार्थप्रकाशिका तु—अन्तःकरणमात्रस्याहमर्थत्वं निषेधति । इदं तु संविन्मात्रस्यापि समानम् ॥

अयं हि सन्दर्भोऽहमर्थं विवेचयति, न तु तस्यैव प्रत्यक्त्वमपि । प्रत्यक्त्वं तु सविदन्तरानपेक्षप्रकाशत्वरूपं संविन्मात्रस्य । अधिकं तु जडत्वनिरुक्तौ लघु-चन्द्रिकादौ व्यक्तम् । न चाहमर्थस्यैवंविधं स्वप्रकाशत्वम् , किन्तु संविन्मात्रस्य । तदनुषङ्गात्तु विशिष्टस्याहमर्थस्यापि प्रत्यक्त्वोपचारः ; नियमेन भासमानत्वाच्च । न चैतद्घटादिसाधारणमित्याद्यन्यत्र व्यक्तम् । अयमेवाद्वैतराद्धान्तः ॥

स्वस्मै प्रकाशमानत्वं स्वाश्रयं प्रति प्रकाशमानत्वं वा स्वप्रकाशत्वं स्वरूपज्ञानविषयं धर्मभूतज्ञानविषयं च नाद्वैतिनां सम्मतम् । न चाद्वैतमते स्वरूपज्ञानं फलि ; निर्विशेषसंविन्मात्रत्वात् । सर्वथा तु परमार्थप्रकाशिकाया

अद्वैतसिद्धान्तस्यान्यथाविवरणेनाद्वैतसिद्धान्तविरुद्धं संविन्मात्रप्रत्यक्त्वम् , अहमर्थस्यैव प्रत्यक्त्वं चेति सविस्तारमुपपादनं बालक्रीडितमेव ॥

तत्राद्वैतमते संविन्मात्रस्याहंप्रत्ययविषयत्वं ह्यन्तःकरणतादात्म्याध्यासेन, न तु स्वरूपतः, इति नाहमर्थो वस्तुगत्या प्रत्यगात्मा, किन्तु स्वरूपज्ञानम् । तत्र प्रत्यक्त्वं संविन्मात्रम् , अहंप्रत्ययविषयत्वं तु नाधिष्ठानसंविन्मात्रस्य, न वाऽन्तःकरणमात्रस्य, किन्तु विशिष्टस्यैव परस्परतादात्म्याध्यासनिष्पन्नस्येति तु तत्त्वम् । तेन चाहंप्रत्ययो न निरालम्बनः—अन्त.करणमात्रस्य, संविन्मात्रस्य वाऽहंप्रतीतिविषयत्वाभावेऽपि ॥

तत्राहंत्वमन्तःकरणतादात्म्यापन्नचिद्रूपत्वम् । तस्य ज्ञातृत्वम् , हानोपादानादिकर्तृत्वं तत्तत्फलभोक्तृत्वं चौपाधिकम् , न परमत इव स्वाभाविकम् । स्वयंप्रकाशत्वं तत्र सविन्मात्रस्य, नाहमर्थस्य परमत इव, इति नाहंप्रत्ययविषयत्वबलसिद्धं प्रत्यक्त्वम् ; संविन्मात्रे तस्य बाधितत्वात् । सति चैवं—अतोऽहंप्रत्ययविषयत्वबलसिद्धं प्रत्यक्त्वं स्वीकृत्याहंप्रत्ययविषयत्वस्याहमर्थत्वस्य चा स्वीकारोऽप्रामाणिको दुःशकश्चे''त्यादि स्वकल्पनामात्रसिद्धाद्वैतसिद्धान्तस्यैव निरासः, न तु वस्तुसदद्वैतसिद्धान्तस्य ॥

"अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् " ॥

इति स्वगोष्ठीगर्जितं नाद्वैतिनां भीषणतामर्हति ॥

न च मुख्यात्माऽहमर्थः, किन्त्वहंभावापन्नं चैतन्यमेव । तच्चाहंभावस्य कल्पनया । अत एव छान्दोग्ये—"अथातोऽहंकारादेशः" इत्यस्मात्परम्—"अथात आत्मादेशः" इत्यहमर्थात् परमात्मोपदेशः, अन्यथा तदुपदेशवैयर्थ्यम् । तत्राहङ्कारोऽन्तःकरणं वा भवतु, महत उत्पन्नमहंतत्त्वं वा तस्य प्रकृतिविकृतिरूपस्य, विकृतिमात्रस्य वाऽनात्मत्वे तु न विवादः । अन्तःकरणतादात्म्यापन्नोऽहमर्थोऽहंतत्त्वतादात्म्यापन्नो वाऽहमर्थ इति प्रस्थानभेदमात्रम् , नात्र सिद्धान्तापसिद्धान्तकथाया अवसरलेशोऽपि ॥

न हि प्रस्थानभेदः मुख्यसिद्धान्ताविरोधी कोऽप्यपसिद्धान्तो नाम। न ह्यद्वैतामोदोऽप्यन्तःकरणं महत्तत्त्वं चैकमभिप्रैति, येन सिद्धान्तविरोधः स्यात्। सात्त्विकतन्मात्रभूतकार्यमन्तःकरणम्, अहंतत्त्वमहंकार इत्येव तस्यापि सिद्धान्तः। जीवोपाधित्वमहंतत्त्वस्य वा, अन्तःकरणस्य वेति प्रस्थानभेदः। अतो नात्रापसिद्धान्तकथावसरः। अहमर्थात्माऽहंतत्त्वतादात्म्यापन्नो वा भवतु, अन्तःकरणतादात्म्यापन्नो वा। उभयथापि औपाधिकस्सः, न मुख्यात्मा। अन्यस्यान्यतया भानमध्यासनिबन्धनमनात्मनि शरीर आत्मतादात्म्याध्यासेन दृष्टचरम्, दृश्यते च। शुक्तौ रजताध्यासे दोषो निमित्तकारणमात्रम्। न च तत्र शुक्तिरजतयोरिव तद्दोषयोरपि तादात्म्याध्यासः। तादात्म्याध्यासस्थलेऽन्यत्रान्यभावस्य अन्यभानस्य च नियमो न व्याहतः। सर्वथा तु नाहमर्थः स्वाभाविकात्मा, किन्त्वौपाधिक एव॥

तच्चाहमर्थत्वं पूर्वोक्तविधयाऽहंतादात्म्यापन्नचिन्निष्ठम्, न तु केवलात्मनिष्ठम्, न वा केवलान्त करणनिष्ठम्। स्थूलोऽहं गौरोऽहमित्यादिप्रत्यक्षं त्वहमवच्छिन्नचैतन्य एव स्थूलादिविशिष्टशरीराध्यासेन, न त्वन्तःकरणगताहमर्थत्वस्य देहादावारोपेण, येन देहात्मताभ्रमो न स्यात्। अहं जानामीत्यादि त्वन्तःकरणधर्मवृत्तिज्ञानस्यात्ममि धर्माध्यासविधयाऽऽरोपेण। यथाऽयो दहतीत्यादौ दग्धृत्वाश्रयवह्नितादात्म्याध्यासादयो दहतीति व्यवहारः, तथा वृत्तिमदन्तःकरणतादात्म्याध्यासादेव ह्यहं जानामीति व्यवहारः। न चाद्वैतिनोऽहमर्थ आत्मेति वदन्ति, येन तत्कल्पना निर्मूला स्यात॥

तत्रात्मनो बन्धो क्रियादुःखादिमदन्तःकरणतादात्म्याध्यासेन, यथा स्वप्ने व्याघ्रादितादात्म्याध्यासेनाज्ञाननिबन्धनेन, तत्त्वज्ञानेन तु मोक्ष इति का वाऽनुपपत्तिरद्वैतमते बन्धमोक्षयोः? वस्तुगत्या तु न बन्धो न मोक्षः।

"न विरोधो न चोत्पत्तिर्न बन्धो न च मुक्तता॥"

इति हि तत्त्वविदः। दृष्टचरौ च मिथ्यासर्पदष्टस्य बन्धमोक्षौ ज्ञानाज्ञाननिब-

न्धनौ। आरोपितं ज्ञातृत्वकर्तृत्वभोक्तृत्वादिकमेव बन्धः, निर्विशेषज्ञानेनाज्ञात-तद्भावापत्तिरेव मोक्ष इति तु तत्त्वम् ॥

अहंनाशे मुक्तिरिति हि कनकदासः। तत्र चैत्रः सत्यपि पाण्डित्ये मूढतया गृह्यमाणः, सत्यम्, स्वयं मूढमात्मानं मन्यते मूढमैत्रतादात्म्याध्यासेन। दृष्टं च पुत्रमात्मतया, स्वामितया वा गृह्णानस्य गौणात्मनोऽपि दुःखे तदभिमानिनो दुःखादि, इति स्थिते किमु वक्तव्यम्—अन्तःकरणतादात्म्यमात्मन्यध्यस्य तदात्मतयैवात्मानम्, विना भेदग्रहलेशं मन्यमानस्य तदीयदुःखेन सुखेनान्येन वाऽऽत्मनि सुखादौ ॥

एवमेव हि बन्धमोक्षयोरुपपादनम्। तत्र बन्धो मिथ्या, मोक्षः सत्यः। बन्धसत्यतायां तु तस्य मोक्षः कथं निदिध्यासनेन, अन्येन वा? न हि शृङ्खलाबद्धो परमात्मध्यानमात्रेण विनाऽन्येन तद्बन्धविनिर्मोकेण ततो मुक्तो भवति। गरुडोपासकेनापि मन्त्रपठनपूर्वकं पत्रविशेषादिना सर्पदष्टभागताडनादिकं विना विषापनयनं न दृश्यते ॥

सत्यं हि ज्ञानमात्रेण न निवर्तते, असत्यं वा नोपासनमात्रेण। आत्मन्यहंत्वस्यारोप एव बन्ध इति पक्षे, आत्मस्वरूपसाक्षात्कारमात्रेण बन्धनिवृत्तिः सूपपादा; तन्निबन्धनदुःखादीनामपि तत एव निवृत्तेः ॥

अहंत्वारोपेणैवात्मन्यहन्त्वम्, न तु स्वयम्, अन्यथा कथं सुषुप्तावपि तथाऽऽत्मनो न भानम्? किं सुषुप्तावात्मा नास्त्येव? सति चैवमहमनुभवमनुरुध्याहमेवात्मेति इष्यताम्। परं त्वन्तःकरणाध्यासनिबन्धनमेवाहंत्वम्। सुषुप्तौ त्वन्त.करणलये स्वरूपेणात्मा भासते, अन्तःकरणं स्वकारणाविद्यात्मना वर्ततेऽनभिव्यक्ततया। अत एव सुषुप्तिमात्रेण न मुक्तिः; अज्ञानस्य कारणशरीरस्य तदा सत्त्वात्। तत एव हि प्रबोधेऽभिव्यक्तान्तःकरणतादात्म्यादात्मनोऽहंरूपेण भानमिति व्यवस्था ॥

तत्र यथा जपाकुसुमनिर्मोके लोहितः स्फटिक इति बुद्धिर्निवर्तते, एवमन्तःकरणनिर्मोके स्वरूपेण चिदात्मा प्रकाशतेऽहमिति सुष्ठु लगति ॥

परमार्थप्रकाशिका तु पृच्छति—स्फटिकनिर्मोकवत् किमन्त करण-निर्मोकेऽप्ययमहमित्युल्लिख्यते वा न वेति ॥

तत्रेदमेवोत्तरम् — यत्स्फटिकनिर्मोकवदधिष्ठानात्मस्वरूपनिर्मोको न भवति, न वाऽन्तःकरणमात्रमहमिति । एवमिदमध्यासेनात्मन इदंत्वम्, न त्वहंत्वम् । अत एवाम्नायते—"सदेव सोम्येदमि"ति, न तु सदेवाह-मिति । न हीदमिति घटपदादिकं सर्वमेकम् ॥

अनेन न्यायेन—"बहु स्यां प्रजायेये"त्यत्रापि मायापरिणामाहमाकार-वृत्त्यैवाहमिति प्रतीतिरुपपादनीया। न हीश्वरोऽप्यहमर्थः ; "अहं ब्रह्मास्मी"ति सामानाधिकरण्यानुपपत्तेः । सत्यम्, मायायां मूलप्रकृतिरूपेण नाहंत्वमस्ति ; तथापि तत्प्रकृतिमहत्तत्त्वस्य परम्परया तत्परिणामसात्त्विकपञ्चभूतस्य वा माया-त्वेनैवाहंकारान्तःकरणादिकारणत्वात् समष्ट्यहंकारान्तःकरणतादात्म्यस्यापि सत्त्वात्, किं बहुना? सृष्टेः प्राक् सर्वेषां मूलप्रकृतिरूपमायात्मनैवावस्थानात् मायापरिणामाहमाकारा वृत्तिरीश्वरे न विरुद्धा ॥

यत्तु—न हि "बहु स्यामि" ति सङ्कल्पकाले मायायामहङ्कार उत्प-न्नोऽस्ति, इत्यद्वैतमते नेश्वरस्याहंप्रत्ययानुपपत्तिः—इति ।

तत्राहंप्रत्यय आत्ममायातादात्म्याध्यासनिबन्धन एवेति स्वीकर्तव्यम्। अयमेव न्यायो जीवात्मन्यपि ॥

तत्र यथा सुषुप्तौ नाहमनुभवः, एवं मुक्तावप्यहंभावनिवृत्त्या नाहं-प्रत्ययः । "अहमन्नाद" इत्याद्यनुभवोऽपि जीवन्मुक्तस्य व्युत्थितस्य । तस्य हि प्रारब्धफलोपयोगिसर्वाज्ञानांशानिवृत्त्याऽहंव्यवहारो न विरुध्यते । न हि सुखानुभवो मोक्षो नाम, किन्त्वनुभावधर्मधर्मिभावादिभेदलेशशून्यः । शुभाशुभ-श्रुतिस्तु तदाकारवृत्त्युपलक्षितानन्दस्वरूपाभिप्राया। सच्चिदानन्दस्वरूपस्यावरण-निवृत्त्या स्वप्रकाशानावृतब्रह्मभावो हि मोक्षो नाम । न च तत्रानुभविता लौकि-

कानुभूति., तदनुभवो वा। विषयसुखानि त्वद्वैतमतेऽखण्डानन्दांशमात्रप्रतिबिम्बानुभव एव, न तु साक्षादानन्दानुभवः, अखण्डानुभवो वा ॥

इदमेवाभिप्रेत्य—"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुतिः। "सोऽश्नुते सर्वान् कामान् सहे" त्यपि सर्वानन्दरूपावाप्तिपरैव। अत एव—तस्या "ब्रह्मविदाप्नोति परम्" इत्यनेनैकवाक्यता। स्वप्रकाशाखण्डानन्दस्वरूपमेव हि मोक्षः। न तस्य मुक्तावप्रकाशमानता। न च स्वप्रकाशोऽसत्प्रायः। परिभाषा हि—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।"

इति वार्तिकानुसारेणानावृतात्मस्वरूपमेव मोक्षमभिप्रैति, स्वप्रकाशानन्दस्वरूपं वा। न च दुःखाभावमात्रं मोक्षो नाम वेदान्तसिद्धान्ते ॥

तत्रानन्दस्वरूपमिदं स्वप्रकाशं चिद्रूपमपि। चिद्रूपत्वं तु न धर्मविशेषः, किन्तु स्वरूपमात्रं निर्विशेषमनावृतावस्थम्; चित्स्वरूपस्यैव तस्य स्वप्रकाशस्यापि न स्वप्रकाशत्वेन व्यपदेशः; निर्विशेषत्वात्, किन्तु परप्रकाशत्वाभावरूपेण। "तदप्रमायां सर्वस्याप्रथनेन जगदान्ध्यप्रसङ्गः" इति भामती त्वधिष्ठानस्वरूपप्रकाशमात्रं वदति, तदप्यविद्योपहितस्यैव। परप्रकाश्यत्वाभावादिना व्यपदेशस्तु शुद्धस्यानुपहितस्य। तन्मते हि न शुद्धमुपहितादिकमिवान्यप्रकाश्यम्, उपहितमात्रपरत्वाच्छास्त्राणाम्। शुद्धं चैतन्यं हि तन्मते नाधिष्ठानम्। अतो जगत आरोपार्थं न तत्र प्रकाशापेक्षा। ततश्च यादृशो वस्त्वन्तराप्रकाशः, तादृशः प्रकाशोऽपि न तत्रापेक्ष्यते। प्रकाशो हि व्यवहारानुगुण्यम्। न च मोक्षे व्यवहारः। स हि भेदापेक्षो निर्विशेषे निर्भेदे चानावृते चैतन्ये बाधितः ॥

मोक्षेच्छया प्रवृत्तिस्तु शास्त्रद्वाराऽविद्यानिवृत्त्यर्थम्; अविद्यानिवृत्तिपरत्वाच्छास्त्रस्य। "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती" ति तु निवृत्तायामविद्यायां वस्तुस्थितिमात्रपरम् ॥

" निरस्ताखिलदुःखोऽहमनन्तानन्दभाग् विराट् ॥"

इत्यप्येवमाशयमेव। मुक्तावानन्दावाप्तिवचनानामप्राप्तत्वभ्रमविषयस्वरूपविषयाप्तत्वभ्रमनिवृत्तावेव तात्पर्यम् ॥

अहं मुक्तः स्यामिति प्रवृत्तेः पूर्वम्, सत्यम्, अहम्भावोऽनुवर्तते। को वा वदति मुमुक्षादशायामेवाहंभावो गच्छतीति? मुक्तस्याहंभावानुवृत्तौ तु न किमपि प्रमाणमस्ति। निरस्ताखिलदुःखोऽहमिति तु जीवन्मुक्तपरम्, स्थितप्रज्ञपरं वा, न त्वनावृतप्रत्यगभिन्नसंविन्मात्राशयम्। मुक्तौ तु संविन्मात्रस्यानुवृत्तिः, न त्वहमर्थस्य। संविदेव हि मुख्यात्मा। स च मुक्तावनुवर्तत एव। दुःखात्यन्ताभावमोक्षता तु पूर्वोक्तरीत्या तदभावत्वोपलक्षितानावृताखण्डब्रह्मरूपत्वेनैव, न तु तदभावत्वेन। अनावृतं संविन्मात्रं त्वानन्दस्वरूपमेव; अखण्डत्वात्तदा ब्रह्मणः, इति नात्रापि पक्षे गौणो मोक्षः, किन्तु मुख्य एव ॥

न च मोक्षकाले कश्चन द्वितीयः पदार्थः सजातीयो विजातीयः स्वगतो वाऽस्ति, येन सुखानुभवः, तत्रानुभविता च स्यात्। "द्वितीयाद्वै भय भवती" ति हि द्वितीयसत्तामात्रं भीतिकारणमित्याम्नायते। द्वितीयो ब्रह्मणि चिदात्मकेऽज्ञानकल्पित एव। अत एव—"एकमेवाद्वितीयमि" ति श्रुतिः। ततश्च मुक्तिकाले द्वितीयं वस्त्वज्ञानकल्पितं न स्थानमर्हति। सत्यं तु तदसंभावितम्, उक्तश्रुतिविरुद्धं च ॥

" सत्यं ज्ञानमनन्तमि " ति ब्रह्मैव मुख्यं सत्यम्, सत्यस्य सत्यं बोधयति। न च प्रपञ्चसत्यतायां तदुपपद्यते। सर्वं हि वाक्यं सावधारणम्। ब्रह्मव्यतिरिक्तस्य तु सर्वस्य कल्पितत्वम्। तत एवाद्वितीयं ब्रह्मेति श्रुत्यर्थः। सर्वं द्वितीयं भ्रान्तिकल्पितं प्रतिकूलमेव, नानुकूलं किमपि, येन प्रतिकूलादेव भयम्, नानुकूलाद् द्वितीयादिति स्यात्। न वा दुःखाभावमात्रं मोक्षः। अहमर्थोऽप्यौपाधिकः कल्पित एव, इति तत्सत्ताऽपि मोक्षे भीतिकारणमेव। न च मोक्षेऽहमर्थ-

सत्तायां किमपि प्रमाणमस्ति, प्रत्युत सर्वाभाव एव प्रमाणानि। न च संकोचेऽपि प्रमाणमस्ति॥

आत्मनो ज्ञातृत्वमप्यत एव व्याख्यातम्। तद्ध्यहमर्थस्यौपाधिकस्यौपाधिकमेव, न तु स्वाभाविकम्। न च तत् संविद्रूपस्यात्मनः। ज्ञातृत्वं हि ज्ञानाश्रयत्वम्। न च ज्ञानस्वरूपस्य ज्ञातृत्वं तेनैव ज्ञानेन; एकस्यैव धर्मधर्मिभावायोगात्। ज्ञानान्तरं तद्धर्मो जन्यो वा, नित्यो वा। आद्ये कस्यायं धर्मः? कस्य वा कार्यः? यद्यात्मन एव धर्म., तस्यैव च कार्यं मीमांसकमत इव, तदाऽऽत्मन. परिणामित्वेनानित्यत्वापत्तिः। परिणामी नित्यश्चेति हि भास्करीयो राद्धान्तः। नित्यत्वे तु सर्वदा सर्वज्ञानापत्तिः, ब्रह्माज्ञानानुपपत्तिर्वा, न वा ब्रह्मजिज्ञासोपपत्तिः। तथाचाहुरद्वैतरसिकाः—

"लौकिकवाक्यानां सिद्धार्थपरत्वसंभवेऽपि वेदान्तानां सिद्धब्रह्मसद्भावबोधपर्यवसानेन फलवत्त्वमाश्रित्य विचारारम्भसमर्थनं न युक्तम्; अज्ञाते शास्त्रमर्थवदित्यस्य सर्वानुमतत्वात्। त्वन्मते च ब्रह्मण्यज्ञातत्वस्य दुरुपपादत्वात्॥

तथाहि—इत्थं हि भवतो मतम्—सत्यज्ञानानन्दरूपम्, ज्ञानानन्दाद्यसंकोचगुणकम्, वेदान्तवेद्यम्, देशकालवस्तुपरिच्छेदशून्यम्, चितामचितामन्तः प्रविष्टं ब्रह्म। जीवास्तु ब्रह्मभिन्ना अणुपरिमाणाः, दीपवत् स्वप्रकाशज्ञानानन्दरूपाः, दीपप्रभावत् द्रव्यात्मकसंकोचविकासशालिज्ञानानन्दगुणकाः, अपहतपाप्मत्वादिब्रह्मसमानधर्माणः। तत्र नित्यसिद्धानां नित्यसिद्धं निर्दोषत्वम्। गुणाश्च ब्रह्मगुणेभ्यः किञ्चिन्न्यूनाः। सर्वेऽपि तत्तुल्या वा। तदपि ब्रह्मनित्येच्छाधीनम्। बद्धानां तु चिरानुष्ठितक्षणिकयागादिक्रियाजन्यभगवन्निष्ठप्रीत्यप्रीत्याख्यपुण्यपापरूपानाद्यविद्याप्रतिबन्धककृतं ज्ञानं प्रमाणजन्यमनोवृत्तिद्वारा विकसितं सत् तत्तद्विषयसंबन्धेन जीवस्य तत्तदनुभावकं ब्रह्मोपासनाजन्येश्वरानुग्रहादविद्यानिवृत्तौ निरतिशयविकासतो ब्रह्मणो जीवस्य तद्गुणानां च कार्त्स्न्येनावभासकं मुक्तावाविर्भवतीति॥

तत्र कोऽयं संकोचः? येन मुक्ताविव संसारदशायां जीवस्य ब्रह्म न भासते ?—किं संयुक्तानामवयवानां निबिडसंयोगेनावयविनोऽल्पदेशव्यापित्वम् ? विषयसंबन्धविरोधिव्यवधायकवत्त्वं वा ? विषयप्रकाशाजनकत्वं वा ? अस्पष्टतया विषयप्रकाशत्वं वा ? किंचित्प्रकाशमानत्वेऽप्यप्रकाशमानस्वीयरूपान्तरवत्त्व वा ? प्रतिबद्धविषयप्रकाशनशक्तिमत्वं वा ?

नाद्यः ; ज्ञानस्य जीवधर्मस्य नित्यत्वेनापूर्वावयवोपचयापचयासंभवात् , मुक्तिकालीनानंतविकासप्रयोजकानन्तावयवानामाकुंचितकूर्माङ्गवत् वळितपट्टवच्च निबिडसंयोगादल्पदेशव्यापित्वेन व्यवहितघटाद्यप्रकाशत्वेऽपि स्वसंयुक्तवस्तु-प्रकाशनशक्त्यपरिलोपात् , जीवान्तःप्रविष्टब्रह्मसंयोगस्य नित्यसिद्धत्वात् , मुक्ति-कालीनानुभाव्यस्यानन्दाद्यनन्तगुणकस्य ब्रह्मणो जीवनिष्ठधर्मधर्म्युभयात्मका-नन्दापहतपाप्मत्वादिगुणस्य च संसारदशायामपि प्रकाशप्रयुक्तेर्दुष्परिहरत्वात्, प्रत्युतानावृतदीपप्रभामध्यस्थापेक्षया घटावृतदीपप्रभामध्यस्थवस्त्वन्तराणामविस्पष्ट-प्रकाशदर्शनात् ॥

न द्वितीयः ; ब्रह्मनिष्ठजीवादृष्टरूपाविद्ययाऽमूर्तया घटादिवद्व्यवहारा-संभवात् , तथा सति ब्रह्मधर्माणामपि व्यवधानापत्ते., ब्रह्मणो जीवतद्धर्मेष्वनु-प्रवेशाभावप्रसंगात् ॥

किञ्च घटादिप्रतिबन्धनिवृत्तौ संकुचितप्रभाया गमनद्वारा देशान्तरसं-बन्धदर्शनवत् ज्ञानस्यापि क्रियां विना दूरस्थविषयसंयोगासंभवात् ज्ञानविकासे जीवस्य कर्तृत्वांगीकाराच्च विकारित्वापत्त्या विनाशादिप्रसंगः । किंच ब्रह्मणो निर्विकारत्वात् तस्मिन् निग्रहरूपजन्यगुणासंभवान्न कर्मणो मिथ्यात्वं संभवति ॥

न च ब्रह्मणोऽप्यप्राकृतदेहेन्द्रियगुणकर्मांगीकारात्तद्वृत्तिरूपनिग्रहादि-संभवः ; तस्य तादृशसूक्ष्मस्थूलदेहादावहमनुभवासंभवेन तस्य तद्वत्तायोगात् । अहंप्रत्ययो हि जीवब्रह्मणोः केवलात्मगोचर एव । जीवस्य तु देहादावहमभि-मानः प्राकृताहंकाराहंकारित इति भवतो मतम् ॥

न च ब्रह्मणः प्राकृताहंकारोऽस्ति, येन देहादावहमभिमानः सिद्ध्येत्, तत्सत्त्वे वा तस्यापि भ्रान्तत्वापत्तेः। अतो न ब्रह्मनिष्ठप्रीत्यप्रीत्याख्यकर्मरूपाविद्यया व्यवधानं संभवति। संभवेऽपि वा न घटादीनां व्यवहितत्वं संभवेत्॥

किंच—ब्रह्मतद्धर्माणां ब्रह्मानुप्रवेशादेव सर्वस्य वस्तुत्वं शब्दवाच्यत्वं चेति वदता जीवे तदुपादाने च ब्रह्मानुप्रवेशस्यावश्यं वाच्यत्वात्तद्व्यवधानासंभवात्, मुक्तिसंसारयोरविशेषापत्तिः॥

ननु—न कर्मरूपाविद्यया साक्षाद् व्यवधानं ब्रूमः, किन्तु जीवः स्वकर्मसहकृतेनेश्वरेण प्रकृतिपरिणामलिङ्गशरीररूपमंजूषां प्रवेशित घटस्थदीपवत्तदावृतज्ञानतया देहेन्द्रियविषयप्राकृताहंकाराहंकारिताहमभिमानरूपाविद्यापरवशतत्तद्देहानुगुणविहितनिषिद्धाचरणः कुलालचक्रवद्भ्रमति। अतस्सूक्ष्मदेहस्यैव सौक्ष्म्याद्व्यवधायकत्वम्। मुक्तौ तन्निवृत्त्या ज्ञानस्य निरतिशयविकासो जायत इति ब्रूम इति—चेत्, न; तथापि जीवधर्मलिंगशरीरेष्वनुप्रविष्टस्य ब्रह्मणो लिंगशरीरेण व्यवधानासंभवात्, अन्यथा जीवस्य तज्ज्ञानस्य च परस्परव्यवधानापत्त्या स्वरूपप्रकाशोऽपि न स्यात्॥

न तृतीयः; विषयप्रकाशात्मकज्ञानस्य प्रकाशान्तराजनकत्वात्, अन्यथाऽनवस्थापत्तेः, विषयगतज्ञातताया अनंगीकाराच्च॥

न चतुर्थः; अस्पष्टतया व्यवहितविप्रकृष्टसकलज्ञानापत्तेः, अस्पष्टत्वस्य विषयनिष्ठसकलयोग्यधर्माप्रकाशरूपत्वेन किंचिद्धर्माप्रकाशेऽपि बहुधर्मविशिष्टब्रह्मणः प्रकाशापत्तेः॥

किञ्च दीपप्रभाया विरळाया अस्पष्टप्रकाशत्वम्, तैलादिविशेषादवयवान्तराकलनात् स्पष्टप्रकाशत्वं च युक्तम्, न तु ज्ञानस्य; अवयवान्तरोपचयापचयासंभवात्॥

नापि पञ्चमः, ज्ञानस्य प्रकाशान्तराजनकत्वेन तदनुकूलशक्तेरभावेन तत्प्रतिबन्धासंभवात्॥

ननु---संकुचितधर्मरूपज्ञानस्य विषयासंभवात् तद्व्यवहाराजनकत्वम्। तत्तद्विकासकसामग्रीसमवहितस्य तु तत्तद्विषयप्रसाररूपविकसनेन तत्तद्व्यवहारजनकत्वम्। तदेव प्रकाशकत्वम्। अत एव प्रकाशप्रसारानुत्पत्तिमेव तिरोधानभूताः कर्मादयः कुर्वन्तीति वेदार्थसंग्रहग्रन्थेन विकासप्रतिबन्ध एवाविद्यया क्रियत इति--चेत्, एवमपि व्यवहितानां घटादीनां प्रकाशो नित्यमवयवोपचयापचयशून्यं कार्त्स्न्येन विद्यमानमीश्वरानन्दादपकृष्टत्वेन शतश उत्कर्षपरमावधि हिरण्यगर्भपरमानन्दसदृशं संकोचादल्पपरिमाणमपि परमातिशयं स्वप्रकाशमनुकूलज्ञानद्वाराऽऽनन्दरूपं नित्येन संयोगसंबन्धेन जीवस्य 'जानाम्यहम्', 'सुख्यहम्', इति व्यवहारापादकं सुप्तावपि प्रकाशमानं मुक्ताविव किमिति न भासते? कुतो वा स्वान्तःप्रविष्टं विकासमनपेक्ष्यैव स्वसंबन्धं स्वरूपतो गुणतश्च निरतिशयानन्दम्, अस्थूलत्वाद्यपहतपाप्मत्वाद्यखिलनिषिद्धसिद्धस्वरूपं ब्रह्म न भासयति?

अल्पदेशव्यापिना ज्ञानेन परिच्छिन्नस्य ब्रह्मणः कार्त्स्न्येन संयोगाभावादिति चेत्, निरवयवके ब्रह्मणि कार्त्स्न्यभावस्य दुरुपपादत्वात्, घटादावेकदेशसंयुक्तेनापि चक्षुषा घटतद्गुणजात्यादिप्रकाशदर्शनेन जीवप्रदेशे ब्रह्मसंयोगस्यैव कृत्स्नसंयोगत्वात्, अन्यथा मुक्तावपि कार्त्स्न्यस्य सर्वावयवत्वावच्छिन्नरूपस्यासंभवात्, जीवज्ञानस्य कृत्स्नस्यावयवयावच्छेदेन संसारेऽपि ब्रह्मसंयुक्तत्वात्, ब्रह्मधर्माणामपि ब्रह्मणि व्याप्यवृत्तितया निरवयवत्वेन च तत्संबन्धस्यापि नित्यसिद्धत्वात्, जीवतद्धर्मानुप्रविष्टानामपि ब्रह्मवद्धर्माणां तदसंबन्धस्य दुरुपपादत्वात्, अपरिच्छिन्नतया ब्रह्मानुभवाभावेऽपि परिच्छिन्ने जीवप्रदेशे ब्रह्मानुभवस्य दुष्परिहरत्वाच्च॥

किंच जीवस्याणोरपि ज्ञानानन्दस्वरूपत्वमपहतपाप्मादिमत्त्वमभावस्याधिकरणात्मकत्वं च तवाभिमतम्। ततस्तत्सर्वं संसारे कुतो न भासते? न हि जीवस्वरूपं धर्मरूपज्ञानापेक्षं स्वप्रकाशम्; तथा सति परप्रकाश्यतया तार्किकात्मवज्जडत्वापत्तेः, न तरां तद्विकासापेक्षम्; नित्यसंबन्धत्वात्॥

नित्यत्वं संकोचविकासशालित्वं च धर्मभूतस्य व्याहतम्, आर्हतमतप्रवेशापत्तेः, तदभावस्याज्ञानत्वानुपपत्तेश्च। सर्वं चेदं शतभूषण्यां विशदम्। न च तत्र ज्ञानमुत्पन्नं नष्टमिति प्रतीतिरुपपद्यते। तस्य संकोचापेक्षयाऽनित्यत्वं तु निरस्तमेव। अतोऽन्तःकरणपरिणामः तद्धर्मश्च ज्ञानरूपो धर्मः, येनात्मनो ज्ञातृत्वमिति वक्तव्यं सांख्यमत इव। यदि चैवम्, अन्तःकरणधर्मेण ज्ञानेनात्मनो ज्ञातृत्वं तदुपाधिकत्वेनैव, इति ज्ञातृत्वमात्मनो नात्मत्वेन, अहमर्थस्य त्वौपाधिकमिति फलति॥

आश्रयविषयापेक्षा तु लौकिकानुभूतीनामेव, न स्वरूपज्ञानस्येति प्रागेवोपपादितम्। लौकिकानुभूतय एवान्तःकरणवृत्तिपदेन व्यपदिश्यन्ते, तदवच्छिन्नं चैतन्यमेव वा। तदाश्रयत्वं चात्मन. पूर्वोक्तविधयाऽन्तःकरणतादात्म्यपरिनिष्पन्नस्याहमर्थस्यौपाधिकस्य, न तु संविद्रूपस्य। न त्वेकान्ततो निराश्रयं निर्विषयं च स्वप्रकाशम्, किन्तु सर्वाधिष्ठानत्वात् सर्वाश्रयं सर्वविषयं च, परं त्वध्यासमात्रेण। न तु तस्याश्रयान्तरं किमपि संभवति; निराश्रयत्वाद् ब्रह्मणः, अन्यथाऽनवस्थानात्। सर्वं स्वकारणमेवाश्रित्यावतिष्ठते। न च ब्रह्मणः किमपि कारणमस्ति। जन्यज्ञानस्याश्रयं त्वन्तःकरणम्, तदुपाधिकत्वेन त्वहमर्थ इति सर्वं गतमधस्तात्। सविद्रूपं हि ब्रह्म निराश्रयम्। सविषयकत्वं तु तस्य तत्र सर्वस्याध्यासेन। तावन्मात्रेण ब्रह्मण. सर्वज्ञत्वं तु भामतीप्रस्थाने, विवरणमते तु मायावृत्त्याश्रयत्वेनैव सर्वज्ञत्वमित्यादि व्यक्तमन्यत्र॥

अयमत्र निष्कर्षः—ज्ञानं द्विविधम्—स्वरूपज्ञानम्, धर्मभूतं ज्ञानं चेति। धर्मत्वं च ज्ञानस्यान्त.करणपरिणामत्वेन, तच्चान्तःकरणस्यैव मुख्यम्, अज्ञानविरोधि, न त्वधिष्ठानं स्वप्रकाशं च ब्रह्मरूपम्। तद्ध्यज्ञाननिवर्तकं तदाकारतामात्रेण प्रमाणजन्यम्। अज्ञाननिवर्तकत्वादस्य ज्ञानत्वमन्त.करणपरिणामत्वेऽपि। तत्परिणामिकारणस्य चान्तःकरणस्य तैजसत्वात् सूर्यादिकिरणवत् स्वतोऽपि स्वोपहितांशमात्रगताज्ञानावस्थाविशेषनिवर्तकत्वात्प्रकाशत्वाच्च

तद् ज्ञानमिव। तत्र घटं जानामीत्यादिस्थले ज्ञाधात्वर्थोऽन्तःकरणपरिणामवृत्ति-रेव, उपचारात्। तत्राहमर्थस्यौपाधिकं तदाश्रयत्वमादाय ज्ञातृत्वमित्यादि पूर्व-मेवोपपादितम् ॥

तत्राहमर्थेऽन्तःकरणेनैवाज्ञानावस्थानिवृत्तेर्वृत्तेरहमंशप्रकाशकार्ये न व्यापार'। तत्राश्रयत्वं वृत्तिमात्रमादायापि निर्वहति। घटादिविषये तु वृत्तेरा-कारताख्यविषयतासंबन्धेन तद्विषयतापादकत्वमात्रम्। घटादिस्तु विषयतया तदाश्रयः। अन्तःकरणम्, अहमर्थश्चाश्रयत्वमात्रेण ॥

अत एवाहमर्थ एव ज्ञाता, न तु घटः। अन्यत्रापि विषयतयाऽऽ-श्रयस्य विषयत्वेनैव व्यपदेशः, न तु ज्ञातृत्वेन। तदाश्रयत्वं हि तदुपादेयत्व-निबन्धनम्। न च विषयो वृत्तिज्ञानस्योपादानम्। अत एव विषयतासम्बन्धेन विषयसंबन्धेऽपि 'अहं जानामी'तिवद् घटो जानातीति न प्रयोगः। ब्रह्मज्ञानेऽ-प्ययमेव न्यायः। इयान् विशेषः—साक्षात् ब्रह्माश्रयत्वात् तद्विषयकत्वाच्च तदाकारतामात्रेण वृत्तिरज्ञाननिवर्तनक्षमा, घटादिस्थले तु घटस्याज्ञान-कार्यस्याज्ञानाश्रयत्वविषयत्वयोरभावात् घटावच्छिन्नचैतन्यगताज्ञानमेव वृत्त्या निवर्तनीयम्। वृत्तिस्तु घटाकारा, न तदवच्छिन्नचैतन्याकारा। अतो घटाकारवृत्तिर्घटावच्छिन्नचैतन्यांशस्य, स्वस्मिन् प्रतिफलनद्वारा घटस्य तदवच्छिन्नचैतन्यगताज्ञाननिवृत्तिद्वारेण च प्रकाशमादधाति। तथाच घटं जानामीत्यादौ वृत्त्यवच्छिन्नचैतन्यसबन्धेन घटस्य परम्परयाऽज्ञातस्य पर-म्परया ज्ञानम्, न तु ब्रह्मण इव साक्षात्। उभयत्रापि स्वोपादेयवृत्त्याश्रया-न्त.करणतादात्म्येनैवाहमर्थस्य ज्ञातृत्वम्, न तु वृत्त्यवच्छिन्नचैतन्याश्रयत्वेन। वृत्त्यवच्छिन्नचैतन्याश्रयत्वेन त्वौपचारिकमेव। सति चैवम्—घटावच्छिन्नचित्प्रति-फलनसंबन्धेन विषयत्वमात्रम्, न तु तदाश्रयत्वम्; वृत्त्याश्रयतादात्म्यप्रयुक्त-वृत्त्याश्रयत्वस्यैव तदाश्रयताप्रयोजकत्वात्, इति विषये चैतन्यप्रतिफलनाख्य-संबन्धातिरिक्त एवाश्रयसंबन्धः। अत एव 'स जानाती'ति न प्रयोगः, अहं

जानामीत्येव प्रयोगश्च, इति न परमार्थप्रकाशिकापादितस्य घटो जानातीति प्रयोगप्रसङ्गस्यात्रावसरः ॥

वृत्तिसम्बन्धापादितस्वच्छताकघटादौ तदाकारवृत्तौ वा प्रतिफलनं ज्ञानस्य विषयेण संबन्धः । अहमर्थस्य तु स्वयं सर्वदाप्रकाशस्य चैतन्यस्य घटाकारवृत्तिप्रतिफलनापेक्षो न ज्ञानसबन्धः, किन्तु परम्परया वृत्त्याश्रयत्वरूपः संबन्धः, इति नैकरूपः संबन्धो ज्ञानस्य विषयेण घटादिना, ज्ञात्रा चेति वस्तुस्थितिः ॥

अत्रान्तःकरणेन्द्रियत्वचर्चा नोपयुज्यते, विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिचैतन्यत्वं प्रत्यक्षलक्षणमिति तदनिन्द्रियत्वपक्षमादायैव प्रवर्तनात् विषयाकारवृत्त्यवच्छिन्नचैतन्यस्य स्वावच्छेदकवृत्त्याकारापेक्षा विषयापेक्षयेति निष्कर्षः । वृत्तेर्विषयाकारता त्वनुभवसिद्धा । तथापि घटस्य साक्षादज्ञातत्वाभावात् , अज्ञातचैतन्यावच्छेदकत्वादेवाज्ञातत्वात् परम्परयैव ज्ञातत्वमपि निर्वहणीयम् , इति तदवच्छिन्नचैतन्यवृत्त्यवच्छिन्नचैतन्यपर्यन्तानुधावनम् । वृत्तेः शुद्धचैतन्याकारत्वं प्रागत एव व्याख्यातम् । साक्षात्परम्परया वाऽज्ञानोपहितस्य वृत्त्योपधानमेव तदाकारतापदार्थः, इति जडत्वेऽपि वृत्तेस्तदाकारता न विरुध्यते ॥

यत्तु—विषयसम्बन्धात् प्रागेवान्त करणवृत्त्यवच्छिन्नत्वसिद्धया तदतिरिक्तस्य चाश्रयत्वस्याभावेन विषयसबद्धचैतन्यमाश्रयापेक्षमिति दुर्वचम्—इति,

तत्र वृत्त्यवच्छिन्नचैतन्यस्यैवाश्रयविषयापेक्षत्वस्य लोकसिद्धत्वाद् विषयावच्छिन्नचैतन्यस्य विषयाश्रयापेक्षत्वस्यासंभवाद् नात्रोक्तायाश्शङ्काया उत्थानमपि । विषयसबन्धात् प्रागेव वृत्त्यवच्छिन्नत्वस्य सिद्धतयेति त्वन्तःकरणस्य विषयेण संबन्धानन्तरमेव तदाकारवृत्तेः स्वीकारात् चैतन्यस्य तदवच्छिन्नत्वमात्रेणाश्रयापेक्षानिर्वाहेऽपि विषयापेक्षानिर्वाहार्थं विषयावच्छिन्नं चैतन्यमपि तत्र प्रतीयत इति न दोषः ॥

तत्र वृत्तेः साक्षादन्तःकरणधर्मत्वम् , परम्परया त्वमहर्थधर्मत्वम् । तेन चाहमर्थस्य ज्ञातृत्वमौपाधिकमिति प्रागेवोपपादितम् , इति परम्परया वृत्त्याश्रयत्वेन, वृत्त्याश्रयान्तःकरणतादात्म्याद्वा ज्ञातृत्वमहमर्थस्योपपद्यते। तत्र ह्यर्थस्यान्तः करणोपाधिसम्बन्धाधीनसिद्धिकस्यैव प्रथमं प्रतीतिः। देहेन्द्रियादिनां त्वन्तःकरणोपहितशुद्धचैतन्याध्यस्तानामपि तदधिष्ठानस्यान्तःकरणाश्रयत्वादेवाहंप्रतीतिः, इति कथमन्तःकरणावच्छिन्नस्याहमर्थस्य न प्रतीतिः ? तत्राविद्याप्रतिबिम्बो जीव इत्यनेनानेकाविद्यावादे, अविद्यावस्थाविशेषस्यैव जीवोपाधित्वात् तत्प्रतिबिम्ब एव जीवः। तदैक्यवादे त्वविद्याया अनादिसिद्धपरिणामान्तःकरणप्रतिबिम्बो जीवः, इत्येकमुक्तौ सर्वमुक्तिशङ्कापरिहारार्थं प्रस्थानभेदमात्रं तत्तदाचार्यानुभवसाक्षिकम् । अविद्याप्रतिबिम्बवादेऽविद्याप्रतिबिम्बस्यौपाधिकस्याहमर्थत्वम् , इत्यन्तःकरणावच्छिन्नचैतन्याहमर्थतावादस्यैव सर्वानुभवसिद्धत्वाद् नान्तःकरणावच्छिन्नचैतन्याहमर्थतावादस्य कुत्रापि परित्यागः ॥

एतेन—अविद्याप्रतिबिम्बो जीव इति पक्षेऽन्त करणगतस्याहमर्थज्ञातृत्वस्यात्मन्यारोपेऽहं जानामीति प्रतीतिर्न साधिका , अहमोऽन्त करणावच्छिन्नचैतन्यपरत्वात्। कथंचित् प्रतिबिम्बग्रहणेऽपि तस्याविद्याप्रतिबिम्बस्यान्त करणवृत्त्यवच्छिन्नचैतन्याश्रयत्वमपि दुर्घटम् । अत आत्मैवाहमर्थ इति—परास्तम् ॥

न ह्यन्तःकरणमहमर्थो ज्ञाता वा, किन्त्वहमर्थोपाधिः । स चाविद्याप्रतिबिंबादेऽप्यविशिष्टः । सर्वथा त्वात्मा, अन्त.करणं वा नाहमर्थः, किन्त्वन्तःकरणावच्छिन्नं विशिष्टं चैतन्यमेवाहमर्थ इति सुस्थम् ॥

"विज्ञातारमरे केन विजानीयात्" इति त्वौपाधिकज्ञानाधिष्ठानं स्वरूपज्ञानमात्रं केन जानीयादिति बोधयति, न तु मुख्यात्मनो ज्ञातृत्वमपि। अन्यथा विज्ञातुर्ज्ञानाश्रयस्य स्वाश्रितज्ञानेनैव सिद्धत्वात् कथं "विजानीयादि"ति सङ्गतः ? अतो ज्ञायते साश्रयसविषयातिरिक्तसंविन्मात्रविषय एवायं प्रश्नः। अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् , इति वचनं

त्वहमर्थस्यान्तःकरणावच्छिन्नचैतन्यस्यैवोक्तविधया ज्ञातृत्वम्, न त्वन्तःकरणमात्रस्य, चिन्मात्रस्य वेत्यद्वैतसिद्धान्तोपष्टम्भकम् ॥

तत्राहमर्थो जीवो वा भवतु, ईश्वरो वा ; तत्र ज्ञातृत्वस्याद्वैतिभिरपि स्वीकारात्। अत्र जीवेश्वरपदाभ्यां न चैतन्यांशः, न वोपाधिर्गृह्यते, किंत्वविशिष्टमिति न कोऽपि व्याघातः। तत्राहमर्थस्य प्रत्यगात्मत्वमपि प्रत्यगात्मन्यध्यासेन तत्तादात्म्यादुपपद्यते। इदं हि वचनम्—आत्मनो न ज्ञातृत्वम्, किं त्वहमर्थस्यैव विशिष्टस्य। अहमर्थ एव ज्ञाता, प्रत्यगात्मा च। शुद्धं प्रत्यगात्मस्वरूपं तु नाहमर्थो, न वा ज्ञातृ इति तदर्थः। अन्यथाऽहमर्थस्यैवात्मत्वे तऽज्ञातृत्वेऽविवादात् ज्ञातैवेति तस्य ज्ञातृत्वर्णनं किमर्थम् ॥

यत्तु—अद्वैतमते ज्ञातृत्वादेरात्मत्ववैयधिकरण्यं स्वीकृतम्, इति तत्प्रतिषेधार्थं सामानाधिकरण्यम्—इति,

तत्राहमर्थे न ज्ञातुः सामानाधिकरण्यं वितथम्, अहमर्थपदवैयर्थ्यं च। न चेदंपदमात्मस्वरूपोपस्थापनार्थम्; प्रत्यगात्मपदेनैव तस्य गतार्थत्वात्। अहमर्थातिरिक्तो ज्ञाता नास्ति। स च प्रत्यगात्मेति सुष्ठु लगन्ति सर्वाणि पदानि, सप्रयोजनानि च ॥

यथाच परमते नित्यधर्मभूतज्ञानाश्रयत्वेन ज्ञातृत्वं दुरुपपादम्, तथाऽन्यत्र व्यक्तम्। तत्र परमतेऽपि स्वरूपज्ञानं नाश्रयविषयापेक्षमद्वैतमत इव, आश्रयविषयापेक्षं तु धर्मभूतं ज्ञानम्। तदप्यलौकिकम्, न तु लौकिकम्। तच्च ज्ञानं साश्रयविषयम्, स्वयमविषयश्चेति विषयस्यैवाश्रयत्वात्, कथं न घटादिकमपि तस्य नाश्रयः, कथं च घटो जानातीति न प्रयोगः। न चाद्वैतमत इवान्तःकरणस्यैवोपादानत्वादाश्रयत्ववत् स्वरूपज्ञानस्यैवाश्रयत्वे किमपि प्रमाणमस्ति। दृष्टान्तत्वेनाभिमतयोः प्रभाप्रभावतोः प्रभायाः प्रदीपाश्रयत्वमिव प्रकाश्यगृहाद्याश्रयत्वमपि वर्तते। विषयत्वं च विषयाणां जडायाः प्रभायाः कथम्? कीदृशं वा विषयत्वं प्रभानिबन्धनं गृहादीनाम्, इति घटो जानातीति प्रयोगः कथं न भवति धर्मभूतज्ञानेनैव विषयाणां भाने ॥

तत्र यथा प्रभावतो नाश्रयापेक्षा, एवमत्र स्वरूपज्ञानस्यापि नाश्रयापेक्षेति समानमनुभूतित्वेनैकजातीयत्वेऽपि लौकिकानुभूतीनां संविद्रूपानुभूतेश्च। तत्र 'घटमहं जानामि' 'पटमहं जानामी'त्यादिषु प्रतीयमानं ज्ञानमेकं वा, अनेकं वा। आद्ये पूर्वज्ञानेनोत्तरज्ञाननिर्वाहापत्तिः, एकस्यैव ज्ञानस्याज्ञाननाशकत्वात् घटपटादिज्ञानानामेकत्वापत्तिश्च। अवस्थाभेदेनानेकत्वे नित्यत्वानुपपत्तिः। न च प्रकृतिरिव धर्मभूतज्ञानमपि विषयात्मना परिणमते। तथा सति हि विज्ञानवादापत्तिः, जानामीति निर्दिष्टधर्मिज्ञानातिरिक्तधर्मभूतज्ञानाङ्गीकारः किमर्थः। धर्मधर्मिभावनिर्वाहार्थं चेत्, सममद्वैतमतेऽपि; संविदतिरिक्तधर्मभूतज्ञानाङ्गीकारेणैव निर्वाहात्। तस्य जडत्वानुमाने तु धर्मभूतज्ञानं वा कथमजडम्। नियमेनात्मसम्बन्धादिति चेत्, समं प्रकृतेऽपि। कथं वा नैयायिकमते ज्ञानं न जडम्; अचेतनात्मधर्मत्वात्? यदि प्रकाशकत्वमात्रेण तथा व्यवहारः, तर्हि सममत्रापि॥

सर्वथा तु लौकिकानुभूत्यतिरिक्तनित्यसंविद्रूपं ज्ञानं साक्षात्परम्परया वा वृत्तिरूपं धर्मभूतज्ञानं वोरीकर्तव्यम्, न त्वनुभूतित्वेन सर्वासामैक्यम्। अन्यथाऽज्ञाननिवर्तकाभावात् कुत्रापि जानामीति प्रतीतिर्न निर्वहेत्। तथा चानुभूतिरिति ज्ञानावगत्याद्यपरनामा सकर्मकोऽनुभवितुरात्मनः परम्परया धर्मोऽन्यः; साक्षात् धात्वर्थतां विना जन्यस्य धर्मभूतज्ञानस्य तद्धर्मत्वायोगात्। स च सकर्मकः। अन्या च संविद्रूपाऽनुभूतिः, या निर्विषया, निराश्रया च प्रदीपवत्। घटं जानामीत्यादावपि परमत इव धर्मभूतज्ञानातिरिक्तोऽहमर्थ एव धर्मितया भाति। तत्राहमर्थान्तर्गततया संविद्रूपभानेऽपि वृत्तिरूपज्ञानधर्मित्वं न तत्र संविन्मात्रस्य, किन्तु विशिष्टस्यैव। न च तत्र घटादीनां तदवच्छिन्नचैतन्यसम्बन्धातिरिक्तोऽहमर्थघटकसंवित्संबन्धस्तत्र समस्ति। तथाच घटमहं जानामीत्यादौ संविद्रूपातिरिक्तानुभूतेर्न भानमिति परमार्थप्रकाशिकायामद्वैतसिद्धान्तोपदेशः स्वीयानामेव शोभेत, नाद्वैतसिद्धान्तपरिनिष्ठितानाम्।

तत्र धात्वर्थतया प्रतीयमानं सकर्मकं ज्ञानमुभयत्र स्वरूपज्ञानातिरिक्तमेव। तस्य प्रभाया इव साश्रयत्वसविषयत्वनियमः परमत इवाद्वैतमतेऽप्यव्याहतः। संविद्रूपायास्तु प्रदीपस्येव न साश्रयत्वसविषयत्वनियमोऽद्वैतमतेऽपि ॥

"सत्यं ज्ञानमि"त्यादिवाक्यप्रतिपादितं संविद्रूपं तु निर्विशेषमेव। तत्र यदि परमते प्रदीपस्येव निराश्रयत्वं साक्षान्निर्विषयत्वं च स्वरूपज्ञानस्य, तर्हि किमपराद्धमद्वैतमतेन निर्विशेषस्वरूपवादिना ? लौकिकानुभूतिव्यतिरिक्त संविद्रूपमद्वैतसिद्धान्तेऽपि न स्वीक्रियत इत्यसदनुवादः। यदि वृत्तिरूपज्ञानस्याद्वैतमते मुख्यज्ञानत्वं नोरीक्रियते, तावता किम्? औपचारिकं वृत्त्यवच्छिन्नं संविद्रूपातिरिक्तमेव तत्र भासताम्? तस्यैव धात्वर्थत्वात्, स्वरूपज्ञानमात्रस्य परमत इव धात्वर्थत्वाभावात् ॥

तत्र लौकिकानुभूतिः धर्मभूतज्ञानं वा सविषयम्, न तु विषयाकारम्, स्वरूपज्ञानं तु न तथा मतद्वयेऽपि। तत्र निर्विशेषत्वमद्वैतमते स्वरूपज्ञानस्य, इति कथं ज्ञानाकारार्थवादिनां निरासे न प्रतीयमानस्य ज्ञानसविषयत्वस्योपेक्षा? प्रवृत्तिविज्ञानस्य लौकिकानुभूतिस्थानीयस्य हि निरालंबनत्वं योगाचारमते। न च तदद्वैतमतेऽपि। अनेनैव न्यायेन लोकसिद्धव्यवहारस्यापि घटं जानामीत्यादेः सविषयस्य न बाधः। न च वास्तवज्ञानं स्वरूपज्ञानं मतद्वयेऽपि घटं जानामीत्यादौ साश्रयविषयकतया व्यवहारसिद्धम्, किन्तु लौकिकानुभूतिरेव तथा। सविषयकत्वं तु प्रभास्थानीयाया लौकिकानुभूतेरेव ॥

न च साश्रयं सविषयं च प्रदीपस्थानीयं स्वरूपज्ञानम्। तच्चात्मस्वरूपमेवेति संप्रतिपन्नम्। यदि चात्मन्येव ज्ञानशब्दो रूढः परमते, तर्हि समानमेतदद्वैतमतेऽपि। घटोऽनुभूयत इत्यादावनुभूतिर्नात्मस्वरूपम्, किन्तु वृत्त्यवच्छिन्नं चैतन्यम्। न स्वरूपं घटाद्यनुगतं सच्छब्दस्यैवार्थः। सत्त्वं हि परोक्षापरोक्षसाधारणं ब्रह्मस्वरूपम्। 'सन् घटो भाती' त्यत्र चिदात्मनोऽपि सतोऽनुवर्तमानत्वं विवक्षितम्, सत एव चिद्रूपत्वात् ॥

सविदात्मेति संप्रतिपन्नम्, धर्मिण्यविप्रतिपत्तेः। तस्याहंरूपत्वे परं विप्रतिपत्तिः। आत्मस्वरूपं च संविन्मात्रं नित्यं लौकिकज्ञानविलक्षणमित्यसकृदावेदितम्। परमते यद् धर्मभूतं ज्ञानम् तदद्वैतमते लौकिकं वृत्तिरूपं ज्ञानम्, इति न तस्य साश्रयविषयस्य प्रभास्थानीयस्यात्मत्वमद्वैतमतेऽपि, येन तद् बाधितं स्यात्। स्वयंप्रकाशात्मस्वरूपा संवित् ॥

स्वयंप्रकाशत्वं तु तस्या अनन्याधीनस्वप्रकाशत्वम्। घटादेस्त्वन्याधीनप्रकाशत्वाद् न तत्। न हि विषयसुखादिकमन्तःकरणपरिणामविशेषः प्रकाशो नाम? न हि सुखमपि ज्ञानविशेषः। धर्मभूतज्ञानमेव सुखमपीति चेत्, को वा विशेषः सुखदुःखयोः घटादिज्ञानस्य च। तत्स्वप्रकाशत्वे तु सुखादेः सर्वदा भानापत्तिः ॥

यत्तु—सविद आत्मत्वेऽहमर्थस्य तत्रारोपेऽनुभूतिरहमिति प्रतीति स्यात्—इदं रजतवदि'ति, न पुनरनुभवाम्यहमिति विशेष्यविशषणभावेन इति,

तत्र हि, अहमर्थोऽन्तःकरणावच्छिन्नं चैतन्यं घटाकाशवत्। तत्राधिष्ठानं संविद् आरोपितमन्तःकरणं च मिलितमेवाहमर्थः। न चाहमर्थस्य संविद्यारोपः, किंत्वधिष्ठानारोप्योभयरूपः सः। तदुक्तम्—"अन्योन्यस्मिन्नन्योन्यात्मकतामध्यस्याहमिति व्यवहारः" इति। न हीदं रजतमित्यत्रेदंत्वविशिष्टस्याधिष्ठानारोपापेक्षा, येनाधिष्ठानारोपेणेदमः प्रतीतिः—इदमिदं रजतमिति; अनवस्थापातात्, इति संविद्यहमर्थारोपेणानुभूतिरहमिति प्रतीत्यापादनमधिष्ठानारोप्यभावव्यवस्थाविरुद्धम्। अनुभवाम्यहमित्यत्र त्वनुभवो धात्वर्थो न संविन्मात्रम्; तस्याधात्वर्थत्वात्, साश्रयसविषयलौकिकानुभूतिस्वरूपत्वात्तस्य। अहमित्यत्रालौकिकानुभूतिप्रकाशोऽप्यधिष्ठानोपपादकः, इति न तदर्थमनुभवामिपदघटकानुभवोऽप्यधिष्ठानांश इति कल्पना, इत्यनुभवामिपदार्थघटकानुभवस्यालौकिकानुभूतिरूपत्वाभावेऽपि नाहमिति भ्रमनिर्वाहापत्तिः, अनुभूतित्वेनैवानुभूतेरहमर्थघटकतयाऽधिष्ठानत्वेन भानात् ॥

तत्र ज्ञातृत्वमिव कर्तृत्वमप्यन्तःकरणगतक्रियाश्रयत्वेन परस्परतादात्म्येन निर्वहति। ज्ञातृत्वं हि ज्ञानाश्रयत्वमात्रम्, न तु तदतिरिक्तं ज्ञानकर्तृत्वं नाम। एवं कर्तृत्वमपि क्रियाश्रयत्वमेव। तच्च ज्ञानं परमते सकोचविकासाश्रयं धर्मिभूतज्ञानम्, धर्मभूतज्ञानमात्रं वा भवतु, उभयथापि न क्रियाश्रयः। अयमेव न्यायोऽत्रापि। अन्तकरणवृत्तिर्ह्यन्तःकरणपरिणामविशेषो द्रव्यमेव धर्मभूतज्ञानवत्, विकासावस्थापन्नमन्तःकरणं वा, इत्युभयत्रापि ज्ञानाश्रयत्वेनैव ज्ञातृत्वं वक्तव्यम्। अयमेव न्यायो नैयायिकमतेऽपि, यत्र ज्ञानं नाम गुणविशेषः, न तु क्रिया। इयान् विशेषः—गुणस्यापि जन्यत्वेन क्रियात्वोपचारात् तत्र ज्ञानस्य धात्वर्थत्वम्, एवमद्वैतमतेऽपि जन्यत्वाद् द्रव्यस्यापि क्रियात्वोपचारेण धात्वर्थत्वम्। परमते तु धर्मभूतज्ञानसंकोचविकासयोर्जन्यत्वाद् धर्मभूतज्ञानस्य द्रव्यस्य क्रियात्वोपचारेण धात्वर्थत्वम्। अतो न ज्ञानं मानसी क्रिया। भामत्यादौ क्रियात्वोक्तिस्तु तस्य मनःपरिणामत्वाभिप्रायेण, न तु द्रव्यत्वप्रतिषेधेनोत्क्षेपणापेक्षेपणादिवत् क्रियात्वेन॥

न च संविन्मात्रं धात्वर्थः। व्यक्तं चेदमधस्तात्। अहमर्थस्यैव ज्ञातृत्वं नान्तःकरणस्येति। अचेतनान्तःकरणपरिणामवादः कथमिति शङ्का तु प्रकृतिपरिणाम इवेश्वरस्य सर्वत्रान्तर्यामित्वेनाधिष्ठातृत्वेन परिहरणीया। अचेतनस्य देहादेरिवान्तःकरणस्यैव ज्ञातृत्वाच्चार्वाकमतप्रवेशापत्तिरिति शङ्काऽप्यत एव नोन्मिषति॥

सर्वव्यापकस्यापि संविन्मात्रस्यान्तःकरणावच्छेदेन विशदावभासः, नान्यत्र। अत एवान्तःकरणस्य चैतन्याभिव्यञ्जकत्वव्यपदेशः। यथा दर्पणादौ मुखस्य प्रतिफलनम्, नान्यत्र। "तदनुप्रविश्येति" ब्रह्मणः प्रवेशो हि तदवच्छेदेन विशदावभास इति हि तैत्तरीयोपनिषदि भगवत्पादाः। ततश्चान्तःकरणप्रतिबिम्बे तदवच्छिन्ने वाऽहमर्थ एवान्तःकरणधर्मवृत्तेः सम्बन्धेनौपाधिकमहमर्थज्ञातृत्वम्। ज्ञानस्याहंकारनिष्ठत्वं तु साक्षाद्वस्तुगत्याऽहंकाराख्यान्तःकरण-

धर्मत्वेन । तत्र ब्रह्मचैतन्यस्याहंकारव्यञ्जकता हि नाखण्डरूपेण, किन्तु तदवच्छेदमात्रेणाहंरूपेणैव । इदमेवान्त.करणस्य चैतन्याभिव्यञ्जकत्वं नाम । व्यंग्यत्वं तु विशदावभासमात्रम् ॥

तत्रान्तःकरणं स्ववृत्तिद्वारा स्वावच्छिन्नचैतन्याभिव्यञ्जकमित्येकं प्रस्थानम् , अपरं तु प्रस्थानं वृत्तिं विना स्वयमेवेति । इदमेवाभिप्रेत्य प्रमाणजन्यां वृत्तिं विना साक्षिभास्यत्वं केवलसाक्षिवेद्यत्वमिति च विभागः । अत एवाहमर्थस्य सर्वदा भानम् ; साक्षिरूपत्वात् , घटादयस्तु जडा नाज्ञानाश्रयाः, न वा तद्विषयाः । उक्तं च---

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥

इति । तत्र घटाद्याकारवृत्तयो घटावच्छिन्नगताज्ञानविषयत्वनिवृत्तिद्वारा स्वस्मिन् प्रतिफलितचैतन्येन घटादीन् भासयन्ते । अत एव फलव्याप्यत्वं तेषाम् । न हि वृत्तिज्ञानानि घटाद्यज्ञाननिवृत्तिद्वाराऽखण्डाकारवृत्तिरिव साक्षात् घटादीन् भासयन्ति । इदमेवाभिप्रेत्याद्वैतामोदः—घटादिवृत्तिज्ञानान्यन्तःकरण उत्पद्यमानानि घटादिगतमज्ञानकल्मषमपनयन्तीति—वदति, न घटादयोऽज्ञानाश्रयविषया जडा अपीति । व्यक्तं च— सिद्धान्तलेशसंग्रहे—घटादिज्ञानानि घटावच्छिन्नचैतन्यगताज्ञानविषयत्वानि निवर्तयन्ति, न तु तदज्ञानम् । प्रातिभासिकरजतस्थलेऽपि रजतप्रतीतिदशायां तदसत्त्वापादकाज्ञानविषयत्वनिवृत्तिरज्ञानेन स्वीक्रियते, अन्यथा कथं सदिदं रजतमिति सदात्मना रजतप्रतीतिः ? अधिकं तु न्यायरत्नावलीतोऽधिगन्तव्यम् । तथाच घटादिज्ञानानि घटादिगतमज्ञानकल्मषमपनयन्तीत्यस्य घटावच्छिन्नचैतन्यगताज्ञानविषयतावच्छेदकत्वं तस्यापनयन्तीत्येवार्थः ॥

तत्रान्तःकरणादेश्चैतन्याभिव्यञ्जकत्वं स्वौपहित्येन, स्वप्रतिबिम्बत्वेन, वा । तत्रान्त्ये स्वनिष्ठत्वेनाभिव्यञ्जकत्वम् । आद्ये तु स्वोपधानेन, यथ

प्रदीपे घटादीना स्वोपधानेनेति विवेकः। तत्र प्रदीपो घटादीन् स्वोपधानेनापि व्यञ्जयति। दर्पणादिकं स्वनिष्ठतयेति प्रत्यक्षम्। तत्र प्रदीपः प्रभाद्वारेवान्तःकरणमहमाकारवृत्तिज्ञानद्वारा चैतन्यमभिव्यञ्जयत्यवच्छेदवादे। प्रतिबिम्बवादे तु साक्षादभिव्यञ्जयति। अथवा चक्षुरादिरश्मिप्रतिफलनद्वारैव वृत्तिफलनद्वारेति विवेकः। अहङ्कारस्य ज्ञानव्यञ्जकत्वमप्येवमेव। ज्ञानं चात्र न वृत्तिज्ञानम्, किन्तु ब्रह्मचैतन्यमिति पूर्वमेवोक्तम्। सर्वथा त्वात्मनोऽहमर्थस्यान्तःकरणावच्छिन्नस्यौपाधिकं ज्ञातृत्वमप्रकम्प्यम् ॥

तत्र सविन्मात्रस्य स्वतः प्रत्यक्त्वम्। अहमर्थस्य तु संविदोऽधिष्ठानतया प्रकाशेन। प्रत्यक्त्वं स्वप्रकाशत्वं वा संविन्मात्रस्यानहमर्थस्यैव मुख्यम्, अहमर्थस्य त्वधिष्ठानतया संविन्मात्रस्य प्रकाशेन। अहमर्थस्यैवात्मत्वे तु—सुषुप्तावपि तदनुभवापत्तिः। इदमत्र विविच्यताम्—किं सुषुप्तावहमर्थत्वं भाति, आहो अहमिति, अथवाऽन्यथा। तत्र न प्रथमद्वितीयौ, तदानीमहमिति प्रतीतेरनुभवविरुद्धत्वात्। यद्यपि स्वरूपज्ञानतयाऽहमर्थस्याहमर्थे भासमानेऽहमर्थत्वमपि भासत इति सुवचम्, तथाऽपि स्वप्रकाशतया स्वरूपज्ञानमात्रं सुषुप्तावपि सर्वानुभवविरुद्धमासीदित्यत्र प्रमाणं वक्तव्यम्। तत्र 'सुखमहमस्वाप्समि'ति प्रबोधे परामर्शानुपपत्तिस्तत्र प्रमाणमिति चेत्, परामर्शो हि स्मरणं ज्ञाननाशजन्यसंस्कारोद्बोधाधीनं स्वप्रकाशस्वरूपज्ञाननाशजन्यसंस्काराधीनं दुर्वचम्, सुषुप्तावात्मनाशापत्त्या प्रबोधकथाया एव व्याघातात्। स्मरणं हि धर्मभूतज्ञानसंकोचलक्षणज्ञानप्रयुक्तसंस्काराधीनमेव घटादिस्मरणस्थले दृष्टम्। न च तथा सुखविषयके स्वरूपज्ञानविषयके च विकसिते धर्मज्ञाने किमपि प्रमाणम्। सुषुप्तौ सुखमनुभवामीति कस्याप्यमनुभवाभावात्। अनुभवामीत्यपलप्यमानोऽनुभवो हि धर्मभूतज्ञानम्। स्मरणमप्यवस्थाविशेषापन्नं धर्मभूतज्ञानमेव, इति सुषुप्तौ धर्मभूतज्ञानाभावे स्मरणं निर्वोढुं न पार्यते। अत एव न तृतीयः; अभ्युपगतं हि परमार्थप्रकाशिकयाऽपि—तृतीयः पक्षस्तु नेष्यत एवेति वदन्त्या ॥

अयं भावः—सुषुप्तावपि धर्मभूतज्ञानं नित्यमस्तीति परसिद्धान्ते कथं न तेनात्मा प्रकाशते, न वा सुखमहमिति प्रथमं विवेचनीयम्, येन संस्कारोद्बोधाद् जागरे स्मरणं स्यात्। तत्र यदि विषयसंबन्धाभावेन न प्रकाशः, तर्हीदं वक्तव्यम्—किं सुषुप्तौ स्वरूपज्ञानमपि नासीत्, तथा सुखं च। यद्योम्, तर्हि कथं स्मरणमात्मनः, सुखस्य च ? धर्मभूतज्ञानं साश्रय-विषयापेक्षमेव भायादिति हि भवतां सिद्धान्तः, इति विषयाभावे कथं तत्सत्ताऽपि सुषुप्तौ। तत्र यद्याश्रयापेक्षैव नियता, न तु विषयापेक्षा, तर्हि आश्रयविषयापेक्षमेव ज्ञानमिति प्रतिज्ञाभङ्गः॥

आस्तामिदम्—इदं विविच्यताम्। धर्मभूतज्ञानं नियतं स्वाश्रयं सुषुप्तौ प्रकाशयति वा, न वा। यदि प्रकाशयति, तर्हि तेनैव विषयेण सविषयत्वं धर्मभूतज्ञानस्यायातम्। अन्यथा तदंशे जागरे स्मरणनिर्वाहः कथम् ? कथं वाऽननुभूतस्य सुखस्य स्मरणम् ? अन्यथा स्वरूपज्ञानमात्रस्य स्वप्रकाशस्य संस्काराधायकत्वायोगात् सुखस्यापि धर्मभूतज्ञानविशेषस्याभावात् कथं तयोः स्मरणनिर्वाहः ? तदर्थं धर्मभूतज्ञानेन तद्ग्रहणाङ्गीकारे तु सुषुप्तौ जागर इव सुखमहं स्वपामीत्यनुभवापत्तिः। न चेदं परेणापि स्वीक्रियते, इति सुखमहमस्वाप्समिति स्मरणानुपपत्त्या नाहंकारेणात्मनः प्रकाशः सिद्ध्यति॥

किंच यदि धर्मभूतज्ञानेन सुषुप्तौ न कस्यापि भानम्, तर्हि तदा तदा-सीदित्यत्र किं मानम् ? कुतश्च तस्य नित्यत्वम् ? यदि "न विज्ञातुर्विज्ञाते-र्विपरिलोपो विद्यते" इत्यादिश्रुतिबलात् तन्नित्यत्वमभ्युपगम्यते, तर्हि सुषुप्तौ धर्मभूतज्ञानं विकसितावस्थमेवासीत्, उत संकुचितावस्थमेव, उत सकुचित-विकसितोभयावस्थमुत्पद्यमानम्, विनश्वरं च। आद्ये न केवलमान्तराणाम्, किन्तु बाह्यानामप्यनुभवो धर्मभूतज्ञानेन मुक्तात्मन इव सर्वेषां स्यात्, इति जागरावस्थातो महीयसी सुषुप्त्यवस्थाऽऽपद्येत। यदि संकुचितावस्थमेव, तर्हि का वा गतिः—"न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्याम्नायस्य। को वा

विपरिलोपः संकोचादपरो धर्मभूतज्ञानस्य ? तृतीये तु न जागरात्सुषुप्तेर्विशेषः। ततश्चान्तःकरणधर्म एव धर्मभूतज्ञानम्। तच्च न नित्यम्। न च तत् सुषुप्तावस्ति, इत्यलौकिकमात्मधर्मभूतज्ञानमिति स्वीकर्तव्यम्, अविद्यावृत्तिरूपं वा सुषुप्त्यादि-साधारणम्। सति चैवं सुषुप्तौ सविन्मात्रस्य सुखस्वरूपस्याविद्यावृत्त्या भानम्। तस्मिन्नंशे जागरे स्मरणम्, अहमंशस्य सुषुप्तौ न भानम्, तदंशे तु जागरपरामर्शेऽनुभव एवेत्यद्वैतसिद्धान्त एव सुष्ठु लगति॥

एतेन—सुषुप्तावनुभूतावेव न प्रमाणमिति—प्रत्युक्तम्, सुखमहमस्वाप्समिति जागरपरामर्शस्यैवार्थापत्तिविधया तत्र प्रमाणत्वात्॥

एतेन—ज्ञाधातुना धर्मभूतज्ञानमुच्यते। न च धर्मभूतज्ञानं किंचिद्विशेषणविकलमात्मानं गृह्णाति, अननुभवात्, स्वप्रकाशे तादृशे तत्र तद्वैयर्थ्याच्च। तत्राहमर्थविषयकधर्मभूतज्ञाननिषेधो विशेषणविशिष्टाहमर्थग्रहणनिषेध एव पर्यवस्यति। क्वचिदहमर्थं स्वयमेव ज्ञायते इत्यादौ ज्ञाधातुप्रयोग औपचारिक इति—परास्तम्।

तत्र किञ्चिद्विशेषणविकलस्यात्मनो धर्मभूतज्ञानेन न ग्रहणम्, स्वप्रकाशे केवल आत्मनि धर्मभूतज्ञानवैयर्थ्यात्। विशेषणविशिष्टाहमर्थग्रहणनिषेधश्च निरूप्यमाणः—सुषुप्तावहमर्थे गृह्यमाणेऽहमर्थत्वमपि गृह्यते, आत्मनः स्वप्रकाशत्वात् सुषुप्तावहमिति प्रकाशो वर्तत एवेति पूर्वोक्त्या विरुद्ध्यते॥

तत्र यदि स्वप्रकाशोऽहंत्वादिविशेषणविशिष्टरूपेण न गृह्यते, तर्हि किंरूपेण तदा गृह्यते ? यदि नाहंरूपेण, किन्तु स्वरूपज्ञानमात्ररूपेण, तर्हि स्वरूपज्ञानं नाहमर्थ इत्येव फलति, इत्यद्वैतमत एव निपाते। 'न किंचिदवेदिषमि' त्यपि तदनुगुणमेव पूर्वोक्तविधया योजनीयम्। तत्र यथा परमते स्वरूपप्रकाशो न मुख्यो धात्वर्थः, किं त्वौपचारिक., एवमेवाद्वैतमतेऽपि संविन्मात्रे ज्ञाधातुप्रयोग औपचारिकः॥

वस्तुतस्तु ज्ञानपदं तत्र रूढमेव, न तु यौगिकमिति प्रागेवोक्तम्। तत्राद्वैतमते परमत इव मुख्यो ज्ञाधात्वर्थो लौकिकानुभूतिरेव धर्मभूतज्ञानमिव सविषयेति निष्कर्षः॥

सति चैवं "न किञ्चिदवेदिषमि"त्यद्वैतरीत्या सुतरां पूर्वोक्तविधयोपपद्यते ॥

परमार्थप्रकाशिका तु—घटोऽनुभूयत इत्यादौ ब्रह्मानुवृत्त्युपपादनाय परमात्मचैतन्यमेव ज्ञाधात्वर्थत्वेन मन्यते, इति भवदभिमतानुभूत्यभावसाधक एवायं "न किंचिदवेदिषमि"ति प्रत्यय इत्यन्यथाऽद्वैतसिद्धान्तमनूद्य 'न किंचिदवेदिषमि'ति प्रत्ययमपथे नयति ॥

अयं हि प्रत्ययः पूर्वोक्तविधया संविदंश इवाहमंशेऽपि स्मृतिः। अद्वैतमते हि सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमिति सिद्धान्तात् विषयविशेषविशेषिताज्ञानानुभवस्य सौषुप्तस्य स्वीकारात्। सर्वथा तु संविन्मात्रात्मतासिद्धान्त एव सौषुप्तानुभवस्य तन्निबन्धनजागरपरामर्शस्य च निर्वाहः॥

तत्राद्वैतमते—सुषुप्तौ संविन्मात्रं प्रकाशते, न ज्ञाता। ज्ञातृत्वं हि न संविन्मात्रस्य धर्मः; किन्तु संविदसंवित्संवलितस्याहमर्थस्यौपाधिकस्यौपाधिको धर्मः। तत्र सुषुप्तावुपाधेः कारणात्मना सत्त्वेऽप्यभिव्यक्तरूपेणानवस्थानादहमर्थोऽप्यौपाधिकोऽनभिव्यक्त एव, अतो न ज्ञातुस्तत्र प्रकाशः। परमते तु धर्मभूतज्ञानाश्रयत्वस्यैव ज्ञातृत्वात्, सुषुप्तावपि साश्रयस्य धर्मभूतज्ञानस्य स्वीकारात् कथं न ज्ञातृत्वेनात्मनः प्रकाशः? सत्यमद्वैतमते साक्षित्वेनात्मा वर्तते, परं तु नान्तःकरणोपहितत्वेन, किं त्वविद्योपहितत्वेन। स चायमभिव्यक्तोऽहं साक्षी तदा प्रकाशत एव। अत एव 'न किंचिदवेदिषमि'ति परामर्शनिर्वाहोऽद्वैतमते ॥

सुषुप्तावज्ञानोपहितत्वादेव नाहमित्यात्मनो भानम्, जागरे तु तस्यैवान्तःकरणोपधानादहंरूपता, तत्र तु न स्मरणमिति प्रागेवोक्तम्। "हन्ताहमिमास्तिस्रो देवता." इत्यत्रापि समष्ट्यन्तःकरणात्मना मायोपहितस्यैवेश्वरत्वादहमिति परामर्शो न विरुद्ध्यते। तत्र मायोपधानमनादीश्वरस्य सर्वनियामकस्य न संसारितापादकमिति संप्रतिपन्नम्। सर्वथाऽन्त.करणोपहितस्यैवाहमर्थजीवात्मरूपत्वात् तस्यौपाधिकं ज्ञातृत्वादिकम्, उपाधिविलये तु

नाहमात्मना ज्ञातृत्वमित्यद्वैतसिद्धान्ते सौषुप्तानुभवोऽपि प्रमाणम्। सर्वं चेदं शास्त्रैकसमधिगम्यम् , इति शब्दप्रमाणस्याद्वैतमतेऽसाधारणं प्रयोजनम्—कर्तृत्वादिबन्धस्य मिथ्यात्वावगमः, अद्वितीयब्रह्मावगतिश्च ॥

तत्राद्वैतसिद्धान्ते जगन्मिथ्यात्वेन शास्त्रस्यापि मिथ्यात्वेऽपि तस्यानधिगतार्थबोधकत्वरूपं प्रामाण्यमनपोह्यम्। अत एव बाष्पे धूमत्वभ्रमेण पर्वते वह्न्यनुमानं प्रमात्मकं सर्वसाक्षिकम्। अतो बाधितेनापि प्रमाज्ञानं प्रसिद्धम्। वस्तुतस्तु यावद्ब्रह्मसाक्षात्कारमबाधात् शास्त्रमबाधितमेव यावत्तत्सत्त्वम्। भाविबाधदृष्ट्या खलु जगतः, शास्त्रस्य च मिथ्यात्वम्। शुक्तिरूप्यादिकमपि यावद्बाधं प्रमाणमेव। अत एव स्वतोग्राह्यं प्रामाण्यं भ्रमप्रमासाधारणं तद्वति तत्प्रकारकज्ञानत्वमिति स्वतःप्रामाण्यवादे, भ्रमव्यावृत्तमनधिगतार्थविषयकं ज्ञानं प्रमेत्युपक्रमे च परिभाषा निरवोचत्। न्यायरत्नावली च—मिथ्यात्वेनानिश्चीयमानार्थविषयकं ज्ञानं प्रमा भ्रमप्रमासाधारणमिति। तत्र यद्यप्युक्तविधं प्रामाण्यं प्रत्यक्षस्यापि, यदि श्रुत्यमूलं प्रत्यक्षं किमपि भाविबाधायोग्यं तत्त्वं बोधयति, न तु तथा ॥

विरोधो हि श्रुतिप्रत्यक्षयोर्जगत्सत्यत्वमिथ्यात्वयोर्दृश्यते। तत्र च श्रुतिरप्रमाणम् , प्रत्यक्षं प्रमाणमिति वा स्यात् , श्रुतिः प्रमाणम् , प्रत्यक्षमप्रमाणमिति वा। तत्र शास्त्रमसंभावितदोषं प्रबलं प्रमाणम् , संभावितदोषं च प्रत्यक्षं दुर्बलमप्रमाणमित्यद्वैतिनः। तत्र करणापाटवादिदोषमूलकं प्रत्यक्षं निवृत्ते दोषे तेनैवेन्द्रियेण जन्येन प्रत्यक्षान्तरेण बाध्यत इति "इदं रजतम्" "नेदं रजतमिति" प्रत्यक्षस्थले दृष्टम्। तत्र प्रत्यक्षत्वे समानेऽपि निर्णीतदोषम् , बाधितं वा प्रत्यक्षमनिर्णीतदोषेण, अबाधितेन वा प्रत्यक्षेण बाध्यत इति वस्तुस्थितिः, इति प्रत्यक्षमित्येव सर्वं न प्रमाणम् , श्रुतिस्तु नाप्रमाणतामर्हतीति "चोदनालक्षणोऽर्थो धर्मः" "शास्त्रयोनित्वादि" त्यादौ सम्प्रतिपन्नम् ॥

अविद्या हि यत्र केवलं विषयात्मना परिणमते, न तु ज्ञानात्मनाऽपि तत्रैव दोषविधया हेतुः, यथा घटादौ, न तु तज्ज्ञानेऽपि। तद्ध्यविद्यापरिणामा-

न्तःकरणस्य परिणामः, न त्वविद्याया घटादिप्रत्यक्षस्थले। अयमेव न्यायः शास्त्रेऽपि, इति शास्त्रमेवाविद्यापरिणामः, न तु तज्जन्या प्रमाऽपि तत्परिणामः। शुक्तिरूप्यादिस्थलेऽप्यविद्यैव रजतात्मना, तदाकारवृत्त्यात्मना च परिणमते, इति तत्र काचकामलकरणापाटवादिकमेव दोषविधया हेतुः। तत्र प्रत्यक्षे संभावितदोषत्वं शुक्तिरजतादिस्थले दृष्टम्, शास्त्रे तु न तथा। घटादिप्रत्यक्षे यद्यपीन्द्रियदोषो न तद्दशायां निर्णीयते, तथापि निश्चितप्रामाण्यशास्त्रविरुद्धत्वात् संभाव्यते दोषः। स च भाविबाधप्रतीत्याऽविद्यैवेति निश्चीयते। अनेन न्यायेन शास्त्रजन्यज्ञानेऽप्यविद्या दोषविधया यत्र कारणत्वेन भाविबाधप्रतीत्या च निर्धार्यते, तत्र शास्त्रजन्यज्ञानमपि प्रमा। तत्र च तत्त्वमस्यादिमहावाक्यजन्यं ज्ञानमप्यप्रमा स्यात्, अद्वितीयादिवाक्यानि च—यदि तद्विषयोऽपि प्रमाणान्तरेण बाधितः स्यात्। अयमेव न्यायः सगुणवाक्येषु, कर्मकाण्डे च। तत्र च सगुणनिर्गुणवाक्ययोर्विरोधे कस्य प्रामाण्यम्, कस्याप्रामाण्यमिति संशये परत्वादपच्छेदन्यायेन निर्गुणवाक्येन सगुणवाक्यस्य बाधः, न तत्र प्रत्यक्षबाधाबाधशंकाऽपि; उभयोरप्यलौकिकत्वात्॥

"स एष यज्ञायुधी अञ्जसा स्वर्गं लोकं याती"त्यत्र तु प्रत्यक्षविरोधेन शास्त्रस्य बाधमाशङ्क्य प्रत्यक्षापेक्षया शास्त्रप्राबल्यमभिप्रेत्य शरीरातिरिक्तात्मवादो भगवता शबरस्वामिना प्रथमे तन्त्रे निरधारि; अन्यथा शरीरात्मवाद एव सर्वस्य शास्त्रस्य पर्यवसानापत्त्या नास्तिकवादेनैव जितं स्यात्, न कर्मकाण्डम्, उपासनाकाण्डम्, अन्यद्वा प्रमाणं स्यात्। भेदवासना अपि दोषा भवितुमर्हन्ति। तन्निर्णयस्तु बाधनिर्णयाधीनः, न बाधनिर्णयाधीनो दोषनिर्णय इति शाबरभाष्ये श्लोकवार्तिके च निर्णीतम्। व्यक्तं चैतद् न्यायरत्नेऽपि श्लोकवार्तिकविवरणे॥

एतेन—दोषत्वनिश्चये शास्त्रस्य निर्विशेषबोधित्वनिश्चय, निर्विशेषबोधित्वनिश्चये दोषनिश्चय इत्यन्योन्याश्रय इति—परास्तम्।

व्यक्तं चैतत्—"यस्य च दुष्टं करणं यत्र तु मिथ्येति बाधक· प्रत्यय." इति शाबरभाष्यविवरणावसरेऽन्यत्र च ॥

भेदवासनानामेकत्र प्रत्यक्षादौ दोषत्वे निर्णीते भेदपराणां वेदान्तवाक्यानामपि संभावितदोषत्वेन दौर्बल्यमर्थसिद्धम्, इति सगुणवाक्येन प्रत्यक्षादिवद् अभेदपरवाक्यानां बाधो दुर्वचः । संगुणवाक्यानि ह्युपासनापराण्यप्युपासनामात्रपरतयोपास्यस्य भाविबाधप्रतीत्या व्यावहारिकप्रमाणान्येव ॥

" सदेव सोम्येदमग्र आसीदि' त्याद्युपक्रमपराशमर्शोपसंहाराद्युपबृंहिताभेदवाक्यानां ज्ञानमात्रेण मोक्षप्रतिपादकानां नान्यथोपपत्तिः । परा विद्या ह्यद्वितीयं ब्रह्म प्रस्तुत्य भूतयोनित्वसर्वज्ञत्वादिना रूपेण कारणं ब्रह्मोपस्थापयति, "सदेवे"ति तु सद्वितीयं ब्रह्मोपक्रम्याद्वितीयमुपस्थापयति । तत्रोभयत्राप्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽध्यारोपापवादन्यायेन परमार्थतोऽद्वितीयत्वे ब्रह्मण इत्येव वक्तव्यम्, इति कारणवाक्यान्यपि तटस्थलक्षणविधया ब्रह्म बोधयन्ति परमतात्पर्येण निर्विशषपराण्येव सर्वाणीति लघुचन्द्रिका विशदयत्युपक्रमे ॥

न चैवमद्वितीयवाक्य सगुणस्वरूपोपपादकमर्थान्तरपरं योजयितुं शक्यते । तत्रोपासनाप्रकरणाभावाद् न तेषामुपास्यसमर्पकतयोपयोगः, न वा प्रयोजनान्तरं तद्विज्ञानमात्राम्नानस्य । अत एव भेदपराणि सर्वाण्यभेदप्रतिपादनपराणि निषेधापेक्षितप्रतियोगिसमर्पणविधया चरितार्थानि, न स्वार्थमात्रपर्यवसानेन प्रमाणानि, इति न निर्विशेषवाक्यानां सगुणवाक्यैर्बाधोऽन्यथानयनं वा युक्तम् । निषेध्यसमर्पकाणामपि सगुणवाक्यानामभ्युदयोपासनार्थपरतया न वैयर्थ्यम्, येन 'निर्गुणवाक्यैरेव गतार्थत्वात्, किमेतैः सगुणवाक्यैः । न हि शास्त्रं विना प्रयोजनं निषेध्यमात्रसमर्पकं बहुलमप्रमाणं परमार्थत इति कल्पनं युक्तमि'ति शङ्का सावसरा स्यात् ॥

"जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यान्, अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाऽग्निहोत्रं जुहोति" इति जर्तिलयवागूस्तुत्या तद्विधानम्, पुनस्तस्यैव निषेधेनाजक्षीरविधानं चोभयमपि प्रयोजनवशेन दृश्यते। स एव न्यायः, सगुणवाक्यानां निर्गुणवाक्यैर्बाधेऽपि, इति सगुणवाक्यानां निषेध्यसमर्पकाणामपि न वैफल्यम्। अत एव नेदं रजतमिति ज्ञानस्य प्रातिभासिकरजतबाधकत्वं परत्वात्, इति निर्गुणवाक्यानां प्राबल्यम्। न च निषेधापेक्षितनिषेध्यसमर्पकाणि निषेधवाक्यानामुपजीव्यानि; बाध्यबाधकयोः परस्परानपेक्षयोत्पत्तेः, येन निषेध्यसमर्पकाणामेव प्राबल्यं स्यात्। भ्रमज्ञानमेव च प्रमां बाधेत। व्यक्तं चैतद्भामत्याम् ॥

"यजतिषु येयजामहं करोति नानूयाजेषु" इत्यत्र न प्रतिषेधः; वस्तुनि क्रियायामिव विकल्पायोगात्। "अथात आदेशो नेति नेती"ति प्रत्यक्षादिप्राप्तस्य खलु "नेह नानाऽस्ति किंचने"त्यादाविव निषेधः, इति नात्र विकल्पसंभावनाऽपि, न वा पर्युदासपरतया योजनं च, इति "न कलञ्जं भक्षयेदि"त्यादाविव दुर्बलप्रमाणप्रसक्तस्य निषेध एव "नेह नानास्ति किंचने"-त्यादौ युक्तम्, इति नात्र यजतिषु येयजामहं करोति नानूयाजेषुवाक्यविषय-न्यायस्यावसरः, इति सगुणवाक्यप्राबल्ये कारणाभावाद् निर्गुणवाक्यस्यैव परत्वेन प्राबल्याच्च न सगुण एव वेदान्तानां पर्यवसानम्, किन्तु निर्गुणवाक्येन बाधितत्वात् तस्य निषेधापेक्षितप्रतियोगिसमर्पकत्वेन, उपासनार्थत्वेन वोपयोगः ॥

यत्तु—सगुणनिर्गुणवाक्ययोरत्र विरोध एव नास्ति, निर्गुणपदस्य हेय-गुणराहित्यपरतया योजनेन प्रामाण्यसंभवात्—इति।

तत्रेदमेवोच्यते—को वा वदति सगुणवाक्यस्याप्यप्रामाण्यमिति? व्यावहारिकार्थपरतया तस्यापि प्रामाण्यस्वीकारात्। इदं न यथाश्रुतयोजनया, किंत्वन्यार्थपरतया कल्पनेनेति चेत्, समं निर्गुणवाक्यप्रामाण्येऽपि। तत्रा-

न्यतरस्यान्यथानयन आवश्यके प्रबलनिर्गुणवाक्यापेक्षया दुर्बलसगुणवाक्यान्यथापरत्वमेव युक्तम् , न तु दुर्बलेन प्रबलस्यान्यथा नयनम् ॥

उपक्रमाधिकरणं परस्परापेक्षविध्यर्थवादविषयम्, एकवाक्यविषयम् , न तु स्वतन्त्रप्रमाणद्वयविषयम् , विधिनिषेधविषयं वा। तत्र ह्यपच्छेदाधिकरणनय एव—"पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदि"ति सूत्रारूढः। न चेदं नियतपौर्वापर्यविषयम्। तत्र ह्यपरोऽपच्छेदन्यायः, यत्रान्यतरस्य प्रामाण्यम्। अधिकं वेदान्तरक्षामणौ। क्रमिकापच्छेदो हि नियतपौर्वापर्य एव। "नेह नानास्ति किंचन," "एकमेवाद्वितीयम्" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिना सर्वकारणे, तत एव सर्वतादात्म्यापन्ने ब्रह्मणि सर्वनिषेधाद् न सर्वसत्यत्वं तद्विरुद्धेन प्रत्यक्षेण स्थापयितुं शक्यते। "सर्वं खल्विदं ब्रह्मे" ति सामानाधिकरण्यमपि सर्वस्य ब्रह्मव्यतिरिक्तस्य मिथ्यात्वं बाधायां सामानाधिकरण्यविधया ज्ञापयति ॥

सर्वाणि कारणवाक्यानि ब्रह्मण उपादानत्वनिरूपणपराणि जगत्सत्यत्वे नोपपद्यन्ते, इति बहुतरवेदान्तवाक्याप्रामाण्यं प्रत्यक्षस्याबाध आपद्येत। अतो भेदविरोध्यर्थप्रतिपादकत्वमभेदशास्त्रस्य नास्तीति बाधितमिदम् ॥

तथाच विमता घटपटादिप्रतीतिः, संभावितदोषमूला, प्रत्यक्षप्रतीतित्वात्; संमतवदित्यनेन प्रत्यक्षे संभावितदोषत्वेनानाश्वासः। न चात्र बाधितत्वमुपाधिः; घटपटादिप्रतीतीनां शास्त्रबाधितत्वेन साधनव्यापकत्वात्। बाधितत्व तु भाविबाधमादायैव, न तु प्रतीतिकालिकं तमादाय ; अन्यथा न साध्यव्यापकत्वमपि। न हि शुक्तिरूप्यादिकमपि प्रतीतिकाले बाधितम् , तत्र प्रातिभासिकसत्त्वाभ्युपगमात्। तत्र बाधितत्वपदेन प्रातिभासिकत्वस्यैव विवक्षायां तु देहात्मैक्यप्रतीतौ साध्यव्यापकत्वम् ; दोषमूलायां तस्यां प्रातिभासिकत्वाभावात्। जागरिकः प्रत्ययः, निरालंबनः, प्रत्ययत्वात् ; स्वाप्नप्रत्ययवदिति योगाचारानुमानेऽपि स्वाप्निकं प्रातिभासिकत्वं जागरितप्रत्ययस्य नास्तीत्येव प्रतिपादितम्।

तावतैव वैधर्म्यं तत्र। तदेवात्रापि यदि विवक्ष्यते, तर्हि तु स्वागतम्। न हि जागरिका अपि प्रातिभासिका इत्यद्वैतिनो मन्यन्ते। परमतरीत्या शुक्तिरूप्यादीनामपि न बाधितत्वमित्यन्यदेतत् ॥

तत्राभेदश्रुतिर्दोषमूला, प्रतीतित्वात्, भेदश्रुतिजन्यप्रतीतिवदित्यनुमानं तु भेदश्रुतिजन्यप्रतीतेर्भाविबाधमादायैवेति वक्तव्यम्। न च तेन न्यायेनाभेदश्रुतेरपि दोषमूलत्वानुमानं संभवति; तद्बाधकाभावात्। तथाच भाविबाधप्रमितिविषयत्वं बाधितत्वं परेषामाभाससाम्य एवोपाधिः, न तु प्रत्यक्षप्रतीतेर्दोषमूलत्वानुमाने। अनेन भेदश्रुत्यप्रामाण्यमपि यथाश्रुतार्थे सिद्धप्रायम्। न हि निर्णीतदोषमूलयाऽनिर्णीतदोषमूला भेदश्रुतिर्बाधमर्हति ॥

एतेन—विवादाध्यासितं ब्रह्म, मिथ्या, अविद्यावदुत्पन्नज्ञानविषयत्वात्, असत्यहेतुजन्यज्ञानविषयत्वाद्वा, प्रपञ्चवदित्याभाससाम्यमपि—प्रत्युक्तम्।

तत्र प्रपञ्चमिथ्यात्वं नाविद्यावदुत्पन्नज्ञानविषयत्वप्रयुक्तम्, न वाऽसत्यहेतुजन्यज्ञानविषयत्वप्रयुक्तम्, किन्तु तद्बाधकज्ञाने बाध्यत्वेन विषयत्वप्रयुक्तम्; यथा शुक्तिरजतादौ। न च ब्रह्म तथा; ब्रह्मबाधकज्ञानस्य बाध्यत्वेन तद्विषयकस्याभावात्। तथाच बाधितत्वमेवात्राप्युपाधिः। द्वितीयहेतुस्तु बाष्पे धूमभ्रमप्रयुक्तानुमितिविषये वह्नावनैकान्तिकः। अत एवोभयत्राप्रयोजकत्वम्, इति प्रत्यक्षविरोधेन न शास्त्राप्रामाण्यम्, किन्तु शास्त्रविरोधेन प्रत्यक्षस्यैवाप्रामाण्यम्; अन्यथा चिदचिच्छरीरकत्वमपि ब्रह्मणो न सिध्येत्। न च तत्र प्रत्यक्षाविरोधः। एतच्छरीरस्यैतदात्मशरीरत्वं हि प्रत्यक्षं कथं न परमात्मशरीरत्वबोधकशास्त्राविरुद्धम्? अयमेव न्यायोऽभेदश्रुतिनिर्णयेऽपि। न च तत्र प्रत्यक्षविरोधोऽपि, जीवत्वेश्वरत्वोपलक्षितसंविन्मात्रभेदस्याप्रत्यक्षत्वात्, तदभेदस्यैव शास्त्रार्थत्वाच्च। यथा चासत्यादपि सत्यार्थप्रतीतिर्न विरुद्धा, तथोपपादितमधस्ताद्विस्तरेण ॥

संग्रहस्तु—स्वाप्निकचोरादेः सत्यभयहेतुत्वं हि प्रमाणसिद्धम्। तत्र तज्ज्ञानमेव हेतुरिति वर्णनमपि भक्षितेऽपि लशुनेऽरोगशान्तिरेव। तत्र तज्ज्ञा-

नमपि चोरादिवत् तत्राविद्यापरिणामत्वात् प्रातिभासिकमेव। तावतापि सत्त्वाबाधे तु व्यावहारिकाणामपि व्यावहारिकसत्त्वाबाधाद् न कार्यकरत्वविघातः। उक्तं च—

पूर्वसंबन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा॥

वस्तुतस्तु सत्त्वं न कारणतावच्छेदकम्—

अन्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः।
नान्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः॥

इति हि खण्डनकारः। अत्राद्वैतामोदकाराणां स्वाप्नज्ञानस्मरणत्वोक्तिस्तु स्मृतिरूपत्वाभिप्रायेण। भाषितं हि—"स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इति। अत एव स्वाप्निकानामसत्यत्वोक्तिस्तत्र तत्र॥

"अर्थेनैव विशेषो हि निराकारतया धियामि"त्युक्त्याऽर्थविशेषितस्यैव ज्ञानस्य स्वाप्नस्य कार्यकारित्वादर्थोऽपि तत्र कारणमेव; अन्यथा सर्वेषां स्वाप्नानां जागराणाम्, विषयभेदेऽपि च ज्ञानत्वाविशेषादेककार्यकारित्वापत्तिः, इत्यर्थस्य प्रतिभासमानत्वमेवापेक्षितम्, न तु ज्ञानजनकत्वमपीत्यादि नोपपद्यते। स्वाप्निकार्थस्य स्वाप्निकज्ञानजनकत्वमस्तु वा, मा वा। स्वाप्नज्ञानकार्ये कारणतावच्छेदकतया जनकत्वं विना कथमुक्तरीत्या न कार्यासांकर्यम्। सर्वथा तु स्वाप्निकज्ञानजनकत्वमप्यविद्यापरिणामत्वादसत्यस्यैव, न तु सत्यस्य॥

एतेन—विषयासत्त्वेऽपि ज्ञानासत्यत्वं नास्तीत्यत्रैव निर्भर इति—परास्तम्; स्वाप्नतज्ज्ञानयोरुभयोरपि प्रातिभासिकसत्तायामेव तात्पर्यात्, असत्यात् सत्योत्पत्तौ सत एव कारणत्वानियमात्॥

सत्कार्यवादस्तु नाबाध्यकार्यवादः, किन्तु कारणे विद्यमानस्य कार्यस्योत्पत्तिवादः। कारणसत्ताऽपि पूर्वसंबन्धनियम एव, नाबाध्यत्वे। प्रकृत्य-

तिरिक्तं सप्रकृतिविकृतिरूपं न नित्यम्, नतरां सत्यम्। निरुपाख्यादसतो न कार्योत्पाद इति संप्रतिपन्नम्॥

न च शास्त्रं वा मृदादिकं वा निरुपाख्यम्, शुक्तिरूप्यादिकं वा। असतः कारणत्वापत्तिस्तदैवावकाशेत, यदि पूर्वसंबन्धनियमः स्यात्। अनेनैव न्यायेन शास्त्रस्यापि सत्त्वासत्त्वौदासीन्येनैव प्रमाणत्वात्, वस्तुतस्तदसत्त्वेऽपि प्रामाण्यमनपोहम्। असत्त्वं चात्र शब्दस्याबाध्यत्वाभावमात्रम्, न तु तुच्छत्वम्, सदसद्विलक्षणत्वरूपत्वान्मिथ्यात्वस्य। न च सत्त्वासत्त्वे परस्पर-विरहरूपे, सत्त्वाभाववति सत्त्वेऽसत्त्वाभावात्, असत्त्वाभाववत्यसत्त्वे सत्त्वा-भावाच्च। अयमेव न्यायो विषयस्य ज्ञानजनकतायामपि। दूरतो गुल्मे शशं तच्छिरसि शाखाखण्डं च पश्यतः शशशृङ्गज्ञानं तु प्रातिभासिकस्यैव शशशृङ्गस्य। एवमेव तत्र शाखाखण्डसंलग्नशोणितकुसुमदर्शितं शोणितं शश-शृङ्गमिति ज्ञानमपि। तस्यार्थक्रियाकारित्वं तद्दर्शनेच्छया प्रवृत्तिदर्शनाद्वर्तत एव॥

वस्तुतस्तु—व्यावहारिकं सत्त्वं शास्त्रस्यापि वर्तते ; तज्जन्यज्ञानस्या-प्यबाधितार्थविषयकत्वलक्षणं प्रामाण्यात्। यथा चैवं सति ब्रह्मणोऽपि न व्यावहारिकत्वापत्तिः, तथा पूर्वमेवोक्तम्॥

तत्र मिथ्यात्वं द्विविधम्—फलसंवाद्यर्थक्रियाकारित्वम्, तद्विसंवाद्यर्थ-क्रियाकारित्वं च। तत्राद्यं व्यावहारिकत्वम्। प्रातिभासिकत्वं तु द्वितीयम्। तत्र प्रथममेव तत् शास्त्रस्य, न द्वितीयम्। मिथ्याशब्दत्वमात्रेण तु तयोः साम्यमेव। तथाच मिथ्यात्वेऽपि शास्त्रस्य प्रामाण्यमेव। कण्टकेन हि कण्ट-कोद्धरणम्। तदपि व्यावहारिकेण व्यावहारिकस्य, न तु मिथ्याकण्टकेन प्रातिभासिकेन व्यावहारिकस्य कण्टकस्योद्धरणं कोऽपि वदति, येन मिथ्या-त्वेऽपि कार्यकारित्व उक्तदूषणमापतेत्। अन्यानि चात्र स्वस्य कण्टकादिग्रहणे-नात्र दूषणान्यप्यत एवानवकाशानि॥

यथा शास्त्रोपदेशमात्रेण प्राप्तिमात्रं पुरुषार्थः। सर्वस्य परमात्मैवात्मा। अहमपि परमात्मनश्शरीरमेवेति कुतोऽन्ये तत्रैव न व्याप्रियन्ते, लोकव्यवहाररसिकाश्च। यदि वस्तुतः परोक्षज्ञाने शास्त्रतो जातेऽपि तदनुसारेण तत्तत्साधनानभ्यासात्, तर्ह्यद्वैतमतेऽपि शास्त्रतो मिथ्यात्वेऽवगतेऽपि न सिद्धावस्था प्राप्ता केषांचन। केषांचन तु सिद्धानामपि प्रारब्धभोगानुसारिणी प्रवृत्तिराधिकारिकाणां तत्तत्संप्रदायाचार्याणामिवेति मन्तव्यम्। दृष्टं हि नाटकादौ मिथ्यानलत्वादौ निर्णीतेऽपि नलवदभिनयः, अवताराणां च रामकृष्णादीनां तत्तज्जन्मानुगुणो व्यवहारः, इति सर्वमिथ्यात्वे कथमद्वैतिनां लौकिकव्यवहार इत्यपि परिहासो न विकल्पसहः॥

प्रातिभासिकरेखावर्णादिना सत्यवाक्यज्ञानाद् रेखागवयादिना सत्यगवयादिप्रतीतेश्च प्रातिभासिकादसत्यादपि व्यावहारिकप्रमादर्शने स्थिते कथं व्यावहारिकादपि शास्त्रात् पारमार्थिकप्रमोत्पत्तिर्न भवति? न केवलं बालाः, वृद्धा अपि रेखां वर्णमेव प्रत्यभिजानन्ति, न तु रेखासु वर्णसंकेतं स्मृत्वा ततो वाक्यस्वरूपं निश्चिन्वन्ति। ततश्च तत्र सर्वत्र कथं रेखावर्णो नासत्यः?

यत्तु—श्रुतेर्बाधकत्वे शून्यवाक्यमपि बाधकं स्यात्—इति,

तत्रेदमनुयुज्यते—भवतां मते कथं शून्यवाक्यं ब्रह्मणो न बाधकम्? यदि सर्वयाथार्थ्यवादिनां सर्वं प्रमाणम्, तर्हि शून्यमेव तत्त्वं भवतामपि। तस्य पौरुषेयत्वेनानाप्तप्रणीतत्वेन यदि न प्रमाणम्, तर्हि "नेह नानास्ति किंचने"ति वाक्यमतादृशं जगन्मिथ्यात्वं बोधयत् कथं न तत्र प्रमाणम्? मिथ्यात्वस्यापि मिथ्यात्वं दृश्यत्वस्य प्रतियोगिसाधारणस्य निषेध्यतावच्छेदकत्वाद् न विरुद्धम्, न वा तस्य तद्वाक्यत्वेन प्रामाण्यं सुनिवारम्। 'सर्वं शून्यमि'ति वाक्यस्यापि 'नेह मानास्ती'त्यनेन स्वरूपेणापि बाधेन 'अस्ति ब्रह्मे'ति वाक्यनिषेधः कथम्? न च शून्यं तत्त्वं सर्वेषामधिष्ठानं शून्यवादिनां मते। न

हि चतुष्कोटिविनिर्मुक्तं घटादौ सत्त्वप्रतीतेर्नियामकतामर्हति, न वा निर्विशेषं ब्रह्म शून्ये कल्पितम्, इति तस्य मतं सर्ववैदिकमतविद्वेषिणः, यतो ब्रह्मैव नोरीक्रियते तत्त्वमिति। एवं शून्यमपि न तत्त्वमिति वैदिका मन्यन्ते, इति कस्य मतेन कस्य वा बाधो नाम? तदप्रामाण्यं त्वद्वैतिनामपि समानम्। तथाच शास्त्रस्य निर्विशेषपरत्वे प्रपञ्चमिथ्यात्वे च श्रुतिबाधो वर्तते वा, न वेत्येव वक्तव्यम्। तत्र च वक्तव्यं सर्वं पूर्वमेव वर्णितम्, इति भाविबाधामादाय शास्त्राणां दृश्यत्वेन मिथ्यात्वेऽपि विषयतो न मिथ्यात्वं शास्त्रजन्यज्ञानस्य, इति निर्विशेषे ब्रह्मणि, सर्वमिथ्यात्वे च नाप्रामाण्यम्॥

"सदेव सौम्येदमग्र आसीदि"त्यादीनि निर्विशेषवाक्यानि पूर्वमेव निर्विशेषप्रमाणतया निर्णीतानि। तत्तत्प्रकरणभाष्यादौ चाधिकं व्यक्तम्। वाक्यविशेषाणामुपनिषद्भाष्ये भगवत्पादा अप्यद्वैतसिद्धान्तविरुद्धमेव भाषन्ते, इति तु तद्भाष्याशयापरिशीलननिबन्धनम्, इति नात्र ग्रन्थविस्तरभयाद् व्याप्रियते॥

स्मृतिवाक्येषु, पुराणे चोपनिषदभिमताद्वैतसिद्धान्त एवोपबृंह्यते। तत्र यद्यपि पुराणानामपि स्मृतित्वेनैव प्रामाण्यम्; तथाप्यवयुत्यानुवादोऽयम्॥

तत्र ब्रह्मसूत्रमपि स्मृतिरिति परे। तत्र च "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र ही"ति सूत्रमद्वैतसिद्धान्तमेव पोषयतीति व्यक्तं तत्सूत्रभाष्यभामत्यादौ, वेदान्तरक्षामण्यादौ च॥

> यत्तु—स्वभावतः, स्थानतश्च निर्विशेषं सविशेषं च न भवतीति व्याहतम्। न हि ब्रह्म सविशेषमपि न भवति, निर्विशेषमपि न भवति। निर्विशेषतया श्रुत्युक्तत्वादिति वाक्यमन्वितार्थम्, निर्विशेषतया श्रुत्युक्तत्वे तन्निषेधासंभवात्, तथा सविशेषतया श्रुत्युक्तत्वे तन्निषेधायोगाच्च। एकतरमात्रनिषेधार्थत्वे सविशेषमित्येवोभयलिङ्गस्थाने निर्देशौचित्यात्—इति,

तत्रेदं सूत्रं तत्पदार्थशोधनपरमिति संप्रतिपन्नम्। तत्र बहूनां सविशेषवाक्यानां दर्शनेन सार्थादपि तस्करा बहव इति न्यायेन वेदान्तवाक्यानि सविशेषप्रधानानि, उत तात्पर्यलिङ्गादिपर्यालोचनेन निर्विशेषप्रधानानि, कस्य

लिङ्गस्य प्राबल्यमत्र, कस्य चान्यथा नयनमिति पूर्वोत्तरपक्षबलाबलनिर्णायककारणाभावादुभयलिङ्गमिति पूर्वपक्षे तन्निराकरणार्थमिदं सूत्रम्। तेन च सविशेषवाक्यस्य निर्विशेषवाक्यस्य चोभयस्य प्रामाण्येन सविशेषवाक्यस्य समस्तकल्याणगुणपरत्वेन निरस्तसमस्तहेयगुणपरत्वेन निर्विशेषवाक्यस्य च योजनेनोभयलिङ्गमिति द्विविधवाक्यानामपि परस्परबाधकायोगमभिप्रेत्य पूर्वपक्ष इति फलति। तेन च निर्गुणश्रुतीनां हेयगुणराहित्यपरतया योजनेन सगुणवाक्यानां यथाश्रुतयोजनम् ॥

तत्रोभयलिङ्गमिति हेतूपन्यासः, 'न स्थानतोऽपी'ति स्थानप्रयुक्तापुरुषार्थगन्धाभावसाधनम्। तत्र यद्यप्यपुरुषार्थगन्धाभावे साध्ये निरस्तसमस्तदोषत्वमेव पर्याप्तो हेतुः, तथापि समस्तकल्याणगुणाकरत्वेन सविशेषवाक्यानामपि निर्विशेषवाक्यसमानयोगक्षेमतया प्रामाण्यसूचनार्थमुभयलिङ्गत्वस्य हेतूकारणं स्वरूपकथनमात्राशयेन। अथवा निर्विशेषवाक्यस्य प्राबल्येन सगुणवाक्यानां तदपेक्षितनिषेध्यसमर्पकतया वा योजनमपि संभवतीत्युभयविधवाक्यानामप्यबाधेनोपपत्तिरिति भवति। न चैवं सत्युभयलिङ्गत्वं ब्रह्मणो व्याहतमिति फलति ॥

तत्र च सिद्धान्तः—नोभयलिङ्गं ब्रह्म, किन्तु निर्विशेषमेव, इति सविशेषवाक्यानि निषेध्यसमर्पकतयाऽभ्युदयफलोपासनामात्रपरतयाऽवान्तरतात्पर्याणि, मुख्यतात्पर्यं तु निर्विशेषवाक्यानामेवेति फलति। इदमेवाभिप्रेत्य तत्र सगुणवाक्यानि निर्गुणवाक्यापेक्षितनिषेध्यसमर्पकाणीत्यद्वैतिनां व्यवस्था ॥

तत्रोभयलिङ्गस्थाने सविशेषमिति सूत्रणे संशायकसामग्र्युन्नयनं न संभवतीत्येकं दूषणम्। द्वितीयं तु 'स्थानतोऽपि' इत्यप्यशवैयर्थ्यम्, निर्विशेषवाक्यानां गत्यसूचनं तु पूर्वपक्षस्य न्यूनता। अतो नोभयलिङ्गमिति योजनमेव युक्तम्। तत्र स्थानत इति सूचितसविशेषत्वलिङ्गदौर्बल्यं सिद्धान्तयुक्तिरपि सूच्यते। अत एव 'स्थानतः' 'अपि' इति पदद्वयसार्थक्यम्। पूर्वपक्षे त्वपिपदवैयर्थ्यम्, उभयलिङ्गवैयर्थ्यं च; एकेनैव निरस्तसमस्तदोषत्वेनेष्ट-

सिद्धेः। सविशेषवाक्यस्य निर्विशेषवाक्यसाम्यसूचनं त्वप्रयोजनम्, अपिशब्देन न स्वभावत इत्यस्य संग्रहः। तेन च स्थानाधीनस्य सविशेषत्वस्य दौर्बल्यं ज्ञाप्यते, येन निर्विशेषवाक्यानामेव मुख्यं तात्पर्यं फलति; स्वाभाविकार्थपरत्वस्यैवोचित्यात्। सविशेषवाक्यानां त्वौपाधिकरूपपरत्वाद् न मुख्यं तात्पर्यम्। अत्र पूर्वपक्ष उत्सूत्रः। सौत्रस्तु सिद्धान्तः। ततश्च निर्विशेषवाक्यादौ हेयगुणराहित्यपरतयाऽन्यथानयनं न युक्तमिति सूच्यते। अतोऽद्वैतसिद्धान्तानुगुणमेवोक्तं सूत्रम्। तत्र हि ब्रह्मगता विशेषाः सर्वेऽप्यविद्याकल्पिता हेयगुणा एव, इति न कल्याणगुण एकोऽपि ब्रह्मणि, इति कथमुभयलिङ्गत्वम्। परमते तु सविशेषपरत्व एव सूत्राणां तात्पर्ये "संभोगप्राप्तिरिति चेन्न वैशेष्यात्" इत्यादिषु बहुषु न्यायेषु शरीरसंबन्धप्रयुक्तापुरुषार्थगन्धशङ्काया निरस्तत्वात् निरस्तसमस्तदोषत्वसत्यकामत्वाद्युभयलिङ्गब्रह्मनिरूपणमनपेक्षितम्। 'उभयलिङ्गं सर्वत्र हि' इत्येव सूत्रणं च स्यात्—यद्युभयलिङ्गत्वं निरस्तसमस्तदोषत्वसत्यकामत्वादिकमेव विवक्षितं स्यात। अधिकं त्वन्यत्र॥

अत्र परमते न स्थानतोऽपुरुषार्थगन्धः, तत्र कारणं निरस्तसमस्तदोषत्वमिति योजना। अपरं तु लिङ्गं कुत्रोपयुज्यते? इत्युभयपदवैयर्थ्यम्। ब्रह्मणः सत्यकामत्वादिकं श्रुतिसिद्धमन्यलिङ्गतया कथं सन्दिग्धमपि, येन तन्निर्णयोऽपेक्षितः स्यात्॥

उभयं लिङ्गमिति व्यस्ततया सूत्रणं तु—ब्रह्मणा तस्यानन्वयाद् ब्रह्मण इति पदाध्याहारेण योजनीयं स्यात्। अद्वैतमते तु प्रक्रान्तं ब्रह्म विशेष्यतया विवक्ष्यत इति सूचनार्थम्, स्थानतोऽपीत्यपिशब्दस्वारस्यार्थं च समस्ततया निर्देशः। इदं च परमतेऽनुपपन्नम्। उभयलिङ्गघटकेन केन लिङ्गेन स्थानत इत्यस्यान्वय इति दुर्वचम्। परस्यपदं तु 'सर्वत्र ही'त्यनेनान्वेति। तेन च ब्रह्मस्वरूपविवक्षाऽत्र, न तु तदीयलिङ्गमात्रव्यवस्थेति फलति। तत्र नशब्दनिषेध्यांशः सौत्रमुभयलिङ्गमिति स्वारसिकोऽन्वय.। परस्य तु तत्रापुरुषार्थ-

गन्धस्याध्याहारः। जीवस्येव स्वाप्नादिसम्पत्तयो न परस्येति स्वाप्नपरीक्षायामेव परीक्षितम्। सत्यकामत्वादिकमभिव्यक्तमीश्वरस्येति निर्णीतमिति वितथमिदमधिकरणम् ॥

अद्वैतसिद्धान्ते तु तत्पदार्थशोधने प्रकृते सविशेषनिर्विशेषत्वयोर्व्यवस्थार्थमिदमधिकरणम्। "न द्वैतं न चाद्वैतमित्येतत्पारमार्थिकम्" इति स्मृतिरपि नोभयलिङ्गं ब्रह्मेति सिद्धान्तमेवाभिप्रयदुक्तसूत्रस्य विवरणमद्वैतसिद्धान्त इति सुष्ठु लगति। तेनापि न सविशेषपरत्वमेव शास्त्राणाम्, इति तदविरोधेन निर्विशेषवाक्यानां योजनं युक्तमित्येव स्थाप्यते। परमार्थप्रकाशिका तु परमार्थमत्रान्यथाऽनुवदति ॥

"यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ॥"

इति दशमाध्याये प्रकटयिष्यमाणं सर्वात्मस्वरूपम्, तस्योपदेष्टा वार्ष्णेयो वासुदेवोऽप्यंशः, ब्रह्म त्वभिन्ननिमित्तोपादानम्, सविशेषं च; इति तस्याजत्वानादित्वमहेश्वरत्वादिविशेषवत्त्वं न व्याहतम्। तथापि सर्वात्मत्वमत्र न केवलाचिदंशमात्रेण, किन्तु सर्वचिदंशेनापि। तत्राचिदंशेन बाधायां सामानाधिकरण्यम्, चिदंशेन त्वभेद एव, इति मुख्यवासुदेवेन तादात्म्यं वार्ष्णेयवासुदेवस्येव, दिव्यशरीरादित्येन्द्रमरुद्वसुरुद्रबृहस्पतिस्कन्दरामादिनेव च जीवन्मुक्तैरन्यैश्चाभेदः प्रतिपाद्यमानः शरीरभेदप्रयुक्त एव भेदो मम मदंशैः, स्वरूपतस्त्वभेद एवेति तत्र प्रतिपाद्यते ॥

यथा च—वसुदेवपुत्रस्वरूपं न सशरीरम्, एवं रामादीनां दशरथपुत्रस्वरूपादिकं न वस्तुसद्रूपम्। दिव्यं शरीरमप्यादित्यादीनामिव न भेदसाधकमित्यभिप्रेत्य स्वस्य पारमार्थिकं रूपम्, न केवलमनादि, किन्तु "बहु स्यां प्रजायेये"ति संकल्पहेतुमायोपहितं रूपमपि न तथा, इत्यविद्योपलक्षितं निर्विशेषस्वरूपमेवेति बोधयितुमेव अजमनादीति पदद्वयम्। अत एव लोकमहेश्वरमिति महेश्वरपदप्रयोगः। विश्वरूपमपि मया प्रदर्शयिष्यमाणमैश्वरमेव—

यत्तु देवानां वामनावतारावसरे सुलभमासीत्। लोकमहेश्वरं तु निर्विशेषमेव देवादीनाम्, किं बहुना, ममाप्यधिष्ठानमिति भगवदाशयोऽवगम्यते ॥

तच्च तटस्थलक्षणविधया तत्तत्कार्यमुखेनैव "नेति नेती"ति निषेधमुखेन-चावगम्यमिति भगवदभिप्रायं मनसि निधायैवाद्वैतामोदो वदति—निर्विशेषस्यास्य लोकमहेश्वरत्वं सर्वाधिष्ठानचित्स्वरूपत्वेनाविरुद्धमेव। अजत्वादिकं त्वविकृतोपादानभावेन वस्तुगत्या निर्विकारत्वेनेति। तत्राजत्वस्याभावरूपत्वान्न निर्विशेषत्वहानिरिति ॥

अहंशब्दार्थस्तु सर्वानुगतं सन्मात्रं स्वप्रकाशं "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति न्यायेन जीवेश्वरत्वोपलक्षितप्रत्यगभिन्नमनावृतं संविन्मात्रमेव भगवतोपदेशकालेऽनुसन्धेयम्, न त्वहमर्थस्वरूपम्। तस्य मायोपहितस्यौपाधिकेऽहमर्थत्वे सत्यपि भूतपूर्वगत्यैव तत्राहंपदम्। अयमेव न्यायः "शास्त्रदृष्ट्या-तूपदेशो वामदेववदिति सूत्रसिद्धः। सर्वत्र पुराणेषु मांपदेन तत्तद्देवतामात्रोपासनायां मांपदप्रयोगेण बिवक्षितायां सुन्दोपसुन्दन्यायेन परस्परव्याघातेन सर्वेषां पुराणानामितिहासानां चाप्रामाण्यं स्यात्, इति मांपदप्रयोगोऽत्र परमार्थदृष्ट्या नाद्वैतसिद्धान्तस्य विरोधी। सप्रपञ्चोऽप्यहं वस्तुगत्या निष्प्रपञ्च एवेति भगवतोऽभिप्रायः। सूचितं चैतद् भगवता स्वयमेव नवमाध्याये—

मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥ इत्यत्र ॥

परमार्थप्रकाशिका तु—अनादिभूताधारत्वमप्राकृतस्वभावविशेषगुणवत्त्वम्, तन्निषेधश्च सत्त्वादिगुणनिषेध इति—व्याचष्टे स्वीयभाष्यविवरणमप्युल्लंघ्य। एकत्रैव श्लोके भूतपदस्य प्राकृताप्राकृतपरतया योजनेन कथं वा सा सन्तुष्यति?

गीताया अद्वैत एव परमतात्पर्यमिति गीतातरङ्गिण्यां व्यक्तम्। तदिदं सिद्धम्—"न स्थानतोऽपी"ति सूत्रानुसारेण पारमार्थिकं निर्विशेषत्वम्, सविशेषत्वं त्वौपाधिकं वेदान्तार्थ इति। अनेनैव न्यायेन—

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।"

इति वचनाद् विष्णुपुराणस्य, किं बहुना? सर्वेषां पुराणानामौपाधिकसगुणस्वरूपबोधकत्वम्, परमार्थतो निर्विशेषबोधकत्वं च व्याख्यातम् ॥

तत्र विष्णुपुराणे ब्रह्मणोऽरूपत्ववचनं नस्थानतोऽप्यधिकरणगतम्—"अरूपवदेव हि तत्प्रधानत्वादि"ति सौत्रमरूपपदं प्रत्यभिज्ञापयति, इति नेदं परमार्थप्रकाशिकोक्तरीत्या नीलपीताद्यभावपरम् । "नीलमेघश्यामलमि"ति भगवतः सर्वेषु पुराणेषु वर्ण्यमानं सविशेषस्य तस्य नीलगुणाभावे विरुध्यते । अथवाऽप्राकृते परमात्मनि तदप्रसक्त्या तस्य निषेधेऽप्रसक्तनिषेधः । अत एव तत्र तत्र निर्गुणपदस्य हेयगुणनिषेधपरतया विवरणमपि नावसरति । एनेन—तस्य वस्तुगत्या निर्विशेषत्वमेव "अपाणिपादमि"त्यादि ज्ञापयतीति—व्याख्यातम् । तेन परमात्मनोऽशरीरत्वावगमाद् रूपपाणिपादादौ सर्वत्राप्राकृतरूपादिविधेयपरतया प्राकृतपाणिपादसप्तधातुमूत्रपुराषादीनां सर्वेषामप्राकृतानां कल्पनं कस्य वा शोभेत?

परमार्थप्रकाशिका तु—अत्र पुरुषविधनिरासाभिप्रायं विशदयन्ती तत्र तत्राप्राकृतभूताधारत्वं दिव्यशरीरत्वं च भगवतः प्रतिपादयति, पुरुषविधत्वं चात्र निषेधन्ती—"स वा एष पुरुषविध एवे"ति तैत्तरीयोपनिषदं विहान्ति ॥

"ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते जगतीतले" ॥

इति वचनं हि—

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥"

इति वचनसिद्धं ब्रह्मण्यध्यासप्रयुक्तं सदादिरूपं च जगत् केवलनामरूपात्मनैव मायिकेन रूपेण पश्यन्ति, न त्वमायिकेन सच्चिदानन्दात्मना पश्यन्ति भ्रान्त्येत्यभिप्रायमिति विशदम् ॥

तत्रार्थस्वरूपं जगदेतदिति च सर्वं ज्ञेयजातं विवक्ष्यते। तेन च जगदात्मना भ्रमो ज्ञानस्वरूपस्य प्रतिपाद्यते ॥

परमार्थप्रकाशिका तु—सामान्यत. प्रवृत्तं जगत्पदम्, अर्थमदं च सर्वं देहपर विधाय देहात्मभ्रमपरतया व्याचष्टे ॥

इदं च भगवतो देहात्मभ्रमपरतया वा, द्रष्टॄणां स्वस्मिन् देह आत्मत्व-भ्रमपरतया वेति विवेचनीयम्। आद्यं तु बाधितम्। भगवच्छरीरमेव भगवत्स्वरूपमिति न चार्वाकोऽपि वक्तुमीष्टे। अन्येषां तु तथा भ्रमोऽसंभावित एव। जीवानामेव देहात्मभ्रमो विवक्षित इति तु न युक्तम्, परमात्मप्रकरणे तस्यासङ्गतेः ॥

तत्र यदि ज्ञानपदं संविन्मात्रपरं प्रत्यगभिन्नब्रह्मपरम्, तर्हि कथंचन जीवप्रकरणमपीदमिति वक्तुं शक्यते। परं त्विदमद्वैतसिद्धान्त एवोपमद्यते, न सिद्धान्तान्तरे। तत्र च ज्ञानमित्येकवचनात् प्रत्यक्स्वरूपस्यात्मन एकत्वं स्वभावत., भेदस्तु तस्य देहात्मनैव ॥

परमार्थप्रकाशिका तु—"ज्ञानस्वरूपमखिलं जगदि"ति वर्णनादत्र जीवनानात्वमभिप्रैति। निमित्तं तत्रैकैकस्मिन्नपि चिदनुप्रवेशः। तत्रैकस्या एव चितोऽचित्प्रवेशनिमित्तं यदि नानात्वम्, तर्हि स्वतश्चित एकत्वम्, नानात्वं त्वौपाधिकमित्यवगमात् स्वसिद्धान्तं स्वयमेव निहन्ति। एतेन—देहाद्यर्थस्व-रूपमात्रे भ्रमत्वं ज्ञानस्योच्यते, न जगद्ग्रहणांशेऽपीति—व्याख्यातम्। किमनेन विवक्ष्यते—विषयमात्रं जगन्मिथ्या, न तु ज्ञानमिति वा, जगदपि सत्यमिति वा। आद्येऽपि किं 'स्वरूपज्ञानमधिष्ठानं विवक्ष्यते, लौकिकं जन्यं ज्ञानं वा। तत्राद्ये प्रथम इष्टापत्तिः। द्वितीये यदि नित्यमौपचारिकं जन्यं धर्मभूतं ज्ञानम्, तदा तस्य जगद्विषयकस्य जगद्रूपत्वाश्रवणाद् विरोधः। वृत्तिज्ञानेऽद्वैताभिमते विवक्षिते तु तस्यापि व्यावहारिकत्वेनाखिलजगत्कोटिप्रविष्टत्वाद् बाधितमिदम्। सर्वथा तु स्वभावत आत्मनानात्वाभिप्रायो नात्र ॥

अत एव विष्णुपुराण एव—

"विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ।"

इति वचनमुपपद्यते । तत्र विज्ञानं "विज्ञान ब्रह्मेति" वाक्यप्रत्यभिज्ञानात् ब्रह्मस्वरूपपरम् , द्वैतपदं च पूर्वोक्ताखिलजगत्परम् । तेन च ब्रह्म सत्यम् , जगन्मिथ्येत्यद्वैतसर्वस्वं विविच्यते ॥

अत्र परमार्थप्रकाशिका वदति—द्वैतमिथ्यात्वदर्शनं नाम—सर्वेष्वात्मस्वविशेषेण सर्वदा ज्ञानस्वरूपेषु कश्चिदात्मा देवादिशरीरपरिग्रहे ज्ञानस्वरूप, कश्चित् शिलादिस्थावररूपत्वे जड इति दर्शनम्—इति ।

तत्र द्वैतमिथ्यात्वं ब्रह्मेतरद्वितीयमिथ्यात्वमेव, न तु द्विविधं दर्शनम्। तत्र सर्वेषामात्मनां सर्वदा ज्ञानरूपत्वं किं स्वतो भिन्नानामेव, उतौपाधिकभेदवताम् । आद्ये तु—विज्ञानं परमार्थो ही" त्येकवचनविरोधः । द्वितीये तु नात्मनानात्वम् । न चात्मनां विज्ञानरूपत्वम्, शिलादिस्थावराणां ज्ञानस्वरूत्वं चैकम् । न च शिलादिस्थावरमप्यात्मा, अचेतनत्वात्, विषयकोटिप्रविष्टानां भवदुक्तरीत्यैव मिथ्यात्वाच्च । परमार्थतस्तु भवतां मते सर्वज्ञानयाथार्थ्यस्वीकारात् विष्णुपुराणगतभ्रमवचनानां का वोपपत्तिः ? तत्र जयतीर्थीयन्यायसुधा सर्वज्ञानयाथार्थ्यवादे मातृमतङ्गमदिरादिष्वयवयसादृश्यप्राचुर्यात् तत्र भार्यादिबुद्ध्योपभोगो न प्रत्यवायाय स्यादिति वदति। "सत्यं त्यज भेदमोहमि"ति भेदबुद्धिज्ञानस्य भ्रमत्ववचनमत एवोपपद्यते ॥

यत्तु—एकं निरात्मकं, अन्यत् सात्मकम् , एक आत्मा यादृशः, न तादृशोऽपर आत्मा, देवादिदेहस्यैवात्मत्वादस्ति वैषम्यमिति भेदमोहं त्यजेत्यर्थः—इति,

तत्रेदं विविच्यताम्—किमनेन सर्वेषामात्मनामैक्यं विवक्ष्यते, उत साम्यम् । आद्ये गतमात्मनानात्वेन । द्वितीये—

"सर्वभूतस्थमात्मानं भजत्येकत्वमाश्रितः

इत्यैक्यवचनविरोधः। किं चेदं प्रकरणमात्मभेदमात्रस्य निषेधपरम्, तत्रापि जीवात्मभेदमात्रस्य। आद्ये जीवात्मपरमात्मभेदग्रहस्यापि मोहत्वमुक्तप्रायम्, इत्यद्वैतसिद्धान्त एव पर्यवसानम्, द्वितीये तु प्रकरणविरोधः। सर्वमिदं प्रकरणं परमात्मन एव॥

अत एव तत्र भूतयोनिप्रकारणम्। तत्र भूतयोनित्वम्, अकारणत्वं च वस्तुतोऽद्वितीयत्वम्। परविद्याप्रतिपाद्यं वस्तुतोऽद्वितीयम्, अकारणं च। तथाप्यध्यारोपेण तत् सद्वितीयमित्येव विष्णुपुराणाशयः। परविद्या हि विष्णुपुराणे षष्ठांशे स्वयं व्याख्याताऽद्वैतमेव तत्त्वं मन्यते॥

यत्तु—भूतयोनिपदप्रमितार्थनिषेधायोगाद् बहुव्रीहिवृत्तम्—अकारणपदम्—ब्रह्मणोऽपि कारणान्तरनिषेधपरम्—"न चास्य कश्चिज्जनिते" इतिवत्—इति।

तत्त परविद्येति समाख्यामात्रेण—"अक्षरात् प्रकृतेरपि परः" इति श्राविते परतः परे कारणान्तशङ्कैव नोत्तिष्ठति, इति किमनेन बकबन्धनप्रयासेन? न चाद्वैतसिद्धान्तस्यात्र विरोधलेशोऽपि॥

तत्र 'ज्ञानस्वरूपमखिलं जगत्' इति सामानाधिकरण्यं बाधायाम्। अत एव—

"अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते जगतीतले।"

इति विज्ञानेऽर्थस्याध्यासः शुक्तौ रजतवत्। अयमर्थः—

"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥"

इत्यत्र प्रत्यभिज्ञायते। अत्रार्थपदं जगत्परम्,

"ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः।
अर्थस्वरूपं पश्यन्ति भ्राम्यन्ते मोहसंप्लवे॥"

इत्यत्र तस्यैवार्थपदेनानुकर्षात्, इति नात्र संकोचलेशोऽपि, येनार्थपदार्थत्वेन तद्व्यतिरिक्तग्रहणेन संकोचस्यावश्यकत्वाद् भ्रान्तिदर्शनत इत्यत्र देवमनुष्यादिमात्रेण संकोचो न दोषाय, "यश्चोभयोरि"ति न्यायादिति व्यवस्था च योग्या स्यात्। तत्र यदि सर्वे दृश्या अर्थपदेन गृह्यन्ते, तर्हि ज्ञानातिरिक्तस्य सर्वस्य दृश्यत्वात् परमत आत्मनोऽपि दृश्यत्वात् तस्यापि ज्ञानेऽध्यस्तत्वेन मिथ्यात्वापत्त्या न स्वतस्सिद्धिः। अद्वैते त्वात्मन एवाधिष्ठानस्वरूपज्ञानरूपत्वाद् ज्ञानार्थयोरिदं रजतमित्यादाविव तादात्म्याद् ज्ञानस्यार्थाभेदवर्णनमुपपद्यते। न चैतत् परमते निर्वहति ॥

न च बाधायां सामानाधिकरण्यस्थले सत्यासत्यवस्तुनोरैक्यम्, किन्तु तादात्म्यम्। तत्फलं तु बाधायामधिष्ठानातिरेकेणारोप्यस्याभावमात्रम्। अतः सामानाधिकरण्यप्रतीतिः। न चात्रान्यतरस्य परित्यागः, परमते तु ज्ञानस्यार्थात्मताभ्रान्तिः, अर्थज्ञानयोः सामानाधिकरण्यप्रतीतिरुभयमपि बाधितम्, अनुपपन्नं च। अत एव—"जगच्च स" इति विष्णुपुराणोपक्रमे जगद्ब्रह्मणोः सामानाधिकरण्यश्रुतिः, तद्बलेन प्रपञ्चमिथ्यात्वसिद्धिश्च ॥

यत्तु—सामानाधिकरण्येनैक्यसिद्धौ जगतोऽपि सत्यत्वापत्तिः—इति,

तत्र सामानाधिकरण्यस्यात्र तादात्म्यरूपस्य भेदघटितत्वस्यैव स्वीकारात् सामानाधिकरण्यं नैक्याभिप्रायम्। तथाच "जगच्च स" इति सामानाधिकरण्यमपि तयोर्विवर्तोपादानोपादेयभावाभिप्रायं ब्रह्मणि जगत आरोपेणार्थात्मना भासमानं ब्रह्मेत्येव गमयति ॥

न हीदृशमुपादानत्वं ब्रह्मणो जगत् प्रति स्वीकर्तुं शक्यते परमते, यत्र न ब्रह्म समवायिकारणं नैयायिकदृष्ट्या, न वा परिणाम्युपादानं भास्करादिसिद्धान्त इव। तत्र यदि विवर्तोपादानमपि न ब्रह्म, तर्हि त्यज्यतां ब्रह्मोपादानकथा। यदि परिणाममानप्रकृत्यपृथक्सिद्ध्या तत् तथा, तर्हि कथमपृथक्सिद्धधर्मभूतज्ञानसंकोचविकासाभ्यामात्मनोऽपि संकोचविकासौ नाश्रीयेताम्।

इष्टापत्तौ तु साक्षात्स्वरूपज्ञानस्यैव संकोचविकासाभ्यां बाह्यप्रकाशनिर्वाहात् किमन्तर्गडुना धर्मभूतज्ञानेन ? इति स्वनिरस्तार्हतमतप्रवेशान्न निस्तारः ॥

यत्तु—" जगच्च स" इति नोपादानप्रश्नोत्तरम् , किन्तु
" यन्मयं च जगत् सर्वं जगच्चैतच्चराचरम् ॥"

इति वाक्यगत 'यन्मयमि'ति पदनिर्दिष्टशरीरिप्रश्नोत्तरम् । अभिन्ननिमित्तोपादानप्रश्नपर तु " यतश्चैतच्चराचरमिति, यस्योत्तरम्—"विष्णो. सकाशादुद्भूतं" " स्थितिसयमकर्ताऽसौ " इति । तत्र मयट्प्रत्यय. प्राचुर्यार्थिक· । प्राचुर्यं च व्यापकस्य व्याप्त्या । तत्र शरीरी शरीर व्याप्तः, इति " यन्मयमि"त्यस्य शरीरिप्रश्नतोपपत्ति —इति ।

तत्रान्नमयो यज्ञ इत्यत्र आनन्दमयपरमात्मत्वपक्षेऽपि प्राचुर्यप्रतियोगिनः शरीरित्वं न दृश्यते, न वा तदनुयोगिनः शरीरत्वम्। न चान्नं शरीरि, अन्नमयं शरीरमिति लोके, वेदे वा, इत्युपादानोपादेयभावमादायैव यन्मयमिति मयट्प्रत्यय इति वक्तव्यम् । तत्रोपादानत्वं मृद इव परिणामविधयाऽपि भवति, विवर्तोपादानविधयाऽपि । तत्र यन्मयमिति विवर्तोपादानप्रश्नः, " यतश्चैतच्चराचरम् " इति त्वभिन्ननिमित्तोपादानस्य प्रश्नः । विवर्तोपादानं हि न निमित्तम् ,न वा परिणाम्युपादानम् ; अन्यथा सविकारमेव । किंच—

" अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे प्रभविष्णवे ॥ "

इत्यत्र प्रस्तुतं विष्णुस्वरूपम् , अविकारशुद्धपरमात्मस्वरूपं चैकं वा, नैकं वा । यद्यभिन्नम्, तर्हि तत्र यो विष्णुः, स कारणं कथं शुद्धः ? कथं च विकारं विना कार्यकारणभाव इति शङ्कां मनसि निधायैव " यन्मयं च जगद् ब्रह्मन्नि " त्यादिप्रश्नौ, तदुत्तरे च । तत्र प्रथममविकारिकारणस्वरूपप्रश्नोऽधिष्ठानप्रश्नः— यन्मयमिति ; अधिष्ठानस्वरूपातिरिक्तारोपितस्वरूपाभावात् । यन्मयमिति स्वार्थे मयट् । औपचारिको विकारे कार्ये वा । ततो " विष्णवे प्रभविष्णवे " इति विष्णुत्वं निमित्तकारणत्वं च यदवगतम् , तद्विषयप्रश्नः—" यतश्चैतच्चरा-

चरमि"ति। तत्र तटस्थलक्षणविधया प्रथममभिन्ननिमित्तोपादानतया विष्णोरुपादानत्वम् "विष्णोः संकाशादुद्भूतं जगदेतच्चराचरमि"ति ॥

अत्र विष्णुपदार्थो मायोपहितं सविशेषस्वरूपमेव । तत्र च मायोपधानाद् विष्णुरेवोपादानकारणम्, निमित्तकारणं च। तत्रोपादानत्वं मायायाः परिणामविधया, ब्रह्मणो विवर्तोपादानतया, विशिष्टस्य निमित्तकारणतयेति विभागः। व्यक्तं चैतत् सिद्धान्तलेशसंग्रहे—ईश्वरोपादानत्वपक्षेऽपि चैतन्यांशस्यैवोपादानत्वम्, न तु विशिष्टस्येति । तथाच सविशेषोपादानतायामपि कारणमयत्वं जगतो विवर्तोपादानं चिदंशमात्रमादाय। स एव लक्षणया विशेष्यतया विष्णुपदबोध्योऽविकारः, शुद्धः, नित्यः, परमात्मा, सदैकस्वरूपः, सर्वतादात्म्याद् विष्णुः, प्रभविष्णुश्चेति सुष्ठु लगति ॥

तत्र सविशेषविष्णोरेव विशिष्टरूपेणात्र मङ्गळश्लोके विवक्षायां तु "यन्मयमि"ति प्रश्नोत्तरम्—"जगच्च स" इति परमते नोपपद्यते, यतो विष्णोरुपादानत्वं न परमते, इति "विष्णोः सकाशादुद्भूतमि"त्यत्र पञ्चम्या नोपपत्तिरुपादानाविवक्षायाम् । हेतुमात्रपरत्वविवक्षावादिनापि प्रकृतिसाधारण हेतुत्वं विवक्ष्यते । तेन चाभिन्ननिमित्तोपादानत्वं विवक्ष्यत इति परमतम् । तत्र च सविशेषस्य ब्रह्मणो विशिष्टरूपेण नोपादानत्वं सभवति ; विकारित्वापत्तेः, "सत्यं ज्ञानमि"त्यादिनाऽनन्वयाच्च। विशेषणांशस्तु प्रकृतिर्विष्णोश्शक्तिरूपेति हि विष्णुपुराणं श्रावयति । न हि तस्याः प्रकृतित्वं विष्णोर्भवति ॥

अतो 'जगच्च सः' इत्यधिष्ठानारोप्यभावनिबन्धनतादात्म्यम्, अधिष्ठानव्यतिरेकेणारोप्याभावलक्षणं बाधायां सामानाधिकरण्य एव पर्यवस्यति ॥

तेन च—

"यद् ज्ञात्वा नेह भूयोऽन्यद् ज्ञातव्यमवशिष्यते"

इति गीतावगतं सर्वस्य ब्रह्मात्मत्वमेव वस्तुसदिति तत्त्वमेव जगच्च स इति विष्णुपुराणं बोधयतीति व्यक्तमन्यत्र ॥

"यन्मयमि"त्यत्र तु मयट् स्वार्थे वा भवतु, विकारार्थे वा। प्राचुर्यार्थत्वं तु नात्र संभवति, येन शरीरशरीरिभावपरताऽत्र स्यात्। तत्र पञ्चम्यर्थो न प्रकृतित्वमेव; तथापि तस्य प्रकृत्यर्थत्वे न विवाद इति तु परमार्थप्रकाशिकापि वदति। तावदेवाद्वैतिनामपि पर्याप्तम्। अत्र शरीरवाचकानां पदानां शरीरिपर्यन्तत्वं परमतसिद्धं न सांप्रतं परीक्ष्यते; अनपेक्षितत्वात्। यथावसरं तु तदपि समालोचयिष्यते ॥

स्वार्थे मयटि यन्मयमिति प्रश्नोत्तरं जगन्मिथ्येत्येव वक्तव्यम्; तथापि मिथ्यापदार्थानामपि स्वरूपं न शशविषाणादिवत्तुच्छं स्वरूपम्, किन्तु तदधिष्ठानस्वरूपमेव पारमार्थिकमिति निरूपणं तदधिष्ठानस्वरूपवर्णनं विना न निर्वहति। अत एव "जगच्च स" इति बाधायां सामानाधिकरण्येनोत्तरम्। जगन्मिथ्या, जगद्विष्णुरिति चानर्थान्तरम्। विष्णुपदस्थाने सपदं प्रयुक्तम्। न च तथा बोधने सत्यत्वमापततीति बाधायां सामानाधिकरण्यमिति पूर्वमेवोक्तम्। तत्र यन्मयमिति प्रश्नार्थो यदधिष्ठानक इति। अधिष्ठानत्वं तु केवलस्य न भवति, किन्तु सपरिणामिकारणकस्य, तथा निमित्तकारणापेक्षस्येति प्रश्नत्रयमप्यावश्यकमेव। उत्तरमपि प्रश्नत्रयस्य सम्यगेव—"विष्णोः सकाशादुद्भूतम्" "स्थितिसंयमकर्ताऽसौ" "जगच्च सः" इति, इति विष्णुपुराणवचनानि सर्वाण्यद्वैतमते न विरुद्धानि ॥

अत्र विष्णुपुराणम्—

"सोहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत।
बभूव भूयश्च यथा महाभाग भविष्यति ॥"

इति जगतः सृष्टिप्रळययोः प्रश्नमुपक्रम्य—

"यन्मयं च जगद्ब्रह्मन् यतश्चैतच्चराचरम्"

इति तं प्रश्नं विवृण्वद् "यथा बभूवे"त्यस्यांशस्य लयकाले यदात्म जगदसीत्, यदुपादानकमासीदिति प्रश्नाशयं "यन्मयमि"त्यनेनोपक्षिपति। "भूयश्चे"त्यनेन

प्रस्तुतसृष्टिप्रश्नाशयं "यतश्चैतच्चराचर" मित्यनेन विवृणोति। लीनमासीत्, लयमेष्यतीति तु "यथा बभूव भूयश्च भविष्यति"त्यस्यैव विवरणम्, न तु प्रश्नान्तरम्। सति चैवं "यतश्चैतच्चराचरमि"त्यस्य प्रथममुक्तस्य "यन्मय मि"ति लीनमासीत्, लयमेष्यतीति च प्रश्नस्यानन्तरमुत्तरं "विष्णोस्सकाशादुद्भूतम्" "जगच्च स" इति च यथाक्रमम्॥

तत्र सृष्टिप्रश्नस्य स्थितिप्रश्नोपलक्षणत्वात् स्थितिसंयमकर्तेति स्थितिकर्तुरपि समाधाने निर्देशः। न चात्र शरीरशरीरिभावप्रश्नः, लीनस्य जगतः प्रलयावस्थस्य ब्रह्मशरीरत्वाभावात्। ततश्च "यतो वा इमानि भूतानि जायन्ते" इति श्रुत्यर्थविवरणमेवात्रोत्तरम्, इत्यभिन्ननिमित्तोपादानं ब्रह्म। तत्राप्युपादानत्वं विवर्तविधयेत्यभिप्राय एव विष्णुपुराणोपक्रमः। अत एव "अविकाराय शुद्धाये"ति महोपक्रमोऽपि। तथाच पूर्वोक्तरीत्या सविशेषमुखेन निर्विशेषस्वरूपप्रतिपादनपरमेव विष्णुपुराणम्॥

अत एव षष्ठांश उपसंहारे—

"तद्भावभावमापन्नस्ततोऽसौ परमात्मना।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्॥"

"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥"

इति। सति चैवं विष्णुपुराणगतं विष्णुपदमपि निर्विशेषस्वरूपपरमेव। अत एव हि तत्रैव—

"अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु।
बिम्बमेतत्परं चान्यद्भेदभिन्नदृशां नृणाम्॥

प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तद् ज्ञानं ब्रह्मसंज्ञितम्॥

तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम् ।
विम्बस्वरूपवैरूप्यलक्षणं परमात्मनः ॥
न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः ।
ततः स्थूलं हरे रूपं चिन्तयेद् विश्वगोचरम् ॥
हिरण्यगर्भो भगवान् वासुदेवः प्रजापतिः ।
मरुतो वसवो रुद्रा भास्करास्तारका ग्रहाः ॥
एवत्सर्वमिदं विश्वं जगदेतच्चराचरम् ।
परब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम् ॥"

इति हिरण्यगर्भवासुदेवादीनामपि विभूतिकोटौ निर्देशः, निर्विशेषस्वरूपस्यैव पारमार्थ्यप्रतिपादनं चोपपद्यते ॥

प्रसीद सर्व सर्वात्मन् क्षराक्षरमयेश्वर ।
ब्रह्मविष्णुशिवाख्याभिः कल्पनाभिरुदीरितः ॥
अनाख्येयस्वरूपात्मन्ननाख्येयप्रयोजन ।
अनाख्येयाभिधान त्वं नतोऽस्मि परमेश्वर ॥
न यत्र नाथ विद्यन्ते नामजात्यादिकल्पनाः ।
तद्ब्रह्म परमं नित्यमविकारि भवानजः ॥
न कल्पनामृतेऽर्थस्य सर्वस्याधिगमो यतः ।
ततः कृष्णाच्युतानन्तविष्णुसंज्ञाभिरीड्यते ॥

इति वस्तुतो निर्विशेषात्मना भगवतः पञ्चमांशे स्तुतिरक्रूरस्योपपद्यते । अनेन स्पष्टमवगम्यते—निर्विशेषस्य कल्पितैर्नामरूपादिभिरेव प्रथमतोऽधिगमः ? ततस्तु तत्र नामरूपादिहीनतया क्रमेणानुसन्धानं स्वरूपानुसन्धाने पर्यवस्यतीति । अत एव षष्ठांशे—परापरभेदेन मूर्तमूर्ताभेदेन च परमात्मनश्चातुर्विध्यं प्रस्तुत्य परमार्थस्वरूपम्—

"यच्च मूर्तं हरे रूपं यादृक् चिन्त्यं नराधिप ।
तच्छ्रूयतामनाधारा धारणा नोपपद्यते ॥
प्रसन्नवदनं चारुपद्मपत्रोपमेक्षणम् ।
सुकपोलसुविस्तीर्णललाटफलकोज्वलम् ॥
समकर्णान्तविन्यस्तचारुकुण्डलभूषितम् ।
कम्बुग्रीवं सुतिस्तीर्णश्रीवत्सांकितवक्षसम् ॥
वलित्रिभङ्गिना भग्ननाभिना ह्युदरेण च ।
प्रलम्बाष्टभुजं विष्णुमथवापि चतुर्भुजम् ॥
समस्थितोरुजङ्घं च सुस्थितांङ्घ्रिवराबुजम् ।
चिन्तयेद्ब्रह्मभूतं तमतिनिर्मलनाससम् ॥
किरीटहारकेयूरकटकादिविभूषितम् ।
शार्ङ्गशंखगदाखड्गचक्राक्षवलयान्वितम् ॥
वरदाभयहस्तं च मुद्रिकारत्नभूषितम् ।
चिन्तयेत तन्मयो योगी समाधायात्ममानसम् ॥
यावत्तावद् द्रवीभूता तत्रैवत्त्ववधारणा ।
व्रजतस्तिष्ठतोऽन्यद्वा स्वेच्छया कर्म कुर्वतः ॥
नापयाति यदा चित्तात् सिद्धां मन्येत तां तदा ।
ततश्शंखगदाचक्रशार्ङ्गादिरहितं बुध ।
चिन्तयेद्भगवद्रूपं प्रशान्तं साक्षसूत्रकम् ॥
सा यदा धारणा तद्वदेवंस्थानवती ततः ।
किरीटकेयूरयुग्मैर्भूषणै रहितं स्मरेत् ॥
तदेकावयवं देवं चेतसा हि पुनर्बुध ।
कुर्यात् ततोऽवयविनि प्रणिधानपरो भवेत् ॥

तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि तत् ।
मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयते ॥

इति सर्वकल्पनातीतं स्वरूपमात्रमेव परमात्मनः परामूर्तरूपमेव परं तत्त्वमिति प्रतिपाद्यते। सति चैवं परविद्या प्रतिपाद्यं परस्वरूपं द्विविधं श्रावयति—मूर्तम्, अमूर्तं च। तत्र मूर्तं भूतयोनिः, अमूर्तमकारणम्, यत्—“यत्तदद्रेश्यमग्राह्यमवर्णमि”त्येवमादिनोपक्रमे निर्विशेषं प्रस्तूयते, तं भूतयोनिमित्यादिना, यस्सर्वज्ञस्सर्वविदित्यादिना च परं मूर्तं श्रावयति। तत्रापरविद्या यद्यपि शब्दब्रह्मैव; अर्थब्रह्म तु द्विविधमिति निर्णीयते विष्णुपुराणेन ॥

“यत्तदव्यक्तमजरमचिंत्यमजमव्ययम् ।
अनिर्देश्यस्वरूपं च पाणिपादाद्यसंयुतम् ॥

विभु सर्वगतं नित्यं भूतियोनिरकारणम् ।
तद्ब्रह्म परमं धाम तद्ध्येयं मोक्षकाङ्क्षिभिः ॥

श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् ।
तदेव भगवच्छब्दस्वरूपं परमात्मनः ॥

वाचको भगवच्छब्दस्तस्याक्षयपरात्मनः ।
अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज ॥

पूजायां भगवच्छब्दः क्रियते ह्युपचारतः ।
शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्दितः ॥
मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥

एवमेव महान् शब्दो मैत्रेय भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥

तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः ॥”

इति वचनानि हि—परस्य सूक्ष्मस्यामूर्तस्य परमात्मनो भगवच्छब्दवाच्यत्व-मुपचारेण वा, परिभाषया वा। तत्र प्रथमपक्षे भगवच्छब्दस्य सविशेषे रूढिः, शुद्धब्रह्मण्युपचारात् , लक्षणया वा भगवच्छब्दः। द्वितीये ब्रह्मणि भगवच्छब्दस्य संकेतः, सविशेषे तु तस्योपचारः। परमूर्ते रूढिः, परामूर्ते वा रूढिरिति तु निष्कर्षः। तत्र शब्दब्रह्मण उपक्रममात्रम् , न तत्र विशेषाणां श्रवणमिति वस्तुस्थितिः। अत एवोक्तमामोदे—

"अशब्दगोचरस्यापि तस्यैव ब्रह्मणो द्विज।
पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः॥"

इतिवचनाद् भगवच्छब्दोऽपि ब्रह्मण्यौपचारिकः। अत एव—

"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्दितः।
मैत्रेय भगवच्छब्दः सर्वकारणकारणे"॥

इत्युत्तरसन्दर्भः—इति॥

परमार्थप्रकाशिका तु—पूर्वसन्दर्भपर्यालोचनया "अशब्दगोचरस्यापीति शब्दब्रह्मपरम्, न तु मुख्यब्रह्मपरमिति—वदति॥

तत्र शब्दब्रह्मणोऽपरविद्याया वा नात्र संबन्धलेशोऽपि। "तस्यैवं ब्रह्मण-स्तथा" इति तच्छब्देन त्रयीमयस्य ब्रह्मण एव ग्रहणं स्यात्—यदि तस्य प्रतिपाद्यत्वम्। पूर्वोदाहृतपञ्चमांशवचनानि परमात्मनस्तत्तच्छब्दवाच्यत्वं कल्पनामात्रेण, एवमेव षष्ठांशे सरूपमपि तस्य धारणार्थं कल्पनामात्रेणेति प्रतिपादयन्ति। कथं चामूर्तस्य निर्विशेषस्य मुख्यं भगवच्छब्दवाच्यत्वम्? संकेतमात्रेण मुख्यार्थत्वं त्वन्यत्रोपचारमेव स्थापयति। अत एव परामूर्तं प्रस्तुत्य—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मशब्दितम्॥"

इति ब्रह्मशब्दस्यात्र भगवच्छब्दस्येव निर्विशेषे ब्रह्मणि संकेत उपपद्यते। तथाच निर्विशेषस्य ब्रह्मणोऽपि कल्पितं शब्दवृत्तिविषयत्वं वर्तत इति विष्णुपुराणं श्रावयति। किं बहुना? आदित आन्तं विष्णुपुराणमद्वैतानुगुणमेव। तत्रापि केवलाद्वैतानुगुणमेव ॥

तथाहि—विष्णुपुराणस्य षडंशाः। तत्र प्रथमेंऽशे मैत्रेयप्रश्नोत्तरे अद्वैत एव स्वरसे। ततस्तु परविद्याप्रतिपाद्यं प्रकृत्युपहितं ब्रह्मस्वरूपं प्रस्तुत्य तस्य सत्वरजस्तमःप्रधानमायोपधानेन ब्रह्मविष्णुरुद्रात्मता प्रतिपादिता। तथाच त्रिमूर्त्यतिरिक्तो मायोपहितस्तटस्थलक्षणविधया भूतयोनिः, परमार्थतस्तु प्रधान-पुरुषब्रह्मणां त्रयाणामनादीनां प्रक्रमात्—"अक्षरात्परतः परः" इति निर्दिष्टं प्रधानानुपहितं तत्त्वमेव मुख्यं तत्त्वमिति निर्धार्यते ॥

तत्र—

"तन्निबोध यथा सर्गे भगवान् संप्रवर्तते।
नारायणाख्यो भगवान् ब्रह्मा लोकपितामहः ॥"

इति सर्गावस्थब्रह्माणं नारायणविष्ण्वादिपदैरनुकृष्य—

ब्रह्मस्वरूपी भगवाननादिस्सर्वसंभवः।
अत्र चोदाहरन्तीमं श्लोकं नारायणं प्रति ॥

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥"

इति नारायणपदार्थत्वमुपसंह्रियते। इदं चोपलक्षणम्—स्थितिसंहारावस्थस्य विष्णुरूपिणो रुद्ररूपिणश्च, इति नारायणपदमुख्यार्थत्वमात्रेण न त्रिमूर्त्यन्तर्गत-स्य विष्णोरेवात्र पुराणे विष्णुपदार्थत्वम्, किन्तु मूर्तित्रितयमूलतत्त्वस्य मायो-पहितस्य, तस्यापि मूलतत्त्वस्य वा निर्विशेषब्रह्मण एव ब्रह्मपदेन विशिष्य प्रस्तूय-मानस्येति सिद्धम्। ततश्च स्थित्यवस्थायां नारायणं विष्णुपदेनानुकृष्य

तस्यैव लक्ष्मीः पत्नीति प्रतिपादनेन तयोरुभयोरपि सर्वान्तर्यामित्वेन स्थितिनियामकत्वस्त्रीपुरुषान्यतररूपेणावस्थेति विवृतम्। स एव च ध्रुवाद्युद्धरणेन स्थित्यवस्थ इति बहुभिरुपाख्यानैरुपबृंहितम्। तथाच सर्वेषां नारायणपदमुख्यार्थत्वेऽपि स्थितिमतो विशिष्टमुपासने स्थानं मूर्तित्रये, परंतु मुख्यं ब्रह्म मूर्तित्रयातीतं तुरीयमेव। नारायणपदयौगिकार्थस्तु मुख्यो लोकपितामहो ब्रह्मैव॥

ततोऽसंप्रज्ञातसमाधिद्वारा प्रत्यगात्मावलम्बनं तत्पदार्थावलम्बनं च ज्ञानमनुक्रम्य,

"उभयोस्त्वविभागेन साध्यसाधनयोर्हि तत्।
विज्ञानमद्वैतमयं तद्भागोऽन्यो मयेरितः॥

ज्ञानं न यस्य वै तस्य विशेषो यो महामुने।
तन्निराकरणद्वारा दर्शितात्मस्वरूपवत्॥

निर्व्यापारमनाख्येयं व्याप्तिमात्रमनुत्तमम्।
आत्मसंयोगविषयं सत्तामात्रमलक्षणम्॥

प्रशान्तमभयं शुद्धं दुर्विभाव्यमसंश्रयम्।
विष्णोर्ज्ञानं तु यस्योक्तं तज्ज्ञानं ब्रह्मसंज्ञितम्॥"

इत्यादिना स्थितिकर्तुः प्रस्तुतस्य ज्ञानमयस्यापि मूलतत्त्वं सन्मात्रमद्वैतं निर्विशेषं ब्रह्मशब्दितमवतारितम्, यदेव—"अक्षरं तत् परं ब्रह्मे"ति चोपसंहृतम्॥

तत्रामूर्तस्य परब्रह्मेति, मूर्तस्य तु परस्य हरिविष्ण्वादिपदैरुपदेशस्तत्र तत्र दरीदृश्यते। ततोऽन्ते—

"आत्मानमस्य जगतो निर्लेपमगुणालयम्।
बिभर्ति कौस्तुभमणिं स्वरूपं भगवान् हरिः॥"

इत्यादिना कौस्तुभ-श्रीवत्स-गदा-शंख शार्ङ्ग-चक्र-वैजयन्तीशरासि-कोशरूपेण चिदचिदात्मकजीवात्म-प्रकृति-बुद्ध्यहंकार-मनः-पंचतन्मात्र - दशेन्द्रियविद्याऽ - विद्यापेरूण निरूप्य—

" अस्त्रभूषणसंस्थानं स्वरूपं रूपवर्जितम् ।
बिभर्ति मायारूपोऽसौ श्रेयसे प्राणिनां हरिः ॥"

इति वस्तुगत्या मूर्तस्यापि सविशेषस्य ब्रह्मणो विशेषा मायामया इति प्रतिपाद्यते । तेन च पूर्वोदाहृतषष्ठांशवचनानुसारेण क्रमेण तत्तद्रूपराहित्येनानुसंन्धानमेव मोक्षसाधनमिति प्रथमांशषष्ठांशोपसंहाराभ्यामवगम्यते ॥

द्वितोयांशेऽपि—

" स च विष्णुः परं ब्रह्म यतस्सर्वमिदं जगत् ।
जगल्लयो यत्र चेदं लयमेष्यति सर्वशः ॥
तद्ब्रह्म परमं धाम सदसत्परमं पदम् ।
यस्य सर्वमभेदेन यतश्चैतच्चराचरम् ॥
स एव मूलप्रकृतिः व्यक्तरूपो जगच्च सः ।"

इति प्रथमांशोपक्रमक्रमेण सर्वोपादानं ब्रह्म प्रस्तुत्य, तस्य मूलप्रकृतित्वं व्यक्तरूपेण जगद्रूपत्वं चानुसन्दधानः कार्यकारणभावनिबन्धनम् " जगच्च सः " इति वचनं विशदीकुर्वन् पराशरोऽन्तेऽहमर्थम्—

" एको व्यापी समश्शुद्धो निर्गुणः प्रकृतेः परः ।
जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ॥
यस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् ।
विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः ॥
वेणुरन्ध्रप्रभेदेन भेदः षड्जादिसंज्ञितः ।
अभेदो व्यापिनो वायोस्तस्यैवं परमात्मनः ॥ "

इति एकत्वसर्वगतत्वौपाधिकभेदभिन्नत्वादिभेदेनोपदिश्य निर्विशेषचिन्मात्रं जीवात्मस्वरूपं परमार्थस्वरूपमिति विविनक्ति ॥

तृतीयतुरीयांशौ मन्वन्तरवंशानुचरितयोर्विस्तरेणोपपादनप्रसगेन वर्णाश्रमधर्मादीन् विवेचयतः ॥

पचमांशस्तु भगवतः श्रीकृष्णस्य जन्मादिवैकुण्ठलोकप्राप्त्यन्तचरितवर्णनप्रसङ्गेन भगवतो निर्विशेषमेव मुख्यं तत्त्वमिति प्रतिपादयतीति पूर्वमेव निरूपितं तत्राक्रूरस्तुतिसमालोचनेन ॥

अत्रापि परापरविद्याया विस्तरेणादौ समाकलनं निर्विशेषम् , विश्वरूपं वा, तदपि धारणार्थं कल्पितमेवेत्यक्रूरस्तुतिप्रसगेन परमात्मनोऽवाच्यत्वादिकं व्यवस्थापितम् । अत्रापरविद्यायाः शब्दब्रह्मरूपेण पृथक् करणाद् तयोः परस्परसम्बन्धाभावः, परविद्यार्थस्याशब्दगोचरत्वं च विशदीक्रियते । "प्रकृतेः परः" इति "अक्षरात्परतः पर" इति च प्रकृतिसंम्बन्धविनिर्मोको विशदमवगम्यते ॥

किं बहुना ? द्वितीयांशोपसंहारे—ऋभुनिदाघसंवादे—

"तदेतदुपदिष्टं ते संक्षेपेण महामतम् ।
परमार्थसारभूतं यदद्वैतमशेषतः ॥

एवमुक्तो ययौ विद्वान्निदाघं स ऋभुर्गुरुः ।
निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥

सर्वभूतान्यभेदेन ददृशे स तदात्मनः ।
एवं ब्रह्मपरो मुक्तिमवाप परमां द्विजः ॥

सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तिदृष्टिभिरात्मापि तथैकस्सन् पृथक् पृथक् ॥"

"सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्॥"

इति न केवलं परमात्मा, किंतु जीवात्माऽपि संविन्मात्रम्, न नाना; किन्तूपाधिभेदाद्भिन्न इव भातीति डिण्डिमयति। सर्वेषामेतेषां वचनानामद्वैतपरतयैवादित आन्तं प्रवृत्तानामपि न केवलाद्वैते तात्पर्यम्, किन्तु विशिष्टाद्वैत एवेति वादो घटस्य पटीकरणमेव, यदागमानां सहस्राणामपि दुःशकम्॥

सर्वथा तु विष्णुपुराणं बहुषु स्थलेषु जगतां भ्रान्तिदर्शनत एव स्थितिम्—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामप्यसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥"

इति निर्विशेषे संविन्मात्रे ब्रह्मशब्दं संकेतयच्चाज्ञानकल्पितं जगद् ब्रह्मणीति विवेचयति॥

तत्र ब्रह्माज्ञानकल्पितत्वं न भवतीत्यत्र परमतेनाज्ञाने षडनुपपत्तयः प्रधानाः प्रदर्श्यन्ते,—(१) आश्रयानुपपत्तिः, (२) सा द्विविधा—ब्रह्माश्रयानुपपत्तिः, जीवाश्रयानुपपत्तिः—इति। (३) तिरोधानानुपपत्तिः। (४) स्वरूपानुपपत्तिः, साऽपि भावरूपतानुपपत्तिः, अनिर्वचनीयत्वानुपपत्तिश्चेति द्विविधा; (५) प्रमाणानुपपत्तिस्तु—प्रत्यक्षप्रमाणानुपपत्तिः, अनुमानप्रमाणानुपपत्तिः, आगमप्रमाणानुपपत्तिः, अर्थापत्त्यनुपपत्तिरिति चतुर्विधा, (६) निवर्तकानुपपत्तिः, निवृत्त्यनुपपत्तिः—इति॥

तत्र प्रथमं ब्रह्माश्रयत्वमविद्यायाः—

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥"

इति वचनमुपपादयति। तत्र ब्रह्मणो ज्ञानरूपस्याज्ञानस्य तमोरूपस्य च तेजस्तिमिरयोरिव विरोधादज्ञानस्य ब्रह्मश्रयत्वपक्षाक्षेपनिरासः प्रमाणजन्यज्ञानस्यैवाज्ञाननिवर्तकत्वेन विरोधित्वात्, स्वरूपप्रकाशस्य तदविरोधित्वाद् न ब्रह्माश्रयत्वमज्ञानस्य नोपपद्यत इतीष्टसिद्ध्यादौ क्रियते। इदं तु प्रस्थानान्तरम्॥

प्रस्थानान्तरं तु ब्रह्मसिद्धि-भामतीकारादीनां जीवाश्रयत्वमज्ञानस्य, न ब्रह्माश्रयत्वमिति । तत्र जीवाश्रयत्वपक्षोपपादनप्रसगेनामोदस्य—"माऽस्तु वा ब्रह्माश्रयत्वमि"ति वाक्यं व्याजीकृत्य परमार्थप्रकाशिका वदति—"त्वया ब्रह्माश्रयत्वं नेष्टमि"ति । तुष्यतु दुर्जन इति न्यायेन प्रक्रमवाक्येनैव तत्रानिर्भरपरेण परमार्थप्रकाशिका चेत् सन्तुष्यति, सन्तुष्यतु नाम । ब्रह्माश्रयत्वपक्षस्तु न दुष्टत्वादनिष्ट आमोदस्य, किन्तु प्रस्थानान्तरोपन्यास एव तस्य निर्भरः । श्रीभाष्योपक्षिप्तस्य पक्षान्तरस्यापि न प्रसंग इति निरूपणप्रसंगेन हि ब्रह्माश्रयपक्षोपसंहारः, पक्षान्तरोपक्रमश्च । तथाचाविद्याया ब्रह्माश्रत्वानुपपत्तेरस्माभिरनभ्युपगमादिति प्रस्थानान्तरमवलम्ब्यैवेति विज्ञायाऽऽमोदतु परमार्थप्रकाशिका ॥

इतः परं जीवाश्रयत्वपक्षः समालोच्यते । तत्र जीवाश्रयत्वमज्ञानस्य जीवोपाधित्वमात्रेण । जीवो हि त्रिविधः——अज्ञानावच्छिन्नः, यस्यान्तःकरणाद्युपाध्यन्तरसंम्बन्धादहंभावादिः । स हि नाज्ञानाश्रयपदेनोच्यते, किं त्वज्ञानोपहितपदेन । तथाच ब्रह्मचैतन्यस्याविद्योपाधित्वमात्रेऽपि तत्कार्यान्तःकरणावच्छेदाद् जीवपदेन व्यपदेशः । तत्राविद्याश्रयत्वं जीवस्य ब्रह्मोपाध्यविद्याकार्यान्तःकरणाश्रयत्वम्, न तु साक्षादविद्याश्रयत्वम् । अत एव ब्रह्माविद्योपहितं जगदुपादानम्, ब्रह्मैव वृत्त्युपहितमज्ञाननिवृत्त्या मुक्तात्मेति व्यवस्था । तथाच परमतेऽनादिप्रकृतिसंबन्ध इव ब्रह्मणोऽनाद्यविद्योपधानम्, तेन च कारणत्वम्, जीवत्वं च, न तु जीवस्याज्ञानाश्रयत्वम् । अत एव केषांचन जीवकारणताभ्रमनिवारणार्थं वदति कल्पतरुः—

"जीवाज्ञानाज्जगत्सर्वं सकारणमिति ब्रुवन् ।
क्षिपन् समन्वयं जीवे न लेजे वाक्पतिः कथम् ॥"

इति भामतीतात्पर्यविवेचनार्थम् । तथाच जीवाश्रयत्वपक्षेऽन्योन्याश्रयापादनं चिन्मात्रस्यानाद्यविद्योपाधिप्रयुक्तानाद्यन्तःकरणाश्रयत्वाज्जीवभावस्य न

प्रसरत्यपि। व्यक्तं चैतद् ब्रह्मसिद्धौ। तत्राद्वैतसिद्ध्यादावनादित्वान्नान्योन्याश्रय इति वचनस्यापि पूर्वोक्त एवाशयः ॥

एतेन—जीवस्याज्ञानश्रयत्वं न भवति, जीवभावस्याविद्याधीनत्वेनान्योन्याश्रयादिति—परास्तम्,

वस्तुतस्तु परमतेऽपि स्वरूपचैतन्यस्य स्वप्रकाशस्याविद्याविरोधित्वात् कथं कर्मरूपाविद्याश्रयत्वम्? यदि तस्य नाज्ञानविरोधित्वम्, कथं तस्य ब्रह्माश्रयत्वपक्षस्याक्षेपः? दोषसाम्यात्। 'यश्चोभयोः समो दोषो न तत्रान्यतरोऽनुयोक्तव्यः' इति न्यायात। एवमहमर्थोऽनादिरविद्याश्रय इति भवन्मतेऽपि कर्मरूपाविद्याश्रयत्वेन जीवत्वम्, जीवत्वे सिद्धे कर्मरूपाविद्याश्रयत्वमिति कुतो नान्योन्याश्रयः? यदि प्रावाहिकानादित्वात्, तर्हीदं सिद्धम्—जीवत्वमप्यनादि, कर्मसबन्धोऽप्यनादिरिति। तावताऽपि कथमन्योन्याश्रयपरिहारः, यद्यनादित्वेन, तर्हि तुल्यम् ॥

तत्रानादित्वं नैसर्गिकम्, उत प्रवाहतः। आद्ये प्रकृतेरिव कर्मणामप्यविनाशापत्तिः, द्वितीये जीवभेदे कर्मभेद इत्युभयभेदात कृतहानाकृताभ्युपगमप्रसंगः। तत्र जीवस्वरूपमात्रं यदि नैसर्गिकमनादि, कर्मरूपाविद्यासम्बन्धस्तु प्रवाहतः, तर्हि कर्मसंबन्धस्य शरीराद्यपेक्षत्वाच्छरीरसंबन्धाधीना कर्मसिद्धिः, कर्मसिद्ध्या च शरीरसिद्धिरित्यन्योन्याश्रयः। अदृष्टस्य कर्मरूपाविद्याया अप्रत्यक्षत्वात् तदधीनश्शरीरसम्बन्ध इति न बीजाङ्कुरन्यायेन निर्वोढुं पार्यते। बीजाङ्कुरादौ कासुचन परपरासु कार्यकारणभावस्य प्रत्यक्षत्वेन खलु बीजाङ्कुरन्यायः ॥

एतेन—युष्मन्मते कर्मप्रवाहवत् बीजांकुरन्यायेनोपपत्तिरिति चेत्, तर्ह्यनेकाविद्यास्वीकारापत्ति। तत्र च पूर्वपूर्वाविद्यानिवृत्तिः कथम्, तत्त्वज्ञानाभावे मिथ्याभूतस्य निवृत्त्ययोगात्। निवृत्त्यभावे किमविद्यान्तरकल्पनेन? कथं च कल्पनातः प्राक् मिथ्याभूताविद्यासद्भाव इत्यादिप्रश्नपरम्परा—निरालम्बा;

"नैसर्गिकाविद्यान्तःकरणसंबन्धाधीनत्वाद् जीवभावस्य तस्याऽऽब्रह्मसाक्षात्कारमेकस्यैव स्वीकारात्, प्रावाहिकानादित्वस्यास्वीकारादनेकाविद्या-

कल्पनवैयर्थ्याच्च। भवन्मते तु प्राथमिककर्मसंबन्धः कथमिति प्रश्नस्तु दुष्परिहारः। अतोऽज्ञानस्य ब्रह्माश्रयत्वं जीवाश्रयत्वं च नानुपपन्नम् ॥

अत एव तिरोधानोपपत्तिरपि व्याख्याता। न हि स्वरूपज्ञानमज्ञानस्य विरोधि, इति पूर्वस्मिन् प्रकरण उपपदितत्वात् कण्टकेन कण्टकोद्धरणन्यायेनाऽऽविद्यकान्तःकरणवृत्त्युपधानस्यैवाज्ञाननिवर्तकत्वात्। तत्र मेघैः सूर्यस्यावरणवदत्रोपपतिरनुसन्धेया ॥

यत्तु—मेघैः सूर्यप्रकाशस्य तिरोधानं तस्य प्रकाशस्य ज्ञानरूपत्वाभावाद् मेघैस्तत्प्रसरप्रतिबन्धाच्चास्माकं तदग्रहणम्, ब्रह्मप्रकाशस्य तु ज्ञानरूपतया तद्विनाशाभावे ब्रह्मग्रहणमस्त्येवेति कथं तिरोधानम्—इति ?

तत्रेदमनुयुज्यते—यदि सूर्यप्रकाशस्य ब्रह्मणो ज्ञानरूपस्य च वैलक्षण्यम्, तथान्धकारस्य, ज्ञानस्य च, तर्हि कथं तेजस्तिमिरयोरिव ज्ञानाज्ञानयोर्विरोधोऽभिसंहित इति। तत्र यदि प्रकाशाप्रकाशाभ्याम्, अप्रकाशतिरोधानाभ्यां च साम्यम्, तर्हि प्रकृतेऽपि मेघैस्तिरोधानं प्रकाशस्य कथं न दृष्टान्ततामर्हति ? न च स्वरूपज्ञानाज्ञानयोर्विरोधकथाऽपि, अन्यथा कर्मरूपाविद्यासम्बन्धो जीवस्य स्वरूपज्ञानस्य कथम् ? अत एव ब्रह्मरूपं ज्ञानं नाज्ञानस्य नाशकम्। तत एव यावदखण्डाकारवृत्ति न ब्रह्मणो ग्रहणमपि, इति न तिरोधानमज्ञानेन स्वाश्रयेण स्वोपाधिना वा ब्रह्मणो नोपपद्यते ॥

अनेनाज्ञानस्वरूपमपि व्याख्यातम्। तमःप्रकृत्यादिशब्दाभिधेयं हि तदावरणविक्षेपशक्तिमत् किंचिद्भावरूपमिति निगदं व्याख्यातम्। प्रकृतिशब्दवाच्यत्वात्, मायापदार्थत्वाच्च। तस्य विक्षेपशक्तौ न परस्यापि विप्रतिपत्तेः संभावनाऽपि। तमश्शब्दवाच्यत्वं तु तस्यावरणशक्तिं विना नोपपद्यते।

" ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ॥

इति गीता तु ज्ञाननाश्यत्वमज्ञानस्य प्रतिपादयन्ती, अज्ञानस्यावरणशक्तिप्रकाशापरपर्यायज्ञाननाश्यत्वं च द्रढयति ॥

इदमज्ञानं न ब्रह्मणः शक्तिः, तस्यांशो वा, किन्त्वनाद्यध्याससम्बन्धाद् ब्रह्माश्रितम्, ब्रह्मावरकं च। अतो न ब्रह्मपरिणामवादः, किन्तु तद्विवर्तवाद एव, इति नाद्वैतमते ब्रह्मपरिणामवादादिप्रसंगः। तत्र तत्र तस्य शक्तित्वेनोल्लेखस्तु ब्रह्मण आवरणेन विवर्तमानताप्रयोजकत्वमात्रेण, न तु भास्करादिमत इव तच्छक्तित्वेन। अत एव न सा ब्रह्मणोऽभिन्ना, येन ब्रह्मवत् सत्यत्वापत्तिः। नाप्यत्यन्तभिन्ना; तत्रानाद्यध्याससिद्धस्य तस्य तेन तादात्म्यात्। अत एव नाद्वैतविरोधोऽपि; अनादेरप्यस्य ज्ञानबाध्यत्वेन तेन सद्वितीयत्वस्याभावात्। अनावृतसंविन्मात्रं खल्वद्वैतं नाम। न च तादृशे ब्रह्मण्यज्ञानम्, अन्यद्वा द्वितीयं सजातीयं विजातीयं स्वगतं वा संभाव्यतेऽपि, इति नाद्वैतहानिरज्ञानस्वीकारेऽपि। ब्रह्माश्रितं तदावरकं चाज्ञानं तदुपहितस्य तत्प्रतिबिम्बस्य वा जीवस्य भासते, अहमज्ञ इति तस्यैवानुभवात्॥

अनादीदमज्ञानं स्वप्रकाशब्रह्मावरकमपि तेन सर्वदा प्रतिभासाद् यावत्सत्त्वं प्रतिभासात् सुखादिकमिव प्रातिभासिकमुच्यते, न तु शुक्तिरूप्यादिसमतया प्रातिभासिकसत्तया। व्यावहारिकं हि तत्। यदप्रतिभासमानं न कदापि न समस्ति, तदेव प्रातिभासिकं नाम। अनादिरविद्यासंबन्धः। तत्सम्बन्धप्रयुक्त ईश्वरश्च तद्विशिष्टः तत्प्रतिबिम्बो वा। उभयथापि मायाया यावद्ब्रह्मसाक्षात्कारमविनाशात् प्रलयेऽपि न तदभावः॥

सकलधीवासनोपरक्तचैतन्यमीश्वर इति पक्षे तु जीवस्येव कारणात्मना विद्यमानोपाध्युपधानात् प्रलयेऽपि सत्त्वमिति न कोऽपि दोषः। तत्राज्ञत्वमज्ञानकार्योपाधिसम्बन्धप्रयुक्तं जीवस्य, अज्ञानोपहितस्य ब्रह्मण एव वस्तुगत्या जीवत्वाद्, जीवस्याप्यज्ञानसम्बन्धः, तद्भानं वा न विरुद्ध्यते॥

तत्रैकत्र द्वयमिति रीत्याऽन्तःकरणाज्ञानयोः शुद्धचैतन्यसंबन्धाद् जीवेऽज्ञत्वव्यवहारः। अनाद्यविद्याकार्यान्तःकरणस्यैकस्य तत्तज्जीवं प्रति स्वीकाराद् न प्रतिकल्पं जीवभेदापत्तिः। तत्र सुषुप्ताविव प्रलयेऽपीश्वरसंकल्पविशेषात् तत्तद-

न्तःकरणोपहितानामेव जीवानामाविर्भावः । अतो न कृतहानाकृताभ्यागमप्रसंगो मतद्वयेऽपि ॥

तत्राज्ञानं ब्रह्मेवानादि, स्वत एव कल्पितम् , न केनापि कल्पितम् । न हि सविशेषब्रह्मवादेऽपि प्रकृतेरनादेः, ब्रह्मणो वा कश्चन कल्पकोऽस्ति । तत्र यदि विना कल्पकान्तरं ब्रह्म सिद्धम्, तर्हि सर्वं तद्वदेव स्वयं कल्पितं भवत्विति शंका भवत्सिद्धान्तेऽपि समाना । तत्र यदुत्तरम् , तदेवात्रापि । न हि कल्पकान्तरं नास्तीति कृत्वाऽज्ञानस्यातिप्रसिद्धस्य स्वरूपानुपपत्तिः संभवति । अन्यथा सविशेषब्रह्मवादिनां तस्यापि कल्पकाभावेन स्वरूपासिद्ध्यापत्तिः ॥

स्वरूपानुपपत्तिः प्रकृते भावरूपा, अभावरूपा वा न भवितुमर्हतीत्येव प्रस्तुता । तत्र प्रकृतिरिवाविद्यापि भावरूपैव , प्रकृतेरेवाविद्यात्वात् । किं परमते प्रकृतेरपि स्वरूपानुपपत्तिः स्वीक्रियते, ब्रह्मणो वा ? तत्राविद्या भावरूपेत्यत्राहमज्ञ इति प्रत्यक्षं प्रमाणीकरिष्यते परस्तात् । तदेवानुसृत्य भावरूपामविद्यां वयमाश्रयामहे । न चाहमज्ञ इत्यत्यापामरसाधारणं ज्ञानं ज्ञानाभावावगाहि ॥

न ह्यत्र ज्ञानप्रागभावो विषयः । स्वरूपज्ञानस्य स्वप्रकाशत्वाद्, नित्यत्वाच्च न तत्प्रागभावस्तत्र गोचरो भवितुमर्हति । स्वरूपज्ञानविषयकज्ञानान्तरप्रागभावोऽपि नात्र विषयः । तच्च ज्ञानं जन्यज्ञानं वा, नित्यज्ञानं वा प्रतियोगितया भासते । तत्राभावज्ञाने प्रतियोग्यनुयोगिज्ञानस्य कारणतया तस्य सत्त्वे न ज्ञानप्रागभावः ; विरोधात् । तत्राहमज्ञोऽस्मीति प्रतीतिः कस्यचन भाविनो ज्ञानस्य प्रागभावं गृह्णाति वा, सर्वस्य भाविनो ज्ञानस्याभावं गृह्णाति वा । तत्र हि प्रागभावस्य भविष्यतीत्याकारज्ञानविषयत्वाद् नञ्घटितवाक्यजन्यज्ञानाविषयत्वात् , नञ्घटितवाक्यजन्यज्ञानाभावग्रहस्य तदत्यन्ताभावविषयकत्वाच्च नात्र ज्ञानप्रागभावस्य भानम् । प्राक्कालावच्छिन्नाभावः खलु प्रागभावो नाम । न चाहमस्मीति प्रतीतिविषयो वर्तमानकालावच्छिन्नोऽभावः प्रागभावो नाम । सत्यम्, वर्तमानकालोऽपि कञ्चित् कालं प्रति प्राक्कालः ;

तथापि नात्र प्राक्कालावच्छिन्नत्वं भासते, न वा तस्य वर्तमानकालावच्छिन्नतया भानसंभवोऽन्ताभावस्येव त्रैकालिकस्य। अतो नात्र ज्ञानप्रागभावो विषयः। धारावाहिज्ञानस्थल उत्पत्तिमात्रेण ज्ञानप्रागभावस्य स्फुटस्फुटतरादिभेदेन ज्ञानानुभवप्रतीत्यनुपपत्त्याऽपि नाज्ञानस्य ज्ञानप्रागभावस्वरूपत्वसंभवः। ज्ञानात्यन्ताभावः, सामयिकाभावो वा नात्राज्ञानपदार्थः; तस्य ज्ञाननाश्यत्वाभावेन तद्रूपेण प्रकृताज्ञानत्वाभावात्॥

वस्तुतस्तु—"मायां तु प्रकृतिं विद्यात्" इत्यादिश्रुतिसिद्धजगत्परिणामिकारणस्याविद्याया एवात्र प्रस्तुतत्वात्, तस्याश्च भावरूपत्वस्य भवद्भिरपि स्वीकारात्, भावरूपैवाविद्येति स्वीकर्तव्यम्। न चाविद्यायाः कारणत्वं विप्रतिपन्नम्; तस्यां विक्षेपशक्तिमत्यामविप्रतिपत्तेः। आवरणशक्तौ विप्रतिपत्तिस्तु भवतामकिञ्चित्करी; तस्या आश्रयविषययोरनुपदमेव विवेचनात्। इदमेवाभिप्रेत्योक्तमामोदे—व्यावहारिकताया अविद्याख्यमूलवस्त्वधीनत्वात् तत्सिद्धये भावरूपाज्ञानमावश्यकम्—इति॥

तत्राविद्याकार्यस्य व्यावहारिकत्वे विप्रतिपत्तावपि तस्यास्तत्परिणामितया कारणत्वस्य स्वीकारात् कथं प्रकृतिकारणतावादिनां भवतां भावरूपाज्ञानवादो निराकर्तुं शक्यते? तत्र यदि प्रकृतिरेव परिणामिकारणम्, इति तत्समर्थनार्थमेवाविद्याया भावरूपायाः स्वीकारः, तर्हि नास्माकमपि तत्र विप्रतिपत्तिः॥

तस्याः कार्यमपि सत्यमेव स्यादिति कथं भावरूपाज्ञानसाधनेन जगन्मिथ्यात्वमिति चेत्, श्रूयतां सावधानम्—अविद्याभावत्वसमर्थनं हि न तत्र निर्भरेण, किन्तु तस्या अभावव्यावृत्तय एव भावत्वोपपादनम्। वस्तुतस्तु—सा न भावरूपाऽपि, सत्त्वेनासत्त्वेन वाऽनिर्वचनीयत्वात्, इति तस्या भावाभावविलक्षणतृतीयप्रकारतायामेव निर्भर इतीष्टसिद्धिब्रह्मसिद्ध्यादौ, तत्त्वप्रदीपिकादिषु च व्यक्तम्॥

तत्रानिर्वचनीयत्वं वस्तुतो न सत्त्वम्, न वासत्त्वम्, इति सदसद्विलक्षणत्वमेव। तच्च शोधनफलमात्रम्, न तु तथा प्रतीतिसामान्ये विषयत्वेन। तथाच घटस्सन्निति प्रतीतावपि घटादीनां सत्त्वपरीक्षायां भाविबाधादिविवेकेन व्यावहारिकसत्त्वव्यवस्थया, सदसद्विलक्षणत्वाविरोध्यर्थक्रियाकारित्वादिव्यवस्थया वा निर्वाहसंभवाद् न विरोधलेशोऽपि। एतदर्थमेव प्रत्यक्षबाधोद्धारादिप्रकरणानि वादग्रन्थेषु, सिद्धान्तसिद्धाञ्जनादौ च। यथाच जगतः सदसद्विलक्षणत्वेऽपि सन् घट इति प्रतीतावपि सदसद्विलक्षणत्वस्य सत्त्वप्रतीतेश्च सत्तात्रैविध्यवादेन, एकसत्तावादेन, विकल्पाप्रमाण्यवादेन वाऽविरोधः, तथाऽन्यत्र विस्तर.॥

तत्र सर्वं वस्तु प्रतीतिमात्रेण न यथावन्निर्णेतुं पार्यते, अन्यथा देहात्मतावादादिनिरासः, सौगतार्हतादिमतनिरासनं वा कथं सुसाधम्? तथाच सदिति प्रतीयमानमपि भाविबाधादिपरीक्षादिनाऽसदिति वा प्रतीयमानमपि सदसद्विलक्षणत्वेन निर्धारयितुं शक्यते। त्रिकालाबाध्यत्वेन वा तुच्छत्वेन वोभयरूपेण वा घटादीनां प्रतीत्यभावात् सदसद्विलक्षणत्वमिति तु विवेकः॥

प्रत्यक्षं हि तत्कालमात्रसत्त्वमवगाहते, न तु कालत्रयाबाध्यत्वम्। तुच्छं तु न प्रमाणजन्यज्ञानविषयः। अतस्तदुभयस्वरूपसदसत्त्वग्राहकाभावात् सदसद्विलक्षणम्। परं तु सद्रूपेऽनध्यासात् तस्य जगतो विशेषः। वस्तुतस्तु श्रुत्या जगतो ज्ञाननिवर्त्यत्वस्यावगमेन भाविबाधप्रतीत्या न सत्त्वमत्राबाध्यत्वरूपम्॥

एतेन—न ह्यनिर्वचनीयमित्यज्ञानं लोके प्रतीयते, येनाज्ञानं तथा स्यादिति—परास्तम्॥

ज्ञाननिवर्त्यस्य तस्य सत्त्वाभावेन, प्रत्यक्षत्वेन प्रमाणजन्यज्ञानविषयत्वेन वा सत्त्वाभावेनार्थापत्त्यापि न तस्यानिर्वचनीयत्वासिद्धिः। न ह्यज्ञानं सकलप्रतीत्यविषयोऽपि सिद्ध्यतीति वदामः, किन्तु प्रतीयमानमपि त्रिकालाबाध्यत्वरूपेण सत्त्वेन न प्रतीयते, न वाऽसत्त्वेन। प्रत्यक्षादिप्रमाणसिद्धस्यापि

भावाख्यस्य तस्यानिर्वचनीयत्वमर्थापत्त्यापि, इति नाव्यवस्थापातः। निर्विशेषं ब्रह्म तु नाज्ञानमिव प्रमाणान्तरबाध्यमिति न सद्विलक्षणम् ॥

अत एव तत्—

"न सन्नासन्न सदसद् न चानुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं शून्यं माध्यमिका विदुः॥"

इति वचनसिद्धं न शून्यम्, प्रथमकोट्यविनिर्मुक्तत्वात्। न च तस्य निर्विशेषस्यापि न प्रमाणसिद्धत्वम्; तत्र हि प्रमाणजन्यज्ञानस्य तदाश्रयविषयकाज्ञाननिवृत्तिपर्यन्तमात्रं व्यापारेण फलव्याप्यत्वाभावेऽपि वृत्तिव्याप्यत्वात्। आवरणाभिभवार्था, चिदुपरागार्था, अभेदाभिव्यक्त्यर्था वा वृत्तिरिति त्रीणि हि प्रयोजनानि वृत्तिरूपस्य ज्ञानस्य। तत्र घटाकारवृत्तेर्घटावच्छिन्नचैतन्यांश आवरणाभिभवमात्रार्थत्वेन वृत्तिव्याप्यत्वमात्रम्, न तु चैतन्यस्य फलव्याप्यत्वम्। घटांशे प्रत्यक्षत्वं तु तदभिव्यक्तचैतन्यभास्यत्वेन, इति तत्र फलव्याप्यत्वम्। अज्ञानकार्ये घटेऽज्ञानाश्रयत्वाभावेनावरणाभिभवमात्रेण वृत्तेः प्रत्यक्षत्वानापादकत्वात्। अतो न प्रमाणव्यापारस्य ब्रह्मण्यज्ञाननाशार्थमनुपयोगः, इति न ब्रह्मणः प्रमाणासिद्धत्वम्। तच्च प्रमाणजन्यवृत्त्युपधानमात्रम्, तद्विषयत्वं वा कल्पितमिति त्वन्यदेतत् ॥

एतेन—ब्रह्मवद् भावाज्ञानमनिर्वचनीयं प्रतीतिं विनैव सिद्ध्यतीति खलु व पदार्थसरणिरिति—परास्तम् ॥

अज्ञाने ब्रह्मणि चोभयत्र तत्स्वरूपे प्रमाणस्य प्रत्यक्षादेः सत्त्वात्, तस्य चासकृदावेदितत्वाच्च ॥

तत्राज्ञानमपि ब्रह्मवदनादि, तदपरमार्थत्वं तु भाविबाधावसेयम्, न तावत्पर्यन्तमनुभूयते, इति वस्तुगत्याऽपरमार्थत्वेऽपि तत्सत्तादशायामावरणादिकार्यकारिण्येव, अन्यथा काचकामलादिदोषाणां पश्चात् नक्ष्यता कथमावरकत्वम्? अयमेव न्यायोऽज्ञानेऽपि; तत्त्वज्ञानानन्तरं नंक्ष्यतोऽपि स्वसत्तादशायामावरकत्वाविरोधात् ॥

एतेन--दोषापारमार्थ्ये केन ब्रह्माच्छिद्येत ? कथं च जीवः सिद्ध्येत् ? कथं च भ्रमः ? कथं च जगदित्यादिप्रतिबन्दीपरम्परापि—परास्ता,

अनादिसिद्धाज्ञानेनानष्टेन ब्रह्मावरणादिसर्वकार्यनिर्वाहस्याविरोधात्। इदमेवाभिप्रेत्याद्वैतामोदो वदति—ब्रह्माभावे किमुपजीव्य दोषकॢप्तिः ? कुतो जीवसिद्धिः ? कुतो ब्रह्मज्ञानम् ? कुतो जगदिति भ्रमहेतुदोषाश्रयत्ववदधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः, इति श्रीभाष्यमाश्रित्य या चात्र पूर्वोक्ता प्रतिबन्दीपरम्परा, सा तु दूषितैव॥

यत्तु—ब्रह्मापरमार्थ्येऽपि भ्रमोपपत्तिरिति सर्वं शून्यं स्यादिति श्रीभाष्याशयवर्णनम्—ब्रह्मव्यतिरिक्तापारमार्थ्ये हि तेषां कदाचिद् बाध्यत्वम्, एवं ब्रह्मापरमार्थ्ये शून्यमेव सर्वमिति ज्ञानेन सर्वस्य बाध्यत्वमवश्यं स्वीकर्तव्यम्, इति सर्वशून्यत्व एव पर्यवसानम्—इति॥

तत्रेदं विविच्यताम्—सविशेषब्रह्मपारमार्थ्यवादे कथं सर्वशून्यज्ञानेन बाध्यत्वाद् न सर्वशून्यतानापत्तिः, न वा ब्रह्मणोऽपि पारमार्थिकत्वमिति। यदि ब्रह्मणः श्रुतिसिद्धस्यान्यबाध्यत्वायोगात्, तर्हि कथं नसविशेषब्रह्मापारमार्थ्यम्, इति कथं वा भवतामपि शून्यवादान्निस्सारः। यदि श्रुतिप्रामाण्याद् व्यवस्था, तर्हि समानम्। यथा च श्रुतिप्रामाण्यमद्वैतमतेऽपि, तथा प्रागेवावेदितम्। न चाज्ञानादौ ब्रह्मणि च न प्रमाणम्॥

न चाज्ञाने प्रमाणानुपपत्तिः। 'अहमज्ञ' इति प्रतीतिर्हि भावरूपमेवाज्ञानं विषयीकरोति, न तु ज्ञानप्रागभावम्, न वा ज्ञानात्यन्ताभावमिति पूर्वोक्तम्। तत्र प्रकृतिस्थानीयस्य तस्य प्रकृतेरिव भावरूपत्वमेव परैरपि स्वीकर्तव्यम्, न तु ज्ञानाभावरूपत्वमित्यपि प्रागेवावेदितम्। तत्र ज्ञानप्रागभावो यदि जन्यज्ञानप्रागभावः, तर्हि तस्य सत्कार्यवादेऽन्तःकरणात्मत्वात्, अन्तःकरणमेव वृत्तिप्राक्कालावच्छिन्नमज्ञानम्, तदेव वृत्तिज्ञानावस्थं ज्ञानमिति वक्तव्यम्। तत्र च सत्कार्यवाद उत्तरावस्थया न पूर्वावस्थाया निवृत्तिः; उत्तरावस्थायामपि पूर्वावस्थापन्नकारणाभेदस्य सत्त्वेन तन्नाशायोगात्। आरम्भ-

वादे खलु ज्ञानप्रागभावस्य ज्ञानेन नाशः, न तु सत्कार्यवादे ; अन्यथा मृद् घट इति कारणात्मनोऽपि घटेऽनुवेधानुभवविरोधापत्तिः । ततश्च "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।" इति वचनविरोधापत्तिः । ज्ञानप्रागभावस्यैवाज्ञानरूपत्वे तु सर्वेषां ज्ञानोत्पत्तिमात्रेणाज्ञाननिवृत्तेरावश्यकत्वात् येषामिति विशेषणमनर्थकं स्यात् । अनेन ज्ञायते—उत्पन्नेऽपि ज्ञाने तत्राप्रामाण्यशङ्कादौ पटुतरसंस्काराभावे च नाज्ञाननिवृत्तिः केषांचन भवतीति ॥

ज्ञानात्यन्ताभावविषयकत्वं तु नात्र संभवति । तथाहि—किमत्र ज्ञानसामान्याभावोऽज्ञानम्, उत ज्ञानविशेषाभावः । तत्र 'अहमज्ञः' इति प्रतीतिकाल आश्रयज्ञानस्य, प्रतियोगिज्ञानस्य च सत्त्वे न ज्ञानसामान्याभावो विषयतामर्हति । तत्र च ज्ञानसामान्याभाव एवाज्ञानमित्यापत्त्या न विशेषाज्ञानसिद्धिः । तत्र यदि सामान्यनिषेधस्य विशेषनिषेधनान्तरीयकत्वाद् विशेषनिषेधोऽप्यर्थसिद्धः, तर्हि घटं न जानामीत्यादौ पटाज्ञानमपि, विषयः स्यात् । न हि विषयाविशेषितं निराश्रयं च जन्यं ज्ञानमस्तीति तत्र तत्र संप्रतिपन्नमेव । सति चैवं न तत्तद्विषयविशेषितज्ञानसामान्याभाव एवाज्ञानमिति वक्तव्यम्, न तु सामान्यतो ज्ञानाभावः । तत्र च 'घटं न जानामि' "पटं न जानामि' 'इमं घटं न जानामी'त्यादिप्रत्ययनिर्वाहार्थमनेकाज्ञानकल्पनापत्तिः । तत्र च 'घटं न जानामि' इमं तु घटं न जानामि,' 'अमुं घटं न जानामि' 'सर्वं घटं न जानामी'त्यनुभवविरोधश्चापरिहार्यः ; निराश्रयनिर्विषयज्ञानासंभवात् । आश्रयविषयज्ञाने ज्ञानरूपप्रतियोगिज्ञाने च सति ज्ञानाभावप्रत्यक्षानुपपत्तिरेव । अत एव न द्वितीयः, तत्तद्विशेषज्ञाने सति तदभावप्रत्ययानुपपत्तेः । अद्वैतमते त्वज्ञानस्य भावरूपत्वाद् न प्रतियोगिज्ञानापेक्षा ; आश्रयज्ञानस्य साक्षिस्वरूपत्वाद् विषयस्यापि साक्षात्तत्तदवच्छिन्नचैतन्यस्याज्ञानाविरोधित्वाद्, नाज्ञानानुभवविरोधः ॥

एनेन—भवतोऽपि परमात्मानमहं न जानामि, अहं परमात्मज्ञाना-भाववानित्यभावविषयकप्रत्ययस्यानुभवसिद्धतया, तत्र प्रतियोगिग्रहणमस्ति वा, न वेति विकल्प्य, तद्दूषणे सुकरे तत्र च—यश्चोभयो समो दोष. परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ इति—परास्तम्।

न ह्यद्वैतमते परमात्मानं न जानामीत्यादौ ज्ञानाभावो विषयः, किन्तु भावरूपं प्रतियोगिनिरपेक्षमज्ञानमेव, इति नाभावज्ञानपक्षोक्तविकल्प-तद्दूषणे प्रसज्येते। तदेवं प्रत्यक्षमज्ञाने प्रमाणमिति स्थितम् ॥

न केवलं प्रत्यक्षम्, किं त्वनुमानमपि तत्र प्रमाणम्—तद्यथा—प्रमाण-ज्ञानम्, स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्र-काशितार्थप्रकाशकत्वात्; अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्—इति ॥

यत्तु—प्रकृतसाध्यानुमितिरूपमपि ज्ञानं प्रमाणज्ञानतया पक्ष, इत्य-प्रकाशितार्थप्रकाशकत्वात् तद्विषयाज्ञानावरकाज्ञानान्तरमेषितव्यम्। तत्र चानभिमतार्थसिद्धि। एवं चाज्ञानान्तराच्छादितस्याज्ञानस्य प्रतीत्यभावाद्, ब्रह्मातिरोधायकत्वभङ्ग.। तत्र विरुद्धत्वं द्विविधम्—साध्याभावव्याप्यत्वरूपम्, सिद्धान्तमभ्युपेत्य ‘तद्विरोधे विरुद्धम’ इति न्यायसूत्रात् स्वाभिमतसिद्धान्त-विरोधित्वं चेति। तत्राज्ञानविषयकाज्ञानान्तरस्वीकारे प्रथमविरुद्धत्वाभावेऽपि द्वितीयं विरुद्धत्वमनिवारणीयम्—इति।

तत्र ब्रह्मसिद्धिकारोक्तरीत्याऽज्ञाने न कस्यापि विप्रतिपत्तिः; सर्वेषु दर्शनेष्वज्ञानस्य केनचन प्रकारेण स्वीकारात्, प्रत्यक्षादिसिद्धत्वाच्च, किन्तु तस्याभावरूपत्वे, आवरणविक्षेपोभयशक्तिकत्वे, विक्षेपशक्तिमात्रे, ब्रह्माश्रय-विषयकत्वादावेव विप्रतिपत्तिः। अतश्च प्रत्यक्षेणाभावव्यतिरिक्तत्वे भावरूपत्वे च साधिते, तस्यैवोपबृंहणार्थमनुमानम्—द्विर्बद्धं सुबद्धं भवतीति न्यायेन ॥

तत्रान्धकारस्य प्रकाशाभावरूपत्वं न सभवति, किन्तु ‘नीलं तमः’ इति प्रतीत्या तस्य भावरूपत्वमेवेति स्थितमेव दर्शनान्तरे। अनुभवोऽपि प्रदीप आरोपितेऽपि क्रमेण प्रकाशवृद्धिरिति। तथा तत्र क्षणभेदेन प्रकाशभेदः,

मन्दमन्दतरादिभेदेन तमोऽनुभवश्च। तत्र प्रकाशाभावस्य तमस्त्वे तस्य प्रथमप्रभयैव निवृत्तत्वात् कथं तमोऽनुभवः ? इति तेन न्यायेन पूर्वोक्तविधयाऽज्ञानस्य प्रागभावरूपत्वासंभवात् प्रत्यक्षस्यापि तमःशब्दवाच्यभावरूपाज्ञानविषयत्वं दृष्टान्तमुखेनापि साधयितुमुक्तानुमानम् ॥

एतेन—'अहमज्ञ' इति प्रत्यक्षेणैवाज्ञानसिद्धौ तत्र विवादाभावेनानुमानस्यैव प्रयोगायोगादिति—परास्तम्।

किं वाऽस्मिन्ननुमाने दूषणमभिप्रेयते ? सिद्धसाधनं चेत्, यं प्रत्यसिद्धम्, तं प्रत्येव हि सर्वत्रानुमानप्रयोगः। यदि भवतां भावरूपमज्ञानंसिद्धम्, तर्हि स्वागतम्; विवादाभावात्। इदमेवात्रानुयुज्यते—किं पौनःपुन्येन प्रत्यक्षस्यज्ञानाभावविषयकत्वमेव, न भावविषयकत्वमिति चर्वितचर्वणेन ॥

इदं ह्यनुमानम्—अज्ञान आश्रयानुपपत्ति–तिरोधानानुपपत्ति–स्वरूपानुपपत्ति–भावरूपत्वानुपपत्ति–निवर्तकानुपपत्ति–निवृत्त्यनुपपत्तीः सर्वा अपि वारयद् अभावव्यतिरिक्तं ब्रह्माश्रयं तत्तिरोधायकं ज्ञाननिवर्त्यं वस्त्वन्तरं भावविलक्षणं भावाभावविलक्षणं व ज्ञानं साधयति विशिष्टम्। तत्र प्रागभावव्यतिरिक्तत्वमपि साधितमेव साध्यकोटावज्ञानस्य प्रागभावव्यतिरिक्तत्वविशेषणेन। अज्ञानं प्रागभावव्यतिरिक्तमित्येवानुमानप्रयोगः कर्तव्य इति नेयं राजाज्ञा ॥

अज्ञानम्, प्रागभावव्यतिरिक्तम्, स्वविषयावारकत्वात्, तमोवदित्यादिरूपेण पृथगनुमानमपि नासंभवम्। यथा चाहमज्ञ इत्यस्य न ज्ञानाभावविषयकत्वम्, तथा पूर्वमेवोक्तम्। भवन्मतेऽपि स्वरूपज्ञानप्रागभावो धर्मभूतज्ञानप्रागभावो वा नाज्ञानमिति तु स्थितमेव। न चाज्ञाने कस्यापि विप्रतिपत्तिः, किन्तु तस्य प्रागभावादिरूपत्व एवेति नाज्ञानमत्र साधनीयम्; अज्ञानत्वेन तस्य निर्णीतत्वात्, किन्तु तत्तद्विशेषणविशिष्टतयैव तत् संदिग्धम्, इति नात्र परोक्तरीत्या विशिष्टसाधनायोगः। अज्ञानरूपधर्म्यंशेऽप्रकाशितार्थप्रकाशकत्वमनुमानस्येत्यद्वैतसिद्धिरपि तत्तद्विशेषणविशिष्टत्वेनैव धर्म्यंशसाधनमभिप्रैति ॥

यत्तु—अहमज्ञ इति प्रत्यक्षस्यैवाप्रकाशितार्थप्रकाशकत्वादज्ञानावरकाज्ञानान्तरपूर्वकत्वापत्तिः। तत्र साध्यानंगीकारे चानैकान्त्यम्। अहमज्ञ इति प्रतीतेर्न ब्रह्मावरकाज्ञानविषयत्वानुपपत्तिः। ततश्च तस्यानावृतत्वात् स्वयं सिद्ध एव मोक्षः स्यात्—इति।

तत्राहमज्ञ इति प्रतीतौ साक्षिभातस्यैवाज्ञानस्य भानमिति नाप्रकाशितार्थप्रकाशकत्वमिति नाज्ञानविषयकाज्ञानान्तरापत्तिः, इति न तत्रानैकान्त्यम्। अहमज्ञ इति प्रतीतिर्ब्रह्माश्रयाज्ञानपक्षे एकत्र द्वयमिति रीत्याऽन्तःकरणाज्ञानोभयतादात्म्यापन्नं ब्रह्मचैतन्यमेव स्वाश्रयविषयकमवगाहत इति पंचपादिकाविवरणे व्यक्तम्, इति तन्मतेन न ब्रह्मणोऽनावृतत्वम्, येन ब्रह्मणोऽतिरोधानम्, स्वयंसिद्धो वा मोक्षः स्यात्। भामतीमते त्वमज्ञानोपहितमेवेत्युपाधिना तेनावरणं न विरुद्धमिति न कोऽपि दोषः॥

अर्थप्रकाशकत्वहेतुघटकमावरणनिवर्तकत्वं पक्षदृष्टान्तसाधारणम्। न च तद् ज्ञाने ब्रह्मविषयके वर्तते। न च तद्विषयकत्वमात्रं तत्प्रकाशकत्वम्, येनाज्ञानस्यापि ब्रह्मप्रकाशकत्वापत्तिः। अत एव न तद्विषयव्यवहारजनकत्वम्, अन्यद्वा। यथाचाज्ञानाश्रयत्वेऽपि जीवस्य नान्योन्याश्रयादिः, तथा पूर्वमेवावेदितम्, इति जीवाश्रयत्वपक्षोऽपि न दुष्टः। ब्रह्मरूपस्य ज्ञानस्य नाज्ञानविरोध इत्यपि पूर्वमेव निरूपितम्॥

अत्रास्थानेऽपि पौनःपुन्येनाज्ञाननिवर्तकानुपपत्तिराम्रेडीयते, इति तदपि प्रकरणमत्रैवालोच्यते। तत्र निवर्तकानुपपत्तिमधिकृत्याज्ञानभावरूपत्वानुपपत्तिप्रकरणे कश्चन विचारः, अज्ञानानुमानहेतुविचारावसरे कश्चन विचारः, तत्प्रसंगेनानिर्वचनीयत्वखण्डनादिप्रसंगेऽपरो विचारः॥

तत्र प्रथमः प्रकारः—अस्याज्ञानस्य परमात्मज्ञानेन निवृत्तिर्वक्तव्या। तज्ज्ञानं न शाब्दबोधात्मकम्, न वा निदिध्यासनानन्तरं चरमभावि। आद्ये तत एव सर्वबन्धनिवृत्तौ मननादिवैयर्थ्यम्। अन्ये तु शाब्दबोधात्प्राक् साक्षात्कारात्प्राग् वा परमात्मानं न जानामीति प्रत्ययापत्तिः। ततश्चाचार्यस्याप्यज्ञत्वादुपदेशानुपपत्तिः—इति॥

एतावता ह्युत्पन्नसाक्षात्कारस्याज्ञाननिवृत्त्या तद्दृष्ट्या गुरुशिष्यभावाभावादुपदेशानुपपत्तिरिति साध्यते। तत्र च जीवन्मुक्तानामधिगतब्रह्मसाक्षात्काराणामपि प्रारब्धानुवृत्त्योपदेष्टृत्व भवतीति पूर्वमेवोपपादितम् ॥

द्वितीय प्रकारस्तु—ज्ञानतेजसो प्रकाशरूपत्वात् तेजसा तिमिरमिव ज्ञानेन सता निवर्त्यमेवाज्ञानमिति नाज्ञानस्यात्मलाभोऽपि, इति कथमज्ञानेन ब्रह्मण आवरणम्—इति ॥

सोऽपि प्रमाणजन्यज्ञानस्यैवाज्ञाननिवर्तकत्वात् स्वरूपज्ञानस्याविद्याविरोधित्वाभावस्योभयसंप्रतिपन्नत्वादुत्पतन्नेव हन्यते। न च सत्यं वस्तु ज्ञाननाश्यमिति भगवत्पादानां सिद्धान्तः, किं त्वधिष्ठान आरोपितम्, प्रातिभासिकं वाऽधिष्ठानसाक्षात्कारेण प्रमाणजन्येन निवर्त्यत इति। यथा शुक्तिज्ञानेन तत्रारोपितस्य रजतादेर्निवृत्तिरिति। सर्वं ज्ञानं यथार्थमिति वादस्तु सर्वानुभवविरुद्धो न प्रमाणम्, इति शुक्तिरजताद्यनंगीकारवादः सर्वानुभवविरुद्ध उपेक्षणीय एव। को वा विप्रतिपद्यते सर्वं परमार्थम्, अपरमार्थभूतं ज्ञाननाश्यं वा किमपि नास्तीति परेषां सिद्धान्त इति। अनुभवविरुद्धः, अनुमानागमार्थापत्त्यादिप्रमाणविरुद्धोऽयमित्येवाद्वैतामोदकारादयः ॥

भावरूपं सर्वं सत्यम्, यथाकाशादिकमिति तु दृष्टान्तस्यासंप्रतिपन्नत्वात् तत्र व्यभिचारात्, तत्पारमार्थिकत्वसाधनस्य श्रुतिविरुद्धत्वात्, अज्ञानस्य भावाभावविलक्षणतृतीयप्रकारस्य केवलभावरूपत्वाभावाच्च न सांप्रतम्। अद्य जातस्य रजतभ्रमस्य दिनान्तरजातेन शुक्तिज्ञानेन निवृत्तौ न तावत्पर्यन्तं रजतज्ञानानुवृत्त्यापत्तिः। ज्ञानान्तरेणोत्तरेण निवृत्तौ तस्य शुक्तिज्ञानेन निवृत्तिवादो न युक्तः, इति रजतभ्रमस्येश्वरज्ञानेन निवृत्तस्यापि बाधो शुक्तिज्ञानेनेति वक्तव्यम् ॥

तच्च तस्य तदुपादानभावरूपाज्ञाननिवृत्तौ निवर्तते, इति कथं तत्र नानिर्वचनीयतावादः? जगत इव तदुपादानस्याज्ञानस्यापि मिथ्यात्वं भाविबाधापेक्षयैव, न तु ततः प्राक्, इति मिथ्याभूतस्य मिथ्यैवोपादानं भवित-

मर्हतीत्यत्र नान्योन्याश्रयः; श्रौतत्वादुभयमिथ्यात्वस्य। उपादानोपादेययोः साजात्यस्यौत्सर्गिकत्वमभिप्रेत्य मिथ्याभूतस्य मिथ्याभूतमुपादानम्, सति तु बाधे न स नियम इत्येव 'नविलक्षणत्वा'धिकरणम् ॥

अत्राज्ञानस्य, तदुपादेयस्य च बाध्यत्वादुभयोः साम्यं प्रतिपादितम्। न चाज्ञानं बाधमर्हतीति वादस्तु निवृत्त्यनुपपत्तिपरीक्षावसरे परीक्षिष्यते। सांप्रतं तु तत् सिद्धवत्कृत्य विचारः,—शुक्तिरूप्यादिस्थले तथा दृष्टम्, इति सत्योपादानकत्वमुपादेयमिथ्यात्वं चाधिष्ठानारोप्ययोर्नाद्वैतिभिरपि कैश्चन दण्डेन वार्यते। भामती तु तत्रापि विप्रतिपद्यते; अविद्योपहितमेवाधिष्ठानमुपादानं वेति मन्वाना। शुक्तिरूप्यादिस्थलेऽप्यधिष्ठानविधया शुक्त्यवच्छिन्नं चैतन्यम्, परिणामविधया तूलाविद्या च कारणमिति सर्वप्रस्थानसंमतम्। तूलाविद्या तु शुक्तिज्ञानबाध्या प्रातिभासिकी, इति न साजात्यवैधुर्यम् ॥

न च शुक्तिरूप्यादिकं प्रति व्यावहारिकाविद्योपादानम्, येन व्यावहारिकस्य जगतः पारमार्थिकाविद्योपादानं स्यात्। पारमार्थिकब्रह्मोपादानत्वविवक्षायां तु न तत्र सालक्षण्यम्। कार्यविषमसत्ताकस्यैव हि विवर्तोपादानत्वम्, परिणामिकारणं तु कार्यसमसत्ताकमिति तत्रैव सालक्षण्यनियमः। सालक्षण्यं चात्र सत्तांश एव। तदपि परिणामिकारण एव, इति शुक्तिरूप्यतदुपादानतूलाविद्यादृष्टान्तेन जगतोऽपि मिथ्याभूतस्य मिथ्यैवोपादानमित्यनुमानमदुष्टमेव। 'नविलक्षणत्वा'धिकरणं तु शुद्धत्वाशुद्धत्वादिवैधर्म्ये परिणामिपरिणामयोरप्रयोजकम्, विवर्तोपादाने तु सत्तामादायापि साधर्म्यं साधयति। सादृश्यं तु शुक्तिरजतादिस्थले कारणतयाऽपेक्षितमेव, परन्तु न तत्रापि नियम इत्येवोक्ताधिकरणतात्पर्यम्। सत्तासाम्यमविद्यातत्कार्ययोरपेक्षितमेव। अत्राविद्यायाः सत्याया नोपादानत्वं परिणामविधयेति श्रुत्यर्थापत्त्यनुगृहीतमनुमानमत्र प्रमाणमेव। परमतेऽपि सूक्ष्मचिदचितोः साक्षात्परिणामिनोः स्वकार्यस्थूलचिदचिद्भ्यां सालक्षण्यमूरीक्रियते। तत्रापि ब्रह्मणोऽप्युपादानत्वं स्वीक्रियमाणं यदि परिणा-

मित्वेन, तर्हि तत्र सालक्षण्याभावः साक्षात् परिणामित्वाभाव एव। उपादानत्व-कथा तु या काऽपि भवतु ॥

सत्यम्, शुक्तिरूप्यादौ व्यावहारिकरजतसंस्कारसध्रीचीनाविद्यापरिणामत्वं दृश्यते, नायं नियमेन। "स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इत्यत्र पूर्वदर्शनजनितसंस्कारः सहकारिकारणमित्युच्यते। तच्च पूर्वदर्शनं न सांप्रतिक-रजताधिकसत्ताकस्येति भाषितम्। प्राचीनानुभवमात्रमेतत्सदृशस्य तेनापेक्ष्यते। स च प्रमात्मको वा भ्रमात्मको वेति तु न विशेषः। भ्रमादपि प्राचीनाद् भ्रमान्तरं हि दृश्यते ॥

तत्र यदि प्रमात्मकानुभवजनितसंस्कार एव तत्र विवक्ष्यते जगतः, तर्हि सांप्रतमिव कल्पान्तरेऽपि ब्रह्मसाक्षात्कारपूर्वक्षणावच्छिन्नबाधाविषयत्वेनाबाधितत्वात् पारमार्थिकत्वमेव प्राचीनस्यापि वर्तत एव। परमार्थत्वं चेदं लौकिक-पारमार्थिकत्वम्। तत्र प्रकृतज्ञानविषयसदृशत्रिकालाबाध्यज्ञानजनितसंस्कारसह-कारिकारणतायां तु न किमपि मानम्। इद तु सर्वानुभवसिद्धम्। प्रत्यहं तदा तदा घटज्ञानं सर्वेषां जायते। सर्वं च ज्ञानं घटविषयकम्, एतद्घटसदृश-नूतनघटज्ञानान्यपि भवन्ति, भविष्यन्ति च। सर्वेषां घटज्ञानं व्यावहारिक घटज्ञानमेव। तत्र नूतनघटादिज्ञानानामपि व्यावहारिकघटविषयाणां विनाऽपि पारमार्थिकघटान्तरज्ञानजनितसंस्कारमाविर्भावो दृश्यते ॥

तत्र नूतनघटादिज्ञानानां व्यावहारिकघटान्तरज्ञानजनितसंस्कारजन्य-त्वेन यदि प्रमात्वम्, तर्हि कल्पान्तरकालीनघटादिज्ञानानामपि कल्पान्तरीय-व्यावहारिकघटान्तरज्ञानजनितसंस्कारेणैव ज्ञानं कथं दण्डेन वार्यते? एवमे-वान्तःकरणादीनां सर्वेषां व्यावहारिकप्रकृत्यात्मनैवावस्थानाम्, मृदाद्यात्मनेव घटादीनाम् ॥

तत्राविद्यापरिणामत्वमेव सर्वेषां घटादीनामित्यविप्रतिपन्नम्। अविद्या चानादिः सर्वदैकैव व्यावहारिकी च। तत्समसत्ताकत्वेन तत्परिणामत्वं च तत्कार्या-

णामित्यविप्रतिपन्नम् । शुक्तिरूप्यादौ प्रातिभासिकतूलाविद्यानानात्वेन, तदात्मना प्रातिभासिकस्य रजतस्यावस्थानं वक्तुं न शक्यते। यदा तु भ्रमानन्तरं बाधज्ञानं न संजातम् , तदाऽज्ञानात्मना तद्रजतमवतिष्ठते। तदा प्रातिभासिकसदृशरजतान्तरज्ञानजनितसंस्कारादपि प्रातिभासिकभ्रमान्तरं भवत्येव। यत्र त्वविद्या तत्कार्यमुभयं च बाधितम् , तत्रापि भ्रमो भवति, परं तु तत्र व्यावहारिकसदृशरजतज्ञानजनितसंस्कारेणैव निर्वाहः ॥

न चैवं व्यावहारिकभ्रमस्थले , व्यावहारिकाणां सर्वेषां स्वोपादानकारणात्मनाऽवस्थानेन तत्र तज्ज्ञानजनितसस्कारेणैव निर्वाहात् । अत एव श्रुतिः—"धाता यथापूर्वमकल्पयत" इति। तत्र शुक्त्यज्ञानं वास्तवरजतज्ञानाधीनतसंस्कारसापेक्षमेव रजतोपादानमित्यत्र वास्तवत्वं तत्कालाबाधितत्वमात्रेण। तथा व्यावहारिकभ्रमस्थलेऽपि तत्कालाबाधितघटान्तरज्ञानजनितसंस्कारसापेक्षं मूलाज्ञानं घटाद्यध्यासे कारणं घटाद्याकारेण परिणमत इति समानम् । भासमानाधिकसत्ताकसदृशज्ञानजनितसंस्कारापेक्षायां तु न प्रमाणम् । न हि शुक्तिरूप्यादिस्थले त्रिकालाबाध्यरजतज्ञानजनितसंस्कारः कारणम् , येन पारमार्थिकघटादिज्ञानं पूर्वमपेक्षितमिति वाचोयुक्तेरवसरः स्यात्। तदिदं सिद्धम्—प्रातिभासिकव्यावहारिकपारमार्थिकसत्ताख्यसत्तात्रैविध्यवादे व्यावहारिकाणां सदृशव्यावहारिकान्तरज्ञानजनितसंस्कारोऽविद्यायाः सहकारिकारणम् । प्रातिभासिकानां तु यथासंभवं सदृशप्रातिभासिकान्तरज्ञानजनितः, तस्य बाधितत्वे तु तत्सदृशव्यावहारिकज्ञानजनितसंस्कारः सहकारिकारणम् । यस्य रज्जौ सर्पज्ञानस्य बाधो बहुकालपर्यन्तं न जातः, तस्य कालान्तरे रज्जुत्वाज्ञान इदंरूपमात्रेण ज्ञाने पुनरपि तत्र सर्पबुद्धिर्जायते। तत्र प्राचीनप्रातिभासिकसर्पज्ञानजनितसंस्कारेणापि प्रातिभासिकसर्पान्तरबुद्धिस्तदुपादानतूलाविद्यावशाद् भवति। तत्र मिथ्यात्वनिर्णयस्तु प्रातिभासिकानां लौकिकपारमार्थिकत्वेन त्रैकालिकाभावबोधनेन, व्यावहारिकाणां त्रिकालाबा-

ध्यत्वरूपपारमार्थिकत्वेन त्रैकालिकेनाभावेन। एकसत्तावादे तु सर्वेषां स्वरूपत एव बाध इति विवेकः ॥

सति चैवं प्रतीतिकाले प्रातिभासिकसतामपि पारमार्थिकत्वेन त्रैकालिकनिषेध उपपद्यते। न हि बाधज्ञानेऽविशेषेण सत्ताभावो विषयः सत्तात्रैविध्यवादे। एकसत्तावादे त्वविशेषेण सत्त्वाभावो यद्यपि विषयः, तथापि प्रतीतिकाले सत्तादात्म्यमात्रम्, न तु सत्त्वमिति स्वीकारात् त्रैकालिकसत्तानिषेधः स्वरसः। नेदं रजतमित्यादिबाधज्ञानं हि शुक्तिव्यतिरेकेण सार्वत्रिकरजताभावमेव बोधयति। न चैतावता रजतस्यासत्त्वम्; पूर्वप्रतीतत्वात्। एकसत्तावादे ह्रीयमेव व्यवस्था। एवमेव सत्तात्रैविध्यवादेऽपि प्रातिभासिकत्वेन प्रतीतत्वेऽपि पारमार्थिकत्वेनाप्रतीतत्वात् त्रैकालिकः पारमार्थिकत्वेन रजताद्यभावः ॥

न चात्रापि पक्षेऽसद्रजतम्; भ्रमकालेऽधिष्ठानानुवेधेन प्रतीतत्वेनासद्वैलक्षण्यात्। न च पक्षद्वयेऽपि रजतं प्रतीतिकाले पारमार्थिकत्वेन प्रतीयते, तदभिमुखी प्रवृत्तिस्तु सत्तात्रैविध्यवादे तात्कालिकसत्त्वप्रतीत्या, पक्षान्तरे सत्तादात्म्यात्। इदंतादात्म्येनैव हि रजतस्येदम इव सत्तादात्म्येन सत्त्वानुभवः, न तु साक्षात् तदनुभवः; बाधितत्वात्। अधिष्ठानगतसत्त्वस्य संसर्गाध्यासमात्रं रजतादौ, न तु तद्गतं सत्त्वं तत्रापि, येन ब्रह्मवद् घटादेरपि सत्यत्वापत्तिः। सति चैवं शुक्तितत्त्वानुभवकाले रजतं नास्ति नासीन्न भविष्यतीति प्रतीतावपि तस्याः पारमार्थिकत्वेन स्वरूपेण वा त्रैकालिकनिषेधाभिप्रायत्वाद् न प्रातिभासिकशुक्तिरूप्यकल्पनं निर्मूलम्, बाधितं च, इति नानिर्वचनीयख्यातिरसंभविनी ॥

यत्तु—रजतप्रतीतेः, इन्द्रियगतदोषस्य, इन्द्रियस्य, दुष्टेन्द्रियस्य वा प्रातिभासिकरजतकारणत्वं नास्तीति भाषणम्, तदिदं दूषणावसरे संभावितविकल्पोद्भावनमात्रम्, नाद्वैतिनामपि तथा संमतमिति कृत्वेति पर एव स्वीकरोति। अयमेव न्यायो रजतप्रतीतौ रजतं प्रति कारणमित्यपसिद्धान्तानु-

वादेऽपीति सर्वत्र सिद्धान्तविरुद्धांशे संभावितविकल्पोद्भावनमात्रमिति पर एव स्वीकरोति। तथाच यदि तत्र न निर्भरः, तर्हि स्वागतमेव ॥

तत्रेदं रजतमित्यत्र रजतोत्पत्तिं प्रति शुक्तिसादृश्यज्ञानसमुद्बोधितरजतसंस्कारसध्रीचीना प्रमातृचैतन्याभिन्नशुक्त्यवच्छिन्नचैतन्यनिष्ठाऽविद्या कारणम्, न सादृश्यज्ञानमात्रम्, रजतसंस्कारमात्रम्, इदंज्ञानमात्रम्, अविद्यामात्रं वेत्यवश्यमभ्युपगमनीये रजतसादृश्यज्ञानादिव तादृशसौसादृश्यप्रतीतेरेवेदंरजतमिति निर्वाहादन्येषामत्र कारणत्वकल्पनं वृथा, गौरवं चेति परे। भामती तु नात्र सादृश्यप्रतीतिरनुभूयते। इदं रजतमिति तादात्म्यप्रतीतिः खल्विदंरजतयोः प्रतीयते। न च देशान्तरस्थरजतस्यानुभवः; इदंतादात्म्येनानुभवात्, देशान्तरस्थस्य चेदमा तादात्म्याभावादित्यादिना दूषयति—'इदं रजतमि'त्यत्र प्रातिभासिकरजतकल्पनं विना नान्या काऽपि गतिर्वर्तते—इति ॥

इदं तु सादृश्यज्ञानस्यापि सहकारिकोटिप्रवेशमूरीकृत्योक्तम्। कवितार्किकचक्रवर्तिनस्तु शुक्तौ बहुवस्तुसादृश्ये सत्यपि 'इदं रजतमि'ति प्रतीतौ शुक्तिसादृश्यज्ञानसामग्र्याः कारणत्वेनैव निर्वाहात् सादृश्यज्ञानं न कारणमिति वदन्ति। इदमेवाभिप्रेत्याद्वैतामोदकारः—सादृश्यज्ञानं न कारणमिति प्रतिपादयति। तन्मतानुसारे तु इदं रजतमित्यत्र न सादृश्यप्रतीतिरेव ॥

एतेन—इन्द्रियदोषकारणताऽपि—व्याख्याता। सोऽपि न साक्षाद्रजतोत्पत्तिं प्रति कारणम्, किन्तु तूलाविद्याया रजतात्मना तदाकारवृत्त्यात्मना च परिणामे सादृश्यज्ञानमिव सादृश्यसामग्रीव वा सहकारिकारणमेव। अतो न कारणदोषो विषयमन्यथाकरोति, किन्त्वन्यथा भानमेव कारयति। अन्यात्मता तु तूलाविद्याधीनैव। सा च तूलाविद्यावच्छिन्नचैतन्यनिष्ठा, न तु शुद्धचैतन्यनिष्ठा। अवच्छेदकं च तत्रान्तःकरणमेव, इति यद्यपि प्रमातृचैतन्यनिष्ठैव, तथापि शुक्तीन्द्रियसन्निकर्षे तद्देशेऽन्तःकरणसम्बन्धेऽन्तःकरणशुक्त्योरेकचैतन्यावच्छेदकत्वादुभयावच्छिन्नचैतन्यैक्ये शुक्त्यवच्छिन्नचैतन्यनिष्ठाऽपि भवति। अत एव

मूलाविद्याकार्येऽपि शुक्तिशकल उक्तचैतन्यावच्छेदके तादात्म्येन रजताध्यासः। तत्र शुक्तिशकले रजतस्यैवाध्यासे कारणं तु तत्सादृश्यमात्रसंस्कारोद्बोध एव ॥

> यत्तु—सादृश्यज्ञानस्य कारणत्वे रजतं सदृगमिति प्रतीतिः स्यात्, न 'इदं रजतम्'—इति,

तदिदं परस्यात्मानं विस्मृत्यैव वर्णनम्; यतोऽयं इदं रजतमित्यत्र रजतसादृश्यप्रतीतिरिति स्वोक्तिं विस्मृत्यैवैवं वदति। उक्तं च पूर्वं रजतसादृश्यज्ञानं भ्रमे सहकारिकारणमात्रम्, न सादृश्यज्ञानमेव भ्रम इति। तथाचेदं रजतमित्यत्र शुक्तौ रजतसौसादृश्यप्रतीतिरेवेति रजतसादृश्यप्रतीत्या रजतभ्रमे रजतसादृश्यमिति बुद्धिर्युक्ता। नेदं रजतमिति गवय इव गोसादृश्यबुद्धिरिति स्वभाष्यविरुद्धाऽपि रजतसौसादृश्यप्रतीतिरेव रजतज्ञानमिति कथा परस्य ॥

तत्र शुक्तिरजते रजतबुद्धिस्तत्र प्रातिभासिकरजतत्वाङ्गीकारेण, उभयसाधारणरजतत्वाङ्गीकारेण वा यद्यपि भवति; तथापि प्राचीनाचार्याणां रीत्या तत्र लौकिकपारमार्थिकरजततादात्म्यमप्यध्यस्यत इति स्वीकारात् रजतबुद्ध्युत्पत्तिः; तत्र रजते प्रातिभासिकं रजतत्वमपि स्वीकृत्य व्यावहारिकरजततादात्म्यमपि स्वीकृत्य सर्वनिर्वाहात्, अनिर्वचनीयख्यातिराप्यतयाऽभिमतस्यासन्निकृष्टत्वे, तत्सन्निकर्षे त्वन्यथाख्यातिर्नानिष्टा प्राचीनाचार्याणां मते। ब्रह्मानन्दादयस्तु तत्राप्यनिर्वचीयख्यातिं स्वीकुर्वन्ति ॥

> यत्तु—नानिर्वचनीयख्यातिवादो युक्तिपथमारोहति। सत्ख्यातिवाद एव युक्त। तत्र त्रिवृत्करणबलाद् मरुमरीचिकाया जलांशस्यापि सद्भावात् तत्र विद्यमानस्य जलस्य ज्ञानम्। यत्र तु शुक्तिकादौ रजतावयवसत्त्वे विसंवादः, तत्र प्राभाकराभिमताऽख्यातिवादेन यथासंभवं व्यवस्था—इति।

तत्रेदंकाराभिमुखप्रवृत्तिनिर्वाह इदमि रजतसंबन्धं विना न निर्वहति। मरुमरीचिकायां जलांशसत्त्वे पिपासातुरस्य तदभिमुखं प्रवृत्तस्य पिपासोपशमनं न भवतीत्यादिप्रकारेण पक्षद्वयमपीदमध्यासभाष्यविवरणावसरे निरस्तं

विस्तरेण। तत्र शुक्तौ न रजतावयवा वर्तन्ते, किंतु शुक्त्यवयवे रजतावयवसादृश्यमात्रम्। न च तावता तत्र रजतप्रतीतेर्निर्वाहः। मरुमरीचिकायां त्रिवृत्करणेन जलांशसद्भावेऽपि तस्य सूक्ष्मत्वाद् न तेष्वस्ति त्रिवृत्कृतेष्वपि व्यक्तवज्जलाशभानं संभवति॥

स्वाप्नज्ञानं तु स्वप्नावस्थप्रमातृचैतन्यनिष्ठाविद्यापरिणामात्मकार्थविषयकं ज्ञानम्, न तु तत्र विषयः,. ज्ञान चोभयमपि सत्यम्। असत्यस्यापि तस्यार्थक्रियाकारित्वं प्रागेवोपपादितम्। तत्र शुक्तिरूप्यादिकमपि यद्यपि प्रमातृचैतन्यनिष्ठतूलाविद्याकार्यम्, तथापि बहिरिन्द्रियाणामव्यापाराद् तत्र प्रमातृचैतन्याभिन्नशुक्त्यवच्छिन्नचैतन्यनिष्ठतूलाविद्यापरिणामो रजतम्, तदाकारवृत्तिश्च। अत्र तु प्रमातृचैतन्य एवेन्द्रियाणामप्यध्यास इत्यैन्द्रियकत्वं स्वाप्नस्थले। तत्र स्वप्ने निद्रा दोषविधया सहकारिकारणम्, शुक्तिरूप्यादौ काचकामलादिस्तथा। तत्र स्वप्नेऽविशदावभास प्रमातृचैतन्यमधिष्ठानम्, प्रबोधे तु तस्य विशदावभासेन सर्वनिवृत्तिः। अविशदावभासविशदावभासयोर्निद्रादोषतदभावौ हेतुभवतः। जागरभ्रमेऽपि प्रमातृचैतन्यनिष्ठतूलाविद्याकार्यत्वात् तत्तत्प्रमातृमात्रस्य तत्तदनुभवस्तु समानः॥

जागरिकाणामीश्वरसृष्टौ तु तदुपाधिमायापरिणामभूतास्ते तादृशचक्षुरादिमतां सर्वेषामपि प्रत्यक्षाः। सति चैवं स्वप्ने नेश्वरसृष्टानामेव स्मरणम्। अनुभवः खलु स्वाप्निकानाम्, न स्मरणम्; तत्तानुनुसन्धानात्, तद्देशाभिमुखप्रवृत्तेरनुभूयमानाया अनुपपत्तेश्च। ईश्वरसृष्टानामनुभवस्तु तत्सृष्टेन्द्रियद्वारेण सर्वेषामेव जागरिकेष्विव स्यात। न च तत्र स्वाप्नजागरयोर्वैषम्यमपि स्यात्, इति "वैधर्म्याच्च न स्वप्नादिवत" इति सूत्रविरोधोऽपि॥

"कृत्वाचिन्तयेदं सूत्रमि"ति श्रुतप्रकाशिका तु हृदयेनानुमन्यते— न स्वाप्निकानामीश्वरसृष्टत्वं संभवतीति। श्रीभाष्यं तु स्वप्नदृङ्मात्रानुभाव्यत्वमीश्वरीयशक्तिवैचित्र्यादिति भाषते। इदं च स्वाप्निकसृष्टौ पुण्यपापादिसहकार

ईश्वरस्य जागरसृष्टाविवेति सूचयति। अद्वैतमते तु जीवसृष्टत्वात् युक्तं पापपुण्यफलं शुक्तिरजतादिज्ञानम्, स्वाप्नज्ञानं वा। सति चैवं स्वाप्नज्ञानमपि न यथार्थम्। यथार्थत्वे हि बहुतरानुभाव्यस्तद्विषयः स्यात्। पुण्यपापफलं तु तस्य तस्यैव भोगाय केवलम्, नान्येषां साक्षात्काराद्यर्थमपि। न हि रथगजादय ईश्वरसृष्टाः, तत्तत्पुरुषीयपुण्यपापफलास्तत्तन्मात्रभोग्याः प्रत्येकं भिन्नभिन्नास्तत्तन्मात्रदृश्याश्च दृश्यन्ते॥

ईश्वरीयशक्तिवैचित्र्यादुपपत्तिस्तु कथं जागरेष्वपि दण्डेन वार्यते विना प्रकृतिसाहाय्यं सर्वेषाम्॥

एतेन—स्वप्ने सर्वस्य वस्तुनस्तदेकानुभाव्यतया पुण्यपापानुगुणं भगवता सृष्टिरिति—परास्तम्॥

तत्र यथा जागरे प्रत्यक्षीक्रियमाणाः सर्वेऽपि सर्वेषां न भोगाय, केषांचनैव भोगाय, अन्येषान्तु दृष्टयोदासीना एव। किं तत्र कारणम्? तेषां तद्भोगकारणपुण्यपापाभाव इति वक्तव्यम्। तथाचेश्वरस्य प्रपंचसृष्ट्यै न पुण्यपापे सहकारिकारणे, किन्तु तत्तन्मात्रभोग्यतापादने, इति स्वाप्निकानामपि सृष्ट्यै नेश्वरस्य पुण्यपापे सहकारिकारणे इत्यन्येषामपि तत्साक्षात्कारः कथं न? यदीन्द्रियाणामुपरमात्, तर्हि स्वप्नदृङ्मात्रस्यापि कथं तत्साक्षात्कारः? अत एव निर्णीयते—इन्द्रियोपरमेऽप्यैन्द्रियकतया प्रत्यक्षीक्रियमाणाः स्वाप्निकाः पदार्था नेश्वरसृष्टाः, ईश्वरसृष्टेन्द्रियाणामुपरमेऽपीन्द्रियग्राह्यत्वात्॥

इदमेवात्रालोचनीयम्—यदिन्द्रियोपरम इन्द्रियग्राह्यत्वं कथमिति। तत्र यदीश्वरीयशक्तिवैचित्र्याद् इन्द्रियाणामपि सृष्टिः, तर्हि तान्येवेन्द्रियाणि पुनर्जागरे कुतो नानुवर्तन्ते? कुतश्च स्वाप्निकानामेव प्रबोधानन्तरमपि दिनान्तरीयाणामिव नोपभोगः? न वा साक्षात्कारादिकं च?

प्रत्यहं स्वप्ने तत्तदिन्द्रियाणां सृष्टौ चासंख्येयशरीरेन्द्रियादिरेक एव जीवेऽस्मिन् जन्मनि जन्मान्तरे च कृतानां नानुसन्धानाय भवति। अतो वरं

तत्तज्जीव एव सृजति स्वीयतूलाविद्याद्वारा स्वोपभोग्यान् उदासीनान् रथगजादीन् तद्ग्राहकेन्द्रियाणि सर्वाणि, निद्रादोषापगमे प्रमातृचैतन्यस्य विशदावभासे च स्वयमेव तानि बाध्यन्ते रथगजादय इवेति। ततश्च स्वाप्नज्ञानं "स्मृतिरूपः परत्र पूर्वदृष्टावभास" इत्युक्तरीत्या स्मृतिरूपम्, अविद्यमानेऽपि वस्तुगत्या वस्तुनि प्राचीनानुभवजनितसंस्कारप्रभवं च। इदमेवाभिप्रेत्यामोदो वदति—"स्वप्ने कल्पना केवलं स्मृतिरूपे"ति ॥

अत्र कल्पनात्वं स्मृतिरूपत्वं यदुक्तम्, तदिदमध्यासरूपत्वं मत्वैव "स्मृतिरूपः परत्र पूर्वदृष्टावभासः" "इत्यध्यासलक्षणं मनसि निधाय। नेदमध्यासभाष्यविरुद्धम् ॥

यत्तु—अद्राक्षमित्यनुभवानुसारेण स्रष्टुरेव तत्र स्वीकार —इति,

तत्र यदि सेयं सृष्टिरीश्वराधीना, तर्हीन्द्रियाणामुपरमादीश्वरसृष्टानां कथमद्राक्षमिति? जागरे शुक्तिरूप्यादीनां चाक्षुषप्रत्यक्षत्वन्तु चाक्षुषप्रत्यक्षशुक्त्यवच्छेदेन प्रमातृचैतन्याभिन्नशुक्त्यवच्छिन्नचैतन्याध्यस्तत्वेन प्रमातृचैतन्याभिन्नतयोपपद्यते, परम्परया तत्र चक्षुर्व्यापारस्य रजतेऽपि सत्त्वात्। न चैवं स्वप्न ईश्वरसृष्टिस्वीकारे। न चैवं सति शुक्तिरूप्यादिस्थले रजतादीनां स्मरणमात्रम्; इदंकाराभिमुखप्रवृत्तेर्दर्शनात्, आपणाद्यभिमुखप्रवृत्तेरदर्शनाच्च ॥

सृष्टिर्नामेश्वरस्य जीवस्य वा स्वोपाधिपरिणामात्मना प्रतिभास एव। स तु स्वप्नेऽपि जीवसृष्टावप्युपपद्यते। न चामोदकारः स्वप्नं स्मृतिरिति वदति, किन्तु स्मृतिरूपमिति। तत्र कुत्रचन लिखितमपि स्मृतिपदम् "स्वप्ने कल्पना स्मृतिरूपे"ति परोदाहृतवाक्यानुसारेणैव योजनीयम्। अतो नानिर्वचनीयताया सिद्धान्तविरोध आमोदस्य कुत्रापि, इति "मायामात्रमि"ति सौत्रपदमप्यद्वैतसिद्धान्तस्यैव पोषकम्। तत्र स्वाप्निकानां जागरेऽपि शुक्तिरूप्यादीनां चानिर्वचनीयत्वं तत्तत्पुरुषमात्रानुभाव्यत्वे सति तत्कालावसानत्वम्। इदं च जीवस्रष्टानामेव। ईश्वरसृष्टानां नैवंरूपमनिर्वचनीयत्वम् ॥

अत एव सूत्रम्—"वैधर्म्याच्च न स्वप्नादिवदि"ति। परमते तु तत्तत्पुरुषमात्रानुभाव्यत्वं तत्कालावसानत्वं च स्वाप्निकानां कथम्? कथं च स्वप्नजागरपदार्थयोरीश्वरसृष्टयोर्वैधर्म्यम्? ईदृशं वैधर्म्यं स्वप्नजागरयोरभिप्रेत्यैव सौगतमतनिरसनम्॥

"मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि"ति सूत्रे कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादित्यस्याद्वैताभिमतं विवरणम्—देशकालतत्तत्सामग्रीविशेषसंपत्त्यपेक्षमनभिव्यक्तत्वादिति॥

तत्र भामती—"न हि तावत्क्षीरस्येव दधि रजतस्य परिणामः शुक्तिः, न जात्वीश्वरगृहेऽपि चिरस्थितान्यपि रजतभाजनानि शुक्तिभावमनुभवन्ति दृश्यन्ते। न चेतरस्य रजतानुभवसमयेऽनुकूलेन्द्रियोऽन्यस्तस्य शुक्तिभावमनुभवति, प्रत्येति च। न च—उभयरूपं वस्तु, सामग्रीभेदात् कदाचिदस्य तोयभावोऽनुभूयते, कदाचिन्मरीचिरिति—साम्प्रतम्, न हि मरीचिभिः कदाचित् तृष्णाजन्योदन्या शाम्यति"—इत्यादि॥

तथा चेश्वरसृष्टत्वे सर्वेषामेकरूपोऽनुभवो भवति, सर्वानुभवयोग्यश्च भवति। सर्वोऽपीश्वरसृष्टः प्रपंचः। तत् कुतः? देशकालसामग्रीभेदाद्यपेक्षं तत्सृष्टत्वात्। न चैवं स्वाप्निका भावा देशकालादिहेतूनपेक्ष्येश्वरेण सृज्यन्त इति कल्पना भवति; तथा स्रष्टृत्वस्येश्वरे कुत्राप्यभावात्, अन्यथा जागरा अपि तथा कथं न स्रष्टुं शक्यन्ते? कथं वा शक्तिवैचित्र्येण स्वाप्निका अपि न सर्वसाधारणा ईश्वरसृष्टाः? तथा च स्वाप्निकाः, नेश्वरसृष्टाः, तत्तद्देशविशेषे तत्तत्कालविशेषे, तत्तत्सामग्रीभिरनभिव्यक्तत्वात्, इति कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिहेतुरीश्वरसृष्टत्व उपपद्यते। मायामात्रं त्विति 'तु' शब्दोऽपि तत्र यथार्थः॥

यत्तु—जागरिकार्थस्येवानिर्वचनीयस्य स्वाप्निकस्यापि यथावदेव दृश्यमानत्वादनभिव्यक्तस्वरूपत्वं दुरुपपादम्—इति।

तत्किं स्वाप्निका अपि रथगजादयो जागरिकरथगजादिकार्याय प्रभवन्ति? शुक्तिरजतादयो वा रजतादिकार्यं निर्वहन्ति? इत्यकामेनापि जागरिकाणामिवानभिव्यक्तस्वरूपत्वं स्वाप्निकानां स्वीकर्तव्यम्। सति चैवम्— "अनभिव्यक्तस्वरूपत्वादि"त्यस्य सत्यकामत्वादिजीवधर्माणामनभिव्यक्तत्वादिति विवरणे जीवानामित्यध्याहारदोषोऽनिवारणीयः ॥

किंच किमभिव्यक्तस्वरूपा अपि किं स्वाप्निकानेव भावान् स्रष्टुमर्हन्ति, उत जागरिकानपि तेषामुपभोगाय? तत्र यद्युभयत्रापि तेषां स्रष्टृत्वम्, तर्हि स्वाप्निकसृष्टिमात्रे जीवानां कर्तृत्वनिरसने कथमुक्तो हेतुरुपपद्यते? सर्वथा तु स्वाप्निकमात्रस्रष्टृत्वेऽनभिव्यक्तसत्यसंकल्पत्वमप्रयोजकत्वम् ॥

वस्तुतस्तु—सर्वयाथार्थ्यवादिनां मते सर्वस्येश्वरसृष्टत्वेऽविवादात् स्वाप्निकानां केवलमीश्वरसृष्टत्ववर्णनं किमर्थम्? यदि ब्रह्मणि सर्वकारणत्वं जीवकारणत्वश्रुतिविरोधपरिहारेण कर्तव्यं स्वाप्निकविषय इति तद्विचारः, तर्हि द्वितीयाध्याये खलु तस्य संगतिः, न तु साधनाध्याये। किं बहुना? सर्वोऽपि जीवस्वरूपविचारोऽत्राध्याये पादे चासंगत एव ॥

अयमेव न्यायः शुक्तिरूप्यादिषु। प्रातिभासिकानां स्वाप्निकानामीश्वरसृष्टत्वे शुक्तिरूप्यादीनामपि तत्साधारणमिति स्वाप्निकानामेव तस्येश्वरसृष्टत्वव्यवस्था कुतः? यदि तत्र भाष्यकाराणां न नैर्भर्यम्; तस्य रजतकार्यकारित्वस्य बाधानुभवात्, तर्हि किं स्वाप्निकानां सर्वेषां तत्कार्यकारित्वमबाधितम्? किंच स्वप्ने काश्यां रथादयो ये स्वप्नदृङ्मात्रेणानुभूताः, ते यदीश्वरसृष्टाः, तर्हि किं प्रबुद्धः काशीं गतः तानध्यक्षीकरोति? न केवलं काश्याम्, किन्तु स्वगृहद्वारे स्वप्नकालेऽनुभूतं तत्रैव किं तदव्यवहितोत्तरमेव तदध्यक्षयति? अतः शुक्तिरजतादेरिव तत्कार्यकारित्वाभावात् स्वाप्निकानामीश्वरसृष्टिपरतयोक्तसूत्रस्य नयनं नोपपद्यते ॥

"स हि कर्ता" इति तु पूर्वोक्तविधया शुक्तिरूप्यादाविव स्वाप्निकोपादानतूलाविद्याश्रयत्वेन भाष्योक्तरीत्या जीवस्य परंपरया हेतुत्वमात्रेण नेया। "य एषु सुप्तेषु जागर्ति" इति तु स्वप्नावस्थासंम्बन्धादसाधारणात् जीवपरैव। जाग्रदाद्यवस्थात्रयवत्त्वं हि जीवलक्षणम्, इति तत्रान्यतमावस्थयाऽपि स एव प्रथमं प्रतीयते। प्राज्ञाभेदाज्जीवस्य स्रष्टृत्वमिति तु पूर्वपक्षयुक्तिः, न तु सिद्धान्तयुक्तिः। व्यक्तं चैतद्भामत्याम्। सिद्धान्तयुक्तित्वेऽपि"प्राज्ञेनाऽऽत्मना परिष्वक्तः" इति तत्तादात्म्यमात्रं विवक्ष्यते, न तु प्राज्ञेनात्यन्ताभेदः। न च जीवेश्वराभेदो विशिष्टजीवब्रह्माभेदोऽद्वैतसिद्धान्ते। सर्वथा तु स्वाप्निकानां नेश्वरस्रष्टत्वम्, किंत्वनिर्वचनीयत्वमेव; सत्त्वासत्त्वाभ्यां निर्वक्तुमशक्यत्वात्॥

लोहितः स्फटिक इत्यादौ सन्निकृष्टस्थलेऽन्यथाख्यातिरिति प्राचीनाः। ब्रह्मानन्दादिदृष्ट्या तु—सर्वत्र भ्रमेष्वनिर्वचनीयख्यातिवादः। तत्र ब्रह्मसूत्रभाष्यवार्तिकं परोक्षभ्रममेव नांगीकरोतीति मतभेदा अद्वैतमते वर्तन्ते। तत्रैकतन्त्रमनुसृत्य तन्त्रान्तरनिरासवत् प्रस्थानभेदेन प्रस्थानान्तरनिरसनं न सांप्रतम्॥

एतेन—अलातचक्रभ्रमोऽपि—व्याख्यातः, न हि सम्यक् चक्रेऽन्तरालवदलातेऽन्तरालं वर्तते, येनान्तरालाग्रहणम्, तत्पूर्वकतद्देशसंयुक्तवस्तुग्रहणं वाऽस्यात्, इति तत्रान्तरालम्, तदग्रहणपूर्वकतद्देशयुक्तवस्त्वन्तरं चोभयमपि कल्पनीयम्। न च तत्र तत् सन्निकृष्टम्। अतोऽनिर्वचनीयख्यातिरेव। चतुष्कोणेऽन्तरालाग्रहण एव हि तत्र च प्रतीतिः॥

प्रतिबिम्बस्थलेऽपि दर्पणे मुखस्य सम्बन्धाभावेऽपि न बिम्बस्य तत्र प्रतीतिः, किंत्वन्यस्यैव स्वमुखस्य तदन्तर्गततया। तच्चासन्निकृष्टं मुखमेव; औपाधिकदोषाणामपि तत्र भानात्॥

अयमेव न्यायो द्विचन्द्रभ्रमस्थलेऽपि। तत्र हि पृथग् द्वौ चन्द्रौ तिमिरादिदोषदुष्टानां प्रतीयेते। न च द्वितीयश्चन्द्रः प्रथम एव। सन्निकृष्टस्थले हि धर्म-

मात्रस्यान्यथाख्यातिः, न तु स्वतन्त्रस्य धर्मिणोऽप्यपरस्य। अतस्तत्रापि द्वितीयश्चन्द्रमा अनिर्वचनीय एव ॥

यत्तु—शुक्तौ रजतमपि पारमार्थिकमेव भासत इति याथार्थ्यवादिनो-वदन्ति, तत्रेदं पृच्छ्यते—यत्पारमार्थिकरजतस्येश्वरसृष्टस्यैव तत्र सत्यरजतस्यापणस्थस्येव कथं न सर्वानुभाव्यत्वम्? किन्तु तत्तज्ज्ञातृमात्रविषयतयेति। यदि तत्र शुक्तौ सर्वानुभवानर्हरजतत्वबुद्धिमात्रं जायते, तस्य च बाधः, तर्हि बाधक ज्ञानं शुक्तितत्त्वज्ञानं वा, अन्यद्वा? आद्ये नामान्तरेणानिर्वचनीयख्यातिरेव ॥

एतेन—एकमात्रानुभाव्यतया भगवत्सृष्टे तत्र सर्वानुभवार्हरजतत्वबुद्धिर्भ्रान्तस्य जायते। तत्र वस्तुतस्तदर्हत्वाभावात् तदंशे बाध्यबाधकभाव, यस्यांशस्य प्रत्यक्षदृश्यत्वं तत्रैव सृष्टत्वप्रयुक्तयाथार्थ्यख्यातेरंगीकारात्, सर्वानुभवार्हांशस्य तत्रासृष्टत्वादविद्यमानत्वात्तद्विषयत्वस्यायुक्तत्वाभावात्। रजतजातीयाना सर्वकालसर्वपुरुषानुभाव्यत्वत्वेनास्य तद्विलक्षणत्वेन तदंश एव भ्रमत्वमिति—परास्तम्।

सर्वानुभाव्यत्वभ्रमो ह्यस्य दोषवशादेव, न तु स्वतः, इति दोषनिमित्तत्वमस्य स्वीक्रियते, तद्बुद्धिरतु सर्वानुभाव्यरजततादात्म्यभ्रमेण। 'इदं रजतमि'ति शुक्तिविशेष्यकतद्ज्ञानमपि तत्र भ्रम एव; शुक्तिविशेष्यकतया भगवता सृष्टत्वात्। शुक्तेरीश्वरसृष्टायास्तत्र सर्वानुभाव्यत्वेन तत्र तस्याभावात्। सति चैवं दोषवशात् रजते तन्मात्रानुभाव्ये भ्रान्तस्य सर्वानुभाव्यसादृश्यनिबन्धन तद्बुद्धित्वस्वीकाराद्, अपूर्वस्य रजतस्य लौकिकविलक्षणस्यैव स्वीकारात्, तस्येदंविशेष्यकत्वस्य स्वीकारात्, भ्रमत्वस्य च स्वीकारात्, को वाऽयं सर्वज्ञानयाथार्थ्यवादः? ईश्वरसृष्टत्वमात्रेण चेत्, किं तत्र मानम्? यदि तन्मात्रानुभाव्यत्वम्, तर्हि तत्सृष्टमेव तद्रजतं विलक्षणसामग्रीजन्यमनिर्वचनीयमेव, इति कुतोऽनिर्वचनीयख्यातिनाममात्रे विद्वेषः—शिवद्रोहे तात्पर्यमन्तरा?

यत्तु—भामतीकल्पतरुपरिमलानां भ्रमप्रक्रियाग्रन्थालोचनप्रसंगेन परिमलकाराणामन्यथाख्यातिवादानुसारेणावान्तरशंकामादाय परिमलकाराणामन्य-

थाख्यातौ नैर्भर्यं प्रदर्श्येते, तदिदं न केवलमत्रोद्धृतशशशृंगे भ्रममात्रमादाय, स्वाप्नभ्रमादिकं चादायान्यथाख्यातिवाद्युपक्षिप्तसर्वदूषणपरिहारेण परिमल एवान्यथाख्यातेः समर्थनात् तदीयपूर्वपक्षानुवादमात्रम्, न परमार्थप्रकाशनम्। एवं रीत्या खण्डनमण्डनप्रक्रियायामाद्रियमाणायां दृष्ट्या श्रीभाष्यकाराणामपि महापूर्वपक्षमादायाद्वैतमत एव महान्निर्भरः कथं न स्यात्?

वस्तुतस्तु—समर्थितैवानिर्वचनीयख्यातिः प्रातिभासिकरजतोत्पत्तिकारणानां पूर्वानुभवजनितसंस्कार-सादृश्यज्ञानसध्रीचीनतूलाविद्यादिकारणकलापनिरूपणेन। तत्र पूर्वानुभवजनितसस्काराभावान्न व्यावहारिकाणामनिर्वचनीयत्वमिति पूर्वकल्पमेवात्रापि पुनरनुवदति, इति तत्रत्यसमाधानमेव—भ्रमप्रमासाधारणानुभवजनितसंस्कारस्यैव भ्रमकारणत्वम्, व्यावहारिकघटप्रमाजनितसंस्कारेण प्रमात्वाभिमतव्यावहारिकघटज्ञाननिर्वाह इत्यादिरूपमत्राप्यनुसन्धेयम्। प्रतारकवाक्यात् शशशृंगभ्रमे तु यद्यपि न शशशृंगविषयकपूर्वानुभवजनितसंस्कारोऽस्ति, तथापि तत्र प्रतारकवाक्यजन्यानुभवः परोक्ष एव, न प्रत्यक्षः, सोऽपि तुच्छविषयकः, इति भ्रमे भासमानप्रातिभासिकाधिकसत्ताकतज्जातीयानुभवजनितसंस्कारस्तत्र कारणमित्यस्यात्रैव व्यभिचारः॥

एतेन—अरण्ये शशशृंगमस्तीति वाक्येन तत्रापि पूर्वानुभवस्योपपादनात् अरण्ये शशशृंगमितीदमनुभूतविषयकमेवेति को विशेष इति—परास्तम्,

प्रतारकवाक्यजन्यज्ञानस्य परोक्षत्वात्, अरण्ये जातस्य शशशृंगज्ञानस्य तु प्रत्यक्षत्वात्। तथाच यथाकथंचिदनुभवजनितसंस्कार एव यथासंभवं भ्रमं प्रति कारणमिति स्वीकर्तव्यमनिर्वचनीयख्यातिसमर्थनार्थमित्येव परिमळाशयः॥ अत एव स्वप्ने मनुष्यपशुपक्षिवृक्षाद्यनेकरूपस्योक्तस्य भ्रमो विशकलिततत्तदेकैकमात्रानुभवं प्राक्तनमादाय निर्वहणीयः, न तु सर्वात्मकैतादृशवस्तुनः पूर्वानुभवमपेक्ष्यैव भ्रमः॥

अनेन चेदमपि सिद्धं भवति— यत् "पूर्वदृष्टावभासः" इति प्रायिकम्, न तु नियतमिति। तथाच घटादिज्ञानस्य पूर्वतनानुभवाभावेऽपि न क्षतिः। प्रातिभासिकभ्रमे तन्नियम इत्यभिप्रायेण पूर्वदृष्टमित्यपि सूच्यते। तत्र प्रतारकवाक्यजन्यज्ञानमरण्ये शशशृंगं वर्तत इति परोक्षं यद्यपि सफलम्, तथापि तत्परीक्षणार्थमरण्यगमनादिकमन्यत्रेव न विरुद्धम्। तत्रारण्ये शशशृंगमिति प्रत्यक्षमेव भ्रमात्मकं जातम्। तन्निबन्धनं च दर्शनमात्रजं सुखं तु विलक्षणं भ्रान्तस्य तत्र वर्तत एव, इति न केवलं स्वरूपतः, किन्तु फलतोऽपि तत्र विशेषो वर्तते। तत्र काष्ठांशे शृंगानुभवो हि नान्यथाख्यातिः, किन्त्वनिर्वचनीयख्यातिरेव। एवमेव शृंगे शशीयत्वेऽपि॥

यद्यपि विलक्षणसामग्र्या विलक्षणरजतकल्पने गौरवम्, देशान्तरस्थ रजतसंसर्गमात्राध्यासे तु लाघवम्, तथापि शुक्तिकाया रजतवत्प्रत्यक्षानुभवः, 'नेदं रजतमि'ति बाधानुभवश्च नान्यथोपपद्यते; परोक्षस्यैवांशविशेषे प्रत्यक्षवदवभास इति कल्पनागौरवम्, देशान्तरीयरजतस्य शुक्तौ संसर्गमात्राध्यासस्वीकारादिप्रयुक्तं गौरवमन्यत्रापि। सर्वथा तु फलमुखगौरवं न दोषाय। शुक्तिरजतादीनां तत्तद्भ्रान्तमात्रानुभवादिव्यवस्थायां तु क्लेशादिकम्। अन्यत्रापि अन्यथाख्यातिपक्षनिरसनप्रकारा भामतीकल्पतरुपरिमलादौ विस्तृताः॥

रजतस्मृतौ प्रत्यक्षत्वारोप इत्यादिकथा त्वारोपकारणाधिष्ठानादिनिर्णयं विना नोत्तिष्ठति। इदंप्रत्यक्षरजतस्मृतिरूपवृत्तिद्वयैक्यवादरूप एव, नायमख्यातिः, न वाऽन्यथाख्यातिः, न वा सत्ख्यातिः, न वा ज्ञानमात्रयाथार्थ्यवाद इति संप्रतिपन्नम्। सत्यप्येवं तत्राविवाद इति हठवाद एवायम्॥

तत्रानिर्वचनीयरजतमुत्पद्यमानं सदेव शुक्त्यभिन्नतयैव प्रतीयते, इति न तत्र तज्जन्यः प्रत्ययः, शुक्तिज्ञानेन बाधाद् न तस्य विनाशप्रत्ययः इदंतादात्म्येनैवानुभवान्न द्रव्यद्वयरूपेण भानम्। तादात्म्यमपि तत्र कल्पितमेव। तत्र त्रयाणां स्वरूपत्वभानं च वर्तते। तथापि प्रकारसंसर्गविशेष्यविधया

भानम्, न तु स्वतन्त्रतयेति परं विशेषः। सत्यम्, अन्नारजते रजतबुद्धिः; तथापि भासमानं रजतं तत्तत्पुरुषमात्रानुभाव्यत्वाल्लौकिकरजतविलक्षणम्। तत्र परमत ईश्वरसृष्टिपक्षे निर्वाहप्रकाराः सर्वेऽप्यनुसन्धेयाः—अनिर्वचनीयतां शमविहाय, ईश्वरसृष्टतां च परित्यज्य। ततो नान्यथाख्यातिरत्र। तदेवेदं रजतमिति प्रतीतिस्तु तत्सादृश्यमात्रेण, न तु तत्त्वेन। न च तावतापि तत्रान्यथाख्यातिः॥

तत्रानिर्वचनीयस्य रजतस्य प्रत्यक्षत्वं तु लौकिकपारमार्थिकविधया प्रत्यक्षत्वमेव, नान्यत्तत्र प्रत्यक्षत्वम्, तत्प्रयोजकं वा। तत्र विषयावच्छिन्न-चैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यत्वं ज्ञानगतं प्रत्यक्षत्वम्, अनावृतचिन्मात्रत्वम्, प्रमात्रभिन्नत्वमित्यादिकं तत्र तत्र व्यक्तम्। नेन्द्रियजन्यज्ञानमात्रं प्रत्यक्षम्, येनानिर्वचनीयरजतज्ञानं न प्रत्यक्षं स्यात्॥

न चेन्द्रियसन्निकर्षजन्यज्ञानत्वं प्रत्यक्षत्वम्, इन्द्रियसन्निकर्षस्य वृत्तिजननमात्र उपयोगेन प्रत्यक्षत्वाप्रयोजकत्वात्। प्रत्यक्षभ्रमेऽपि सन्निकर्षोऽपेक्ष्यत इति तु तस्याधिष्ठानज्ञान उपकारकत्वाभिप्रायेण। स चाधिष्ठानज्ञान-रूपकारणनिर्वाहकतया वा, स्वत एवेति वा प्रकारभेदस्त्वकिञ्चित्करः॥

न हीदं रजतमित्यत्र मिथ्यारजतेन सत्यस्य शुक्तिशकलस्य संयोगः, किन्तूभयोरप्येकसाक्ष्यवच्छेदकत्वेनैकत्र चैतन्येऽध्यासप्रयुक्तं प्रमात्रभिन्नत्वम्, येनोभयोरपि प्रत्यक्षत्वम्, इति तयोः संयोगायोगप्रयुक्तानामाक्षेपाणामनवसरः॥

तत्र शुक्तित्वाज्ञानजन्यं रजतं तदाकारवृत्तिश्च शुक्तित्वज्ञाने सति निवर्तते। तत्र निवृत्तिस्त्रैकालिकनिषेधरूपत्वाद् ज्ञानोत्पत्तिक्षण एव भवति; ज्ञानाज्ञानयोर्विरोधेन सामानाधिकरण्यायोगात्। तथाच ज्ञानोत्पादकसामग्र्येव ज्ञानम्, अज्ञानतत्कार्यनिवृत्तिं च ज्ञानक्षण एव निर्वर्तयति; त्रैकालिकनिषेधरूपा-ज्ञानतत्कार्यनिवृत्तेस्तद्विरोधिसम्बन्धक्षणावच्छेदेन प्रतीतेरनुभवसिद्धत्वात्, ज्ञान-व्यापकत्वस्यैवाज्ञानतत्कार्यनिवृत्तौ स्वीकारात्। अतो न शुक्तितत्त्वज्ञानक्षणेऽपि

इदं रजतमिति प्रतीत्यापत्तिः। वस्तुतस्तु—इदं रजतमिति ज्ञानस्य ज्ञानान्तरेणैव नाशः। केवलं रजतं तदुपादानाविद्या चानुवर्तते। शुक्तितत्वज्ञानानन्तरं त्वज्ञानस्य, तन्निवृत्त्यन्तरं तत्कार्यस्य रजतस्य च निवृत्तिरित्येव भवतु॥

न चैतावता "इदं रजतमि"ति प्रत्यक्षानुपपत्तिः। तत्रेयं शुक्तिरिति ज्ञान नेदं ज्ञानम्, किन्तु ज्ञानान्तरमेव। 'इदं रजतमि'ति रजताकाराविद्यावृत्तिस्तु नष्टा। न चेयं शुक्तिरिति ज्ञानकाले रजतज्ञानसामग्री समस्ति। रजतप्रत्यक्षत्वापादनंच तद्विषयकमानसवृत्तिमादाय न भवति। अविद्यावृत्तिस्तु नष्टा न हि विद्यते, इति न सर्वदा सर्वप्रत्यक्षत्वापत्तिः। न च शुक्तित्वज्ञानदशायां तदज्ञानस्य रजताकारवृत्तिकारणत्वम्। तत्र यथा घटज्ञानदशायां न घटाज्ञानम्, एवमत्रापि। अज्ञानज्ञानं तु साक्ष्यधीनम्। न चाज्ञानोपहितसाक्षिसम्बन्ध इदंपदार्थस्य शुक्तित्वज्ञानदशायाम्, इति कथं च शुक्तित्वज्ञानदशायां रजतप्रत्यक्षापत्तिः॥

प्रातिभासिकत्वं हि शुक्तिरूप्यादेर्यावत्तदाकारवृत्त्येव। यद्वा रजताकारवृत्तिनाशे रजतमपि नष्टमेव; सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति न्यायात्। ततश्चाविद्यामात्रं वर्तते, तावन्मात्रं च शुक्तित्वज्ञानेन निवर्तत इति वाऽनुसन्धेयम्। अथवा रजताकाराविद्यावृत्तिनाशे तदुपहितं साक्षिस्वरूपमपि नष्टम्, इति न रजताकारवृत्त्यवच्छिन्नस्य रजतावच्छिन्नचैतन्यस्य चैक्यम्॥

ज्ञानमज्ञानस्य निवर्तकम्; यथाऽन्धकारस्य प्रदीपप्रभा। तत्र शुक्तित्वज्ञानेन तदज्ञाने नष्टे तत्प्रयुक्तप्रातिभासिकरजताद्यपि बाधितमेव, इति बाधितस्य तस्य कथं रजतत्वेनानुवृत्तिः? न हि रजतत्वेन रजतं न तूलाविद्याकार्यम्; अन्यथा कथं तत्र रजतमिति प्रतीतिः? अधिष्ठानज्ञानमज्ञाननिवर्तकमिति नियमः। स च निरुपाधिकभ्रमे, न सोपाधिकभ्रमे, इति न "न लोहितः

स्फटिकः" इति ज्ञानेन लौहित्यस्य बाधः, उपाधिनाशाधीननाशमात्र हि तत्र। अतो न तत्र व्यभिचारः ॥

तत्र शुक्तिरूप्यं तूलाविद्यायाः परिणामः। न च तस्याः व्यावहारिकत्वं ब्रह्मप्रमारिक्तबाध्यत्वरूपम्। न च शुक्तिरूप्यं तूलाविद्याविषमसत्ताकम्, येन तत्परिणामत्वानुपपत्तिः, व्यावहारिकस्य प्रपंचस्य वा पारमार्थिकब्रह्मपरिणामत्वापत्तिः। ब्रह्मणस्तु जगद्विवर्त एव। अविद्यापरिणामत्वेन तस्य जन्म, विवर्तत्वेन तु तस्य ब्रह्मण्यध्यास इति न विरोधः। विवर्तोपादानत्वं तु ब्रह्मणस्तदध्यासाधिष्ठानत्वमेव, नान्यत्। न च ब्रह्मविवर्तोपादानताया असिद्धिः। ततश्च भ्रमस्थले विकल्पस्याध्यासः, तदाकारप्रतीतेश्च। प्रतीतिस्तु तत्राविद्यावृत्तिः, न तदुपहितं साक्षिचैतन्यम्। ज्ञातृत्वं तु तस्यौपाधिकमिति पूर्वमेवोक्तम्। सर्वथा तु नानिर्वचनीयख्यातिर्विरुध्यते, इति तत्रार्थापत्तिः प्रमाणम्, तदुपादानमविद्यामपि भावरूपां प्रमापयतीत्यविद्यायामर्थापत्तिरप्यनुमानमिव प्रमाणम् ॥

आगमोऽप्यविद्यायां प्रमाणम्। तथाहि—अविद्या हि ब्रह्माश्रयविषयिणी सविन्मात्रब्रह्मावरणद्वारा तदवस्थाविशेषान्तःकरणोपहितं तत्प्रतिबिम्बं वा स्वीयेन दोषेण बध्नाति। तेन ब्रह्मस्वरूपमिव स्वस्वरूपमपि जीवा न जानन्तीति—"अनृतेन हि प्रत्यूढाः" इति श्रुतिबोधयति। आवरणशक्तिर्हि तमोवत् तत्र तत्र तमश्शब्देनोपात्ताया अविद्यायाः श्रुतौ श्रूयते। "अज्ञानेनावृतं ज्ञानमि" ति स्मृतावपि तथा ॥

"सत्यं चानृतं च सत्यमभवत्" नानृतं वदेत्—इत्यादौ मिथ्यार्थ एव प्रसिद्धमनृतपदम्। "ऋतं पिबन्तावि"त्यत्र कर्मफलपरत्वमृतशब्दस्य "सुकृतस्य लोके"—"पिबन्तौ" इति शब्दसमभिव्याहारमात्रात्, लक्षणया वाऽवश्यभोक्तव्यत्वोपचारेण वा। न चर्तशब्दस्य कुत्रचन कर्मफलपरत्वं दृष्टम्, इत्यनृतशब्दस्यापि कर्मविशेषपरत्वम्। न हि काम्यकर्मैवानृतम्, न तु नित्यकर्मे-

त्यत्र प्रमाणमस्ति। "ऋतं पिबन्तौ" इत्यत्र ऋतशब्दो नित्यकर्मफलपरमपि। न हि नित्यकर्मफलं चित्तशुद्ध्यादिकं बन्धः, इति तत्र तत्र ऋतशब्दस्य कर्मपरत्वं स्वीकर्तव्यम्, इत्यनृतशब्दस्तद्विरुद्धनित्यकर्मपर एव भवितुर्हति। तत्तु न बन्धाय। परमतेऽविद्यैवं कर्मेति ऋतशब्दोऽविद्यापरः, अनृतशब्दस्तु विद्यापरः स्यात्। तथाच प्रत्यूढपदार्थानन्वयस्तत्र दूषणम्। न च कुत्राप्यनृतशब्दः काम्ये कर्मण्येव दृश्यते। असत्यानृतपदयोः पर्यायत्वात् कथमनृतपदं नासत्यपरम्?

"अनृतादात्मानं जगुप्सेत्" इत्यत्र श्रुतप्रकाशिकापि प्रस्तुतपुण्यकर्मादिप्रतिद्वन्द्विपरत्वाद् ऋतशब्दः कर्मवाचीति निश्चीयत इति प्रकाशयन्ती पुण्यकर्मादिप्रतिद्वन्द्विपदसमभिव्याहाराभावे तत्प्रस्तावाभावे वाऽनृतशब्दस्यासत्यार्थपरत्वमभ्यनुजानाति। अतो नानृतशब्दस्य पापकर्मपरत्वम्, काम्यकर्मपरत्वं वा। सर्वथा तु ऋतशब्दस्य प्रकरणानुसारेणैव कर्मवाचित्वम्, तत्रापि पुण्यकर्मवाचित्वम्, पापकर्मवाचित्वं वा सकोचेन प्रकरणाद्वा वक्तव्यम्, इति परमतेऽपि कर्मवाचित्वेप्यविद्यायामियं श्रुतिः प्रमाणमेव। यथाच न कर्माविद्या। किन्त्वावरणविक्षेपशक्तिमती भावरूपा मायैव तु सा, तथोपपादितमधस्तात्। न हि कर्मरूपाविद्ययाऽहमज्ञ इति प्रतीतिरुपपद्यते, कर्मणोऽदृष्टत्वेनाप्रत्यक्षत्वात्, तस्यावरणशक्त्यभावाच्च। न हि कर्मणा ब्रह्मण आवरणम्, तस्य ब्रह्मागोचरत्वात्॥

आस्तामिदम्। प्रकरणमेवात्रालोच्यताम्—कथमत्रानृतशब्दः कर्मपरः प्रकरणात्? अनृतप्रतिद्वन्द्वि किं वाऽत्र वाक्ये निर्दिष्टमिति च। इदमत्राम्नायते "त इमे सत्या. अनृताभिधानाः" इति। तत्र च सत्यप्रतिद्वन्द्वि अनृतमसत्यमेव भवितुमर्हति, न तु काम्यं कर्म। कामा इति बहुवचनं तत्कार्याभिप्रायः। सत्याव तु व्यावहारिकसत्यत्वाभिप्रायेण। एकसत्तावादे सत्तादात्म्येनैव। सत्तात्रैविध्यवादेऽप्यधिष्ठानमेकमेव सत्यम् न चानेकानि

सत्यानि, इति नैकसत्यतावादस्य हानिः। मुख्यसत्यभिन्नत्वमात्रेणात्रानृतपदम-सत्याज्ञानपरम्। अपिधानमावरणं वा तमःशब्दवाच्यस्याज्ञानस्यैव, इत्यनृतापि-धाना इत्यपिधानपदसमभिव्याहारेणान्यत्रानृतपदस्याज्ञानपरत्वम्। "सत्याः कामाः" इत्यत्र सत्यतादात्म्यापन्ना इति विवक्ष्यते। बहुवचनं तु कामानपेक्ष्य। अधिष्ठानरूपेणारोप्याणामप्येकत्वम्, आरोप्यरूपेण तेषां नानात्वम्। अतः पारमार्थिकसत्यविवक्षायामपि नात्र बहुवचनविरोधः। अतोऽनृतशब्द-स्यासत्यपरत्वं पारमार्थिकसत्यप्रतिद्वन्द्वित्वेन निर्वहति ॥

अस्तु वाऽनृताभिधाना इत्यत्रानृतशब्दस्य दुष्कर्मपरत्वम्। "अनृतेन प्रत्यूढाः" इत्यत्र तु न तत्परत्वम्; दुष्कर्मण आवरणशक्त्यभावात्, सुषुप्तौ तदभावाच्च। क्षणिकत्वात्कर्मणां नाशेऽप्यक्षीणकर्मत्वमुभाभ्यामपि, सत्यम्, स्वीकर्तव्यम्। तच्च कारणात्मनाऽवस्थानेनैव। तच्च कारणमज्ञानमेव, इति कथ-मुक्तश्रुतिरविद्यायां न प्रमाणम्?

उत्तरत्रास्मिन्नेव प्रकरण आत्मनोऽपहतपाप्मत्वाम्नानादपि नात्र काम्य-कर्मणा, पापेन वा पिधानमुपपद्यते। न च ब्रह्मज्ञानस्य वा, मोक्षस्य वा प्रति-बन्धकत्वमात्रेणावरणत्वं कर्मणः। तद्धि प्रकृतं देहात्म्यैक्याभिमानसाधारणम्, इति न कर्मण एव। न चात्र कर्मप्रकरणमपि। ब्रह्मवेदनप्रतिबन्धकं चात्राज्ञानं ज्ञाननिवर्त्यमेव वक्तव्यम्। तच्चाज्ञानमेव ॥

अनृतशब्दस्य "तम आसीत" "तमसा गूढमग्रे" "नीहारेण प्रावृत्ताः" इत्यादिश्रुत्येकवाक्यतयाऽप्यावरणशक्तिमदविद्यापरत्वमेव युक्तम्। न हि प्रलयेऽपि कर्म स्वरूपेण वर्तते। कारणात्मनाऽऽवारकत्वं चाज्ञानवादे एव पर्यवस्यति। सर्वथा तु—अनृताभिधाना इत्यादावपि कारणात्मनाऽऽवारकत्वमेव कर्मणो वक्तव्यम्; कार्याणां सर्वेषां सत्कार्यवादे न कार्यात्मतामात्रम्, किन्तु कारणा-त्मताऽपि। तथा च मृद्घट इत्यादौ मृदात्मना श्लक्ष्णतारूपादिमत्त्वमिवाविद्या-त्मना कर्मणामावरकत्वम्। इदं तु पुण्यकर्मणामपि समानम्। न हि पुण्यकर्म न

बन्धकम्, पापकर्मैव तु बन्धकम्। "सर्वे पाप्मानो निवर्तन्ते" इति हि पुण्यमपि पापकर्मतया विवक्षति। अत एव सूत्रम्—"इतरस्याप्येवमसंश्लेष. पाते तु" इति। तथाच श्रुति.– -" नैनं सेतुमहोरात्रे तरत:" इति। न हि काम्यकर्मैव मोक्ष-प्रतिबन्धकम्, किन्तु नित्यकर्मापि। यावत्तदधिकारं न बन्धो निवर्तते। विष्णुपुराणमपि षष्ठांशे—

" अज्ञानिनां प्रवर्तन्ते कर्मलेपास्ततो द्विज।
नरकं कर्मणां लेपात्फलमाहुर्मनीषिण:॥ "

इति कर्मलेपस्याज्ञानकार्यत्वं प्रतिपादयदज्ञानं न कर्म, किन्तु तत्फलमेव कर्म, तत्फल तु नरकादीति बोधयत् कर्मणोऽविद्यात्वं परम्परयैव श्रावयति॥

" अन्ध तम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम्।
यथा सूर्यस्तथा ज्ञानं यद्विप्रेन्द्र विवेकजम्॥ "

इति तमस इवावरणमप्रकाशनमेवाज्ञानकार्यम्, तन्निवृत्तिश्च प्रमाणजन्यज्ञाने-नेति तत्र श्राव्यते। तथा द्वितीयांशेऽपि—

" अविद्यासचितं कर्म तच्चाशेषेषु जन्तुषु॥ "

इत्यविद्याकार्यत्वं कर्मणां प्रतिपाद्यते। ततश्च—

" विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा।
अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते॥ "

इति षष्ठांशगतवचने " अविद्याकर्मसज्ञाऽन्ये " त्यत्र साक्षात्परम्परासाधारण्ये-नाविद्यास्वरूपनिरूपणपरे 'अविद्याकर्मसंज्ञे'ति द्वन्द्वसमास एव, इति न कर्मण एवाविद्यात्वम्—एकत्वं मुख्यमविद्यात्वमेकस्यैवेति मत्वा। समस्तपद-त्वेऽपि तु तत्र हेतुमतोरैक्याभिप्रायेणैवोपपत्तिर्वर्णनीया। व्याख्यातं चैवमेवात्र श्रीधरस्वामिना॥

यत्तु यागादिकर्माख्यमविद्याऽपरपर्यायं शक्त्यन्तरमिति विष्णुचित्तीय-व्याख्यानम्, तस्यापि कार्यकारणभावाभ्यामुभाभ्यामप्यावरणशक्तावेव तात्पर्यम्, अन्यथा प्रलयादौ तदवस्थानाभावेन स्थितिकालेऽपि तस्य नष्टत्वेन कारणात्मना सत्त्वस्य यावत्फलोदयं स्वीकर्तव्यत्वेन च विरोध आपद्येत। अपि च "अविद्याकर्मसंज्ञे"ति कर्मशब्देन कर्मसामान्यमेव प्रतिपाद्यते, न तु काम्य-कर्म, दुष्कर्म वा, इति काम्यकर्मण एवात्र विवक्षायां प्रमाणाभावः। सर्वथा त्वावरणविक्षेपशक्तिके भावरूपाज्ञान एव विष्णुपुराणस्य तात्पर्यम् ॥

तत्र भावरूपत्वं कर्मणोऽविद्यात्ववादेऽपि समानम्। एवमावरणस्वभावोऽपि। तस्य द्रव्यरूपत्वेन परिणामित्वे न विप्रतिपत्तिः। यतः प्रकृतेः परिणामित्वं तत्र स्वीक्रियते। अद्वैतिनस्तु—अनादिप्रकृतेरेवावरणशक्तिमपि स्वीकृत्य यावन्मोक्षमेकामविद्यां स्वीकुर्वन्ति। तत्र कर्माविद्यात्वपक्षे तस्य बहुत्वात्, नश्वरत्वात्, पुरुषभेदेन भेदात्, तस्यैकविष्णुशक्तित्वमेकत्वं च—"अविद्या-कर्मसंज्ञान्ये"ति प्रतिपादितं नोपपद्यते ॥

तत्र यदि—यदा तु मुक्तः किंचित्कामयित्वा पश्चान्न तद्वाञ्छति, तदा तद्विनाशस्यावश्यकत्वात्, न मुक्तिकालीनाविनाशित्वं संभवति, तदेदं विवेचनीयम्—'कथं मुक्तानां कामा अपि सत्या' इति 'सत्याः कामास्समाहिताः' इत्यत्र सत्यत्वमौपचारिकमिति स्वीकर्तव्यम्। तच्चाद्वैतमते पूर्वोक्त-रीत्या सदात्मतया, सत्तादात्म्येन च निर्वहत्येव। सर्वथा तु सत्यपदसामानाधिकरण्यायोग उभयत्र समानः। सति चैवमवश्यंभावित्वमात्राभिप्रायतयो-भयत्र सत्यपदप्रयोगेऽपि सत्यपदप्रतिद्वन्द्वित्वमात्रेणानृतपदमसत्यपरमित्येवोरी-कर्तव्यम्, इति सुषुप्तिकालेऽनृतप्रत्यूहनस्याप्युपपत्तिर्भवति। तथाच सत्यपदं परित्यज्य ऋतपदप्रयोगे हेतुरपि सूचितप्रायः। पूर्वत्रैवात्रावश्यंभावित्ववैपरीत्या-र्थबोधनमात्रं न विवक्ष्यतामित्यभिप्रेत्यैव तु तदर्थकर्मपदप्रयोगः। अन्यथा काम्यकर्मफलानामप्यवश्यंभाव्यत्वाद्, विनाशित्वाच्च कथमनृतपदेन तद्विपरीतार्थ-

स्यात्र ग्रहणम् । अन्ततो गत्वाऽनृतपदं यदि विनाशित्वमेव बोधयति, तावताऽप्यज्ञानस्य विनाशस्तस्य बाध एवेति तत्त्वज्ञाननिवर्त्यत्वलक्षितस्याज्ञानस्य विवक्षा न व्याहन्यते ॥

एतेन—भगवत्प्रीणनत्वेनाभङ्गुरकर्म ऋतपदार्थः, तद्विलक्षणं भङ्गुरं कर्मानृतपदार्थ इति—परास्तम् । कर्म, अभङ्गुरमिति च व्याहतम्, अवश्यंभाविफलकत्वमभङ्गुरत्वमप्युभयत्र समानम् । अतः पूर्वोद्धृतविष्णुपुराणवचनैकवाक्यतादिनाऽनृतपदं ज्ञाननिवर्त्याज्ञानपरमेव ॥

"नासदासीन्नो सदासीत् तम आसीदि"ति श्रुतिरावरणशक्तिमत्यामविद्याया प्रमाणम् । अत्र यत् तमस्सृष्टेः पूर्वमासीत्, तद् न सत् त्रिकालाबाध्यम्, नाप्यसत् तुच्छम्, इति तमसः सदसद्विलक्षणत्वमाम्नायते । तावता च तमसोऽनिर्वचनीयत्वे सिद्धे तदुपादेयानामप्यनिर्वचनीयत्वमर्थसिद्धम् । 'तम आसीत्' इति सत्तानुवादस्त्वर्थाद्व्यावहारिकत्वे पर्यवस्यति । इदं वाक्यं चिदचिद्विशिष्टपरमिति तु न युक्तम्; सृष्टेः प्रागपि चिदचिद्विशिष्टब्रह्मसत्त्वात् "नासदासीन्नो सदासीदि"ति निषेधानुपपत्तेः । स्थूलचिदचिद्विशिष्टं तदा नासीदिति विवक्षायां तु "तम आसीदि"ति सूक्ष्माचिद्विशिष्टमात्रमासीदिति न युक्तम् । उपलक्षणत्वे तु न प्रमाणम् । विष्णुपुराणं तु नोक्तार्थे प्रमाणमित्युपपादयिष्यते । तद्धि—

"नाहो न रात्रिर्न नभो न भूमिः नाशीकरो ज्योतिरभूच्च नान्यत् ।
श्रोत्रादिबुद्ध्यनुपलभ्यमेकं प्राधानिकं ब्रह्म पुमस्तदासीत् ॥"

इति चिदचिद्ब्रह्मणामनभिव्यक्तस्वरूपेण स्वतन्त्रमवस्थानमेव बोधयति, न तु चिदचिद्विशिष्टमेकं ब्रह्म । अत एव —

"विष्णोस्सकाशात्परतोदिते ते रूपं प्रधानं पुरुषश्च विप्र ।
तस्यैव तेऽन्येन धृते वियुक्ते रूपान्तरं तद्द्विज कायसंज्ञम् ॥"

इति परमात्मनः पृथक् तेषां प्रळये संयुक्तरूपेण, सृष्टौ विभक्तरूपेण च प्रतिपाद्योत्तरत्र—

प्रधानपुरुषौ चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्यये ॥

इति सर्गकाल एव प्रकृतिपुरुषयोः प्रवेशो निर्विशेषस्य ब्रह्मणः प्रतिपाद्यते ।

तत्र प्रळयकाले शरीरशरीरिभावेनैव चिदचिदीश्वराणां सत्त्वे सर्गकाले तत्प्रवेशवर्णनमीश्वरेच्छया प्रतिपाद्यमानं नोपपद्येत। जीवात्मनः कौस्तुभमणित्वेन, प्रधानस्य प्रकृतेः श्रीवत्सरूपेण च रूपणम्, अन्येषां च सर्वेषां कार्याणामाभरणरूपेण रूपणमप्यपृथक्सिद्धशरीरशरीरिभावं प्रधानादीनां वारयति । एवम्—

विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा ।
अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥

इति चिदचितोर्ब्रह्मशक्तित्वेनाम्नानं शरीरशरीरिभावेन चिदचिद्विशिष्टतां ब्रह्मणो निषेधति। न च शरीरं शक्तिरित्यनर्थान्तरम्, भास्करमतप्रवेशापत्तेः। सति चैवं तत्र तत्र "समष्टिव्यष्टिमूर्तये" "स्थूलसूक्ष्मसूर्तये" इति मूर्तिपदप्रयोगमात्रेण शरीरशरीरिभावो न युक्तः कल्पयितुम् ॥

कुमारिलपादानां सामानाधिकरण्यस्य कुत्रचन कुत्रचन शरीरशरीरिभावेन समर्थनं तु तन्मत उपनिषदामर्थवादत्वात्, तासां स्वार्थपरत्वेऽप्युपास्यसत्यतां विना कयाचन कल्पनयोपासनासमर्थनाभिप्रायेण, न तु तत्सत्यताभिप्रायेण ॥

न च तैरपि चिदचिच्छरीरकं ब्रह्मतत्त्वमूरीकृतम्, तदेव प्रामाणिकमिति वा। भोगाधिष्ठानत्वमात्रेण शरीरत्वं गौणमेव, न मुख्यम्, येन परमतमेव भाट्टसोमेश्वरादीनामपि मतमिति कल्पनाया अवसरः स्यात् ॥

व्यवहारे भाट्टनयः श्रुत्यविरोध एव । न च परमतेऽपि स एकान्तेन। न च परमतं कुमारिलमतं चैकम् । अत एवाऽऽत्मविभुत्वादिकमुपन्यस्य—

"दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन ॥"

इति ते वर्णयन्ति। न चायं वेदान्तार्थः परमते, न वाऽऽत्मपरिणामत्वमनित्यत्वं चात्मधर्मस्य ज्ञानस्य तदभिमतं परे स्वीकुर्वन्ति ॥

आस्तामिदम्—"नासदासीदि"त्यस्य सदसद्विलक्षणाज्ञानप्रतिपादनपरत्वं नानुपपन्नम्। चिदचिद्विशिष्टपरत्वे तु—"तम आसीदि"त्यचिन्मात्रस्य विशिष्य बोधनमनुपपन्नम्। तमसा गूढमिति तु परमते बाधितम्। न हि भगवत. स्वशरीरेणावरणं नाम। जीवस्यापि सूक्ष्मशरीरम्, तदन्तर्गतान्तःकरणं वाऽभिव्यंजकम्। तमः शरीरमिति, तेन गूढमिति च व्याहतम्। आवरणशक्तिमत्तमःपदेन प्रकृतेः सूक्ष्माचित आदानं स्वसिद्धान्तस्यैव घातकम्। तुच्छेनेति पदं परमतेऽपि नासत्परम्। तदेवानिर्वचनीयताभिप्रायेणेति वर्णने का बाधा? अद्वैतानुगुणयोजनप्रकारस्तु भाष्य एव व्यक्तः, इति न व्याहतार्थताऽद्वैतमते ॥

सायणाचार्याणां व्याख्याप्रकारोऽप्येवं न विरुद्ध्यते। तत्रापि तम.पदेनोपादानाद् आवरणशक्तिः स्वीक्रियते। तुच्छेतिपदेनाप्यनिर्वचनीयत्वमेव, इति कथं तेनापि नानिर्वचनीयावरणशक्तिमदज्ञानासिद्धिः?

"मायां तु प्रकृतिं विद्याद् मायिनं तु महेश्वरम्।
तरत्यविद्यां विततां हृदि तस्मिन्निवेशिते ॥"

इति श्रुत्या मायाविद्ययोरभेदोऽवगम्यते। इदं चावरणविक्षेपशक्तिमत्त्वेन, "तरत्यविद्यामि"ति तस्या ज्ञानमात्रनाश्यत्वं चोच्यते, इति भावरूपावरणशक्तिमदविद्यायां ज्ञाननिवर्त्यायामियं श्रुतिरपि प्रमाणम् ॥

तत्र मायाशब्दो ज्ञानपर इति नैघण्टुकं वचनं ज्ञानस्य मायापरिणामत्वेन मायाविशेषान्तःकरणधर्मत्वाभिप्रायेण वा प्रवृत्तं जन्यज्ञानस्यात्मधर्मत्वपक्षं निरसितुम् ॥

मायाशब्दस्याश्चर्यपरत्वं तस्या एवाघटितघटनापटीयस्त्वेन, विचित्रशक्तियोगेन वा। न हि ब्रह्मणो विचित्रशक्तियोगः किंचित्करः। स हि "धाता

यथापूर्वमकल्पयत् " इति श्रुत्या न घटं पटयति। माया त्वनिर्वाच्या स्वव्यतिरिक्तानि क्षेत्राणि दर्शयित्वा जीवेशावाभासीकरोति। यदीश्वरो विचित्रशक्तियोगेन कार्यकरणदक्षः, तर्हि किमर्थं चिदचिच्छरीरापेक्षा ॥

एतेन—मायाशब्दो विचित्रार्थसर्गकरवाची, न मिथ्यावाचीति—परास्तम्; किमनेन विवक्षितम्—यदि मायाया एव विचित्रसृष्टिकरणे सामर्थ्यमिति, तर्हि स्वागतम्। को वाऽत्र विप्रतिपद्यते? अथ यदि न मिथ्या सा, न वा मिथ्यार्थकारिणीति, को वा विचित्रार्थक्रियासमर्थाया मायाया मिथ्यात्वे, मिथ्यार्थक्रियाकारित्वे वा विरोधः? किं सत्य एव विचित्रार्थक्रियाकारी, सत्यश्चेति राजाज्ञा? यद्योम्, तर्हि किं वा विचित्रार्थकारित्वम्? अघटितघटनापटीयस्त्वं हि विचित्रशक्तियोगो नाम। सा च स्वयं मिथ्या, मिथ्याकार्यकरी च। का वाऽत्र बाधा? मिथ्यात्वे सति विचित्रार्थक्रियाकारित्वमिति मायालक्षणमप्यत एवोपपद्यते। स्वयं वैचित्र्यम्, विचित्रार्थकारित्वं चेत्युभयनिरूपणं हि मिथ्यात्वे सतीति विशेषण एवोपपद्यते, इति न मायापदार्थे मिथ्यात्वे सतीति विशेषणवैयर्थ्यम् ॥

का वा राजाज्ञा—विचित्रचित्तविकारकारकत्वमेव न तु विचित्रसर्गहेतुत्वं मिथ्याभूतानामित्यत्र। इदमेव वैचित्र्यं मिथ्याभूताया मायायाः। यदस्या विचित्रसर्गहेतुत्वमपि। तत्कार्याणां मिथ्याभूतानां सर्पादीनां विचित्रसर्गहेतुत्वं दृष्टमिति चेत्, तर्हि किमायातम्? माया स्वयमेव विचित्रं सर्गं करोति, न स्वकार्यमपि न कारयतीति। किमीश्वरो विचित्रशक्तियोगेन स्वसृष्टानां पदार्थानामपि विचित्रसर्गशक्तिमादधाति? विचित्रशक्तियोगेनेश्वरसृष्टः सर्पः स्वप्ने कथं तर्हि विषं न वमति?

मायाया मिथ्याभूताया अयमेव विचित्रशक्तियोगः—यत् कुत्र चनैकत्रैवैकं वस्तु सम्बन्धयति, कंचन बहुषु देशेषु कालेषु च क्रमेण सम्बन्धयति। शुक्तिरूप्यादिकमन्यत्र न सम्बन्धयति। घटादींस्तु देशभेदे कालभेदे च

सम्बन्धयति । एवं चेत् शुक्तिरूप्यमपि कथं घटादिकमिव नोपलभ्यते ? यतो। नास्ति, अस्ति चेदुपयुज्यतां देवानांप्रियेण । को वा प्रतिबध्नाति ?

अपरमपि सामर्थ्यं मायाया इदमेव—यदत्र सच्चिदानन्दरूपं ब्रह्म, तदाश्रित्य, आवृत्य चान्यथा भ्रामयति, अन्ततः तत्साक्षात्कारेण स्वयं नश्यत्यपि । न हि ब्रह्ममाययोर्वैषम्यमद्वैतिनोऽप्यपह्नुवन्ति, स्वयं वा मायाविन इव ब्रह्मणः सर्वार्थकारित्वम् । ब्रह्म नियामकमपि प्रकृतिमपेक्ष्यैव कर्तृ , न तामनपेक्ष्य । माया तु ब्रह्माधिष्ठानतयाऽपेक्षते विचित्रसर्गाय ॥

अत एव वैषम्यनैर्घृण्ये मायाया., न तु ब्रह्मणः । सा हि ब्रह्माणमपि भ्रामयति। नारायणमप्यवतारयति। तौ, अन्यान् वा देवान् बन्धयति। तदपि तदीयविचित्रशक्तियोगेन ॥

मायाशब्दो मिथ्यार्थे लोके प्रसिद्धो मायावीत्यादौ । मायाविनिर्मिता पदार्था अपि बहव आश्चर्यभूताः,मिथ्या च । मिथ्यात्वं नाम व्यवहारदशायामेव। अन्यदा तु सति तत्त्वज्ञाने स्वयं स्वरूपतोऽसती, तत्प्रयुक्ताश्च मिथ्याभूताः । तन्मिथ्यात्वं त्विन्द्रजालनिर्मितेष्विव बाधायां प्रत्यक्षम् । तत्तु सत्यमाश्चर्यम् , मायायाः शक्तिवैचित्र्याधीनत्वात् ॥

एतेन—स्वप्नमिथ्यात्वमपि—व्याख्यातम् । स्वाप्निकरथादयोऽपीश्वरेण स्वीयशक्तिवैचित्र्येण प्रदर्श्यन्ते। मूलाविद्यावस्थाविशेषास्तूलाविद्या अपि परम्परयेश्वरशक्तय एव । परं त्वैन्द्रजालिकसृष्टिवद् नार्थक्रियाकारिणः । अन्ततः स्वरूपतोऽसन्त एव। तथा प्रदर्शनं चेश्वरस्य यदि मायाद्वारा, तर्हि तु स्वागतम्। तेषां सर्ग ईश्वरेण, तथापि वितथा इति चित्रतरमिदम् ॥

एवं वदतामद्वैतिनां विचित्रकार्यकारिषु व्यवहारदशायामबाधितेषु मायाशब्दप्रयोगो नाभिमतो विचित्रशक्तियोगमात्रेण ॥

तेन मायासहस्रं तच्छम्बरस्याशु गामिनः ।
बालस्य रक्षता देहमेकैकश्येन खण्डितम् ॥

इत्यादौ सत्येऽप्यर्थे मायाशब्दप्रयोग उपचाराद् न विरुध्यते। तदेवं सिद्धम्—यदविद्यायां श्रुतिरपि प्रमाणमिति ॥

एतेन—मायायाम्, अविद्यायां वा श्रुतार्थापत्तिरपि प्रमाणमिति—व्याख्यातम्। तत्र "तरत्यविद्यामि"ति श्रुतिज्ञातज्ञाननिवर्त्यत्वानुपपत्तिस्तत्र प्रमाणमिति पूर्वमेवोपापादि। न केवलमिदम्—'तत्त्वमसी'ति जीवब्रह्मणोरैक्योपदेशानुपपत्तिरपि तत्र प्रमाणम् ॥

तथाहि—'तत्त्वमसी'ति तत्त्वंपदयोः सामानाधिकरण्यमाम्नायते। तच्च भेदस्य मिथ्यात्व एवोपपद्यते। तच्च तस्याविद्याहेतुत्वं विना नोपपद्यते, इति तदनुपपत्त्याऽज्ञान कल्प्यते। उपदेशत्वाद्वेदान्तवाक्यस्याज्ञातार्थबोधकत्वं नियतम्, अबाधितार्थबोधकत्वं च ॥

तत्र विशिष्टयोर्जीवेश्वरयोर्भेदः प्रत्यक्षसिद्धोऽपि बाधितः। न "ह्यादित्यो यूपः" इति यूपाभेद आदित्ये श्रूयमाणोऽपि प्रत्यक्षविरुद्धो न बाध्यते। अन्यथानयनं वा नोरीक्रियते। अतः प्रत्यक्षविरुद्धार्थेऽपि न श्रुतेस्तात्पर्यम्। एवमेव तदुपजीव्यानुमानविरोधेऽपि। तत्र श्रुत्यवष्टब्धे प्रत्यक्षानुमाने तु तदुपजीव्य श्रुतीनां श्रुत्यन्तरस्य चाविरोधे, विरोधेऽपि श्रुत्यन्तरस्य प्राबल्ये च श्रुत्यन्तरं दुर्बलम्। तत्र बाध्यबाधकयोर्बहुत्वाल्पत्वे न बाध्यबाधकभावप्रयोजके। "विप्रतिषेधे भूयसां स्यात् स्वधर्मत्व"मिति न्यायः समबलत्वे श्रुतिद्वयस्य प्रवर्तते। न चात्र समबलत्वमद्वैतश्रुतेः, भेदश्रुतेश्च ॥

सति चैवमनन्तभेदश्रुत्यनुरोधाद् न कतिपयश्रुतीनामन्यथानयनमवकाशते। अयमेव न्यायः प्रत्यक्षानुमानबहुश्रुतिवाक्यबाधापेक्षया कतिपयश्रुत्यन्यथानयनकथायामपि ॥

अस्तु वा प्रत्यक्षाविरोधार्थं 'तत्त्वमसि' वाक्ये यथाश्रुतयोजनं न कर्तव्यमित्यन्यथानयनम्। तथाऽपि कथं वाऽन्यथानयनं कर्तव्यमित्यत्र का वा

विनिगमना ? तत्राद्वैते लोकसिद्धप्रक्रियामाश्रित्य श्रूयमाणानामेव पदानां लक्षणामात्रमाश्रित्य तावतैव तत्र विरोधपरिहारः ॥

'तत्त्वमसि' वाक्ये यथाश्रुतया योजनयाऽभीप्सितार्थसिद्धिर्न भवतीत्यन्यथानयनमेवाद्वैतिभिः क्रियते। तदपि प्रतीयमानविरोधपरिहारार्थमेव। तदपि लौकिकलक्षणाद्याश्रयणेनैव, न तु व्युत्पत्तिविशेषादिकल्पनया। लक्षणापि हि लौकिकी। परमते तु शरीरवाचकानां पदानां शरीरिपर्यन्तत्वम्, शरीरिवाचकानां तु निष्कर्षकविधया स्वरूपमात्रपरत्वमिति व्युत्पत्तिबलेन 'असि' पदानन्वयदोषमविगणय्य जीवशरीरी परमात्मेति वाक्यार्थो वर्ण्यते, सामानाधिकरण्यनिर्वाहश्च क्रियते---सद्विद्यायामपि चिदचिच्छरीरकत्वमेवान्तर्यामिब्राह्मणसिद्धं वक्तव्यमिति कृत्वा। अद्वैतिभिस्तु--"सदेव सोम्येदमग्र आसी"दित्युपक्रमे तत्पदार्थमध्यारोपापवादनयेन कारणतया प्रस्तुत्याद्वितीयतया चोपसंहृत्य 'तत्त्वमसी'ति प्रवृत्तत्वात्, विशिष्टजीवेश्वरयोरैक्यस्यासम्भवात्, उपक्रमश्रुताद्वितीयत्वमभिप्रेत्यैवाभेदस्य तात्पर्यविषयत्वावश्यकत्वाच्च वाक्यगतिपर्यालोचनया जीवत्वेश्वरत्वयोरविवक्षया लक्षणया, विनाऽपि लक्षणामभिहितान्वयवादप्रक्रियया वा चिन्मात्रविवक्षयाऽभेदो बोध्यते—तस्य प्रमाणान्तरेणानधिगमाद् उपदेशत्वमबाधं भवतीति मत्वा। न चात्र तत्त्वंपदार्थयोः शरीरशरीरिभावेनोपक्रम.। "सदेवे"त्युपक्रमे सत्पदेन कथञ्चन चिदचिच्छरीरकत्वेन प्रस्तावेऽपि तत्त्वमसीत्यत्र जीवशरीरकत्वमात्रस्य विवक्षणाद् उपक्रमवैरूप्यं प्रतीयते, "सदेवे"ति वाक्यविवक्षितादर्थाद् अर्थान्तरमपूर्वं वा न बोध्यते, उपक्रमे विशिष्टे विशेष्यतया प्रस्तुतस्यात्र केवलविशेष्यतया निष्कर्षकविधया निर्देशे जीवशरीरकः परमात्मेति वाक्यार्थे 'असि'पदानन्वयः प्राथमिकवाक्यार्थविवक्षावसरेऽपि शरीरशरीरिभावमात्रविवक्षायां कार्यकारणभावेन ब्रह्मणो विवक्षा, "मृत्तिकेत्येव सत्यमि"ति कारणमात्रसत्यत्वेन दृष्टान्तानन्वय इत्यादिबहुतरदूषणानि।

अद्वैतमते तु लक्षणामात्रेण सर्वसामञ्जस्यमिति जीवत्वेश्वरत्वयोस्तत्प्रयुक्तभेदस्याविवक्षया वाक्यार्थे निष्पन्ने तन्निबन्धनसाक्षात्कारेणाभेदज्ञानतत्प्रयुक्तसप्रतियोगिकभेदनिवृत्तिः, इति पर्यवसिते वाक्यार्थज्ञानेन भेदतत्प्रयोजकाज्ञानयोर्बाधेनैवोपपत्तिः, इति 'तत्त्वमसि' इत्युपदेशानुपपत्तिरज्ञाने प्रमाणम् ॥

तत्र तत्त्वंपदयोर्न शुद्धे लक्षणा, किन्तु विशिष्टशक्त्यैव विशेष्यमात्रान्वयतात्पर्यज्ञानसहकृतया विशेष्यमात्रोपस्थापकत्वमिति वा, अभिहितान्वयवादेन तत्त्वंपदाभ्यां विशिष्टोपस्थितावपि तात्पर्यवशाद् विशेष्यमात्रस्य शाब्दबोधे भानमिति वा यथा तथा वा भवतु । परमतेऽपि विशिष्टवाचकानां निष्कर्षकविधया विशेष्यमात्रोपस्थापनमपि लक्षणयैव, न तु शक्त्या । एवं विशेषणमात्रविवक्षायाम् । तथाचाद्वितीयत्वेन प्रस्तुतस्य तत्पदार्थस्य तद्रूपेणैवात्रार्थो वर्णनीयः, एवं तदभेदेनापि ; अत्र स्वरूपोपदेशात् । अत्रोपसंहारेऽपि तदभेदयोग्यस्वरूपमेव त्वंपदार्थो विवक्षणीयः। तच्च शक्त्या वा भवतु विना लक्षणाम्, लक्षणया वा भवतु । सविन्मात्रस्वरूपेणोभयाभेद एवात्र वाक्यार्थ इति तु तत्वम् ॥

एतदुपष्टम्भकतया वायुपुराणदेवीभागवतादिवचनोपष्टम्भस्तु विवक्षितार्थस्यात्र सिसाधयिषितस्योपबृंहणार्थमेव । यदि तत्र वैयासिकेऽपि विद्वेषः, तर्हि मा प्रमाणं मन्यताम्, नात्र निर्भरः ॥

विष्णुपुराणस्यैकस्य वा प्रामाण्यं यदि स्वीकृतम्, तावतैव पर्याप्तम् । अद्वैतिनस्तु वैयासिकं वचनं नाप्रमाणयितुं साहसमवलम्बितुमुत्सहन्ते ॥

तत्र त्वंपदलक्ष्यार्थज्ञानमात्रं जीवेश्वरभेदतत्प्रयोजकाज्ञानयोर्न निवर्तकम्, न वा तत्पदलक्ष्यार्थज्ञानमात्रम्, किन्तूभयोरप्यैक्यज्ञानमेव ; तस्यैव तद्विरोधित्वेन तन्निवर्तकत्वात् ॥

सा च तत्त्वमसीति वाक्यजन्याखण्डाकारवृत्तिरेव प्रमाणजन्या। सा हि निर्विशेषधर्मिमात्रविषयाऽपि तदुभयाभेदप्रतीतिरूपत्वाद् निवर्तिकैव । यत्कि-

श्चिद्विशेषविशिष्टधर्मिज्ञानस्यैवाज्ञाननिवर्तकत्वं त्वज्ञानस्य विशिष्टविषयकतायाम्, यथा शुक्तिज्ञाने, न तु निर्विशेषविषयतदाश्रिताज्ञाननिवर्तकतायाम् ॥

अज्ञानोपहितचैतन्यमधिष्ठानं विवर्तकारणम्, वृत्त्युपहितं चैतन्यमनावृतं संविन्मात्रं त्वज्ञानसंबन्धप्रयुक्तसर्वभेदनिवृत्तिरूपं स्वव्यतिरिक्तसर्वनिषेधरूपं वा न सप्रपञ्चतामर्हति। उपहितान्याविषयकत्वे सत्युपहितविषयकं ज्ञानमेवाज्ञाननिवर्तकम्; समानविषयत्वात्। न चोक्तविधनिवर्तकज्ञाने वृत्त्यतिरिक्तस्य निवर्तककोटौ प्रवेशः। वृत्तिरपि सत्तामात्रेणोपयुज्यते, न तु विषयतया। "तमेव विदित्वाऽतिमृत्युमेति" इति हीतरविषयताऽनिरूपितात्मविषयताकत्वेनैवात्मज्ञानस्याज्ञाननिवर्तकतामाम्नाति। अतो न विशेषान्तरविषयताऽज्ञाननिवर्तनार्थं निर्विशेषज्ञानेऽपेक्ष्यते। प्रमाणजन्यं वृत्तिमात्रमज्ञाननिवर्तकम्, न स्वरूपज्ञानम्। इदमेवाभिप्रेत्योक्तम्—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।"

इति। अतो नाज्ञाननिवर्तकानुपपत्तिरपि ॥

एतेन—अज्ञाननिवृत्तिरपि—व्याख्याता। तत्रापि ज्ञाने सति सुखादिमिथ्यात्वबुद्धौ निवृत्तायां तद्भावनादार्ढ्येन क्वचिदपि प्रवृत्त्यभावात् कर्माभावाद् मुक्तिः सिध्यतीति न्यायदर्शनमपि ॥

इयान् विशेषः—'यद् न्यायदर्शने क्रमिकेयं मुक्तिर्मुख्या, अद्वैतमते तु जीवन्मुक्तिपर्यन्तमयं क्रमः। अनन्तरं तु देहपाते युगपदेव सर्वविनाशः। जीवन्मुक्तिपर्यन्तं तु क्रमोऽपि न विरुध्यते। यथा च मिथ्यात्वनिश्चयेऽप्याधिकारिकाणामिव जीवन्मुक्तानामपि प्रवृत्त्युपपत्तिः, तथा सनिदर्शनमुपपादितमधस्तात्। सर्वथा तु तत्त्वज्ञानादज्ञाननिवृत्तिरात्यन्तिकी प्रारब्धभोगान्ते तावत्पर्यन्तमभ्यस्यमानपटुतरात्मसाक्षात्काराद् भवित्रैव ॥

सा चाविद्यानिवृत्तिः—'निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः' इति वार्तिकमते स्वरूपतो जन्या, परं तु निवृत्तित्वोपलक्षितरूपेण नित्या।

इष्टसिद्धिमते तु सा यद्यपि जन्या, तथापि न सती, नासती, नापि वा सदसती, न वा सदसद्विलक्षणा, न वा ज्ञाननिवर्त्त्या, किन्तु पञ्चमप्रकारेति। सापि मिथ्यैव, दृश्यत्वेन मिथ्यात्वमिथ्यात्ववद्—इति केचन। अकार्येति तु नोरीक्रियते। तन्मिथ्यात्वं तु सद्विविक्तत्वम्, त्रैकालिकप्रतिषेधप्रतियोगित्वं वा। अस्मिन् पक्षे भावाद्वैतमेव, नाभावाद्वैतमिति सर्वं सुस्थम्। चतुष्कोटिविनिर्मुक्ताऽपि सा जन्यत्वात् सप्रतियोगिकत्वाच्च न शून्यम्। अविद्यायामनुपपत्तिस्तु भूषणम्॥

तत्राविद्यायामनुपपत्तिर्भूषणमिति वदतामयमाशयः—तस्याः सत्त्वेन असत्त्वेन वा निर्वचनानुपपत्तिर्भूषणम्; अनिर्वचनीयत्वोपपादकत्वात्। आश्रयविषयाद्यनुपपत्तयस्तु सुपरिहराः, नात्रानुपपत्तिसंभावनाऽपि। अथवाऽविद्यायां मिथ्यार्थजनकत्वायोगाद्यनुपपत्तयो विचित्रशक्तियोगोपपादकतया भूषणम्, न तु प्रामाणिकानामप्यप्रामाणिकत्वोरीकारेण तद्भूषणतायां तात्पर्यम्॥

सप्तविधानुपपत्तयस्तु तदवान्तरभेदेन साकं नाविद्यायामवतरन्ति। सर्वथा त्वविद्यायामनुपपत्तिलेशस्याप्यसंभवात्, तस्या भावरूपाया ब्रह्माश्रयविषयकायाः, तज्ज्ञाननिवर्त्यायाश्च ब्रह्मभिन्नतया प्रमाणसिद्धत्वाद् न सा ब्रह्मस्वरूपा, सत्या वा, इति तन्निवर्तकतत्त्वसाक्षात्कारार्थं साधनचतुष्टयसम्पन्नैर्विचारः कर्तव्यः, तदर्थं प्रयासश्च सर्वेषामुपपन्न एव। यतोऽद्वैतमेव ब्रह्ममीमांसायाः, उपनिषदां च तत्त्वम्॥

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्॥"

इति स्मृत्या वेदोपबृंहकत्वेनाभिमतेषु प्रधानं विष्णुपुराणमप्यद्वैतपर्यवसायीति पूर्वं यथावसरं विवेचितम्॥

तत्र विष्णुपुराणस्य स्थूलदृष्ट्या विनाऽन्यथा, क्लिष्टां वा योजनां समालोचने तत्तात्पर्यविषयोऽद्वैतमेवेति जडभरतोपाख्यानादिना पूर्वं निरूपितम्। अन्यान्यपि कानिचन वचनान्यत्र सङ्गृह्यन्ते॥

तत्र सृष्टिकर्ता ब्रह्मैव:, नारायणपदस्य—"आपो नारा इति प्रोक्ता:" इति वचनसिद्धव्युत्पत्त्या नारायण इति पूर्वमुपपादितम्, परन्तु तदुपलक्षणं रुद्रस्यापि। तत्र प्रमाणं तु—

"तमोद्रेकी च कल्पान्ते रुद्ररूपी जनार्दनः।
भक्षयित्वा च भूतानि जगत्येकार्णवीकृते॥
नागपर्यङ्कशयने शेते च परमेश्वरः।
प्रबुद्धश्च पुन. सृष्टि करोति ब्रह्मरूपधृक्॥
सृष्टिस्थित्यन्तकारिणी ब्रह्मविष्णुशिवात्मिकाम्।
स सञ्ज्ञां याति भगवान् एक एव जनार्दन·॥"

इति वस्तुगत्या निर्विशेषस्य तुरीयस्य परमात्मनोंऽशा एव शिवविष्ण्वादय इति, तत्तत्कार्यभेदमात्रेण नारायणस्य तुरीयस्यैव संज्ञाभेदा इति चावगम्यते॥

सति चैवं शिवस्य विष्णुत उत्पत्त्युल्लेखः स्थित्यवस्थपरमात्मविभूतित्वाशयेनैव। इदमुपलक्षणम्—शिवविभूतित्वे ब्रह्मविष्ण्वो:, ब्रह्मविभूतित्वे शिवविष्ण्वोश्चेति। वस्तुगत्या तु शिवविष्ण्वाद्यभेद एव विष्णुपुराणस्य तात्पर्यम्। शिवविष्णुभावकृतो भेदस्त्वौपाधिक इत्यद्वैतामोदोक्तिरप्येतदाशयैव। अत एव—

"शङ्करो भगवान् शौरिः श्रीश्च गौरी द्विजोत्तम॥"

इति तुरीयनारायणविभूतित्वेन सर्वेषां निर्देशः। अनेनाप्यवगम्यते-- विष्णुपुराणं शिवविष्ण्वाद्यभेदं मुख्यं तत्राप्येकस्य प्राधान्यं च विवक्षतीत्यद्वैतसिद्धान्तस्यैवानुगुणं विष्णुपुराणम्—इति। स्थित्यवस्थामाश्रित्य—

"पुंनामा भगवान् हरिः स्त्रीनाम्नी लक्ष्मी:"

इति श्रवणं न शिवविष्णुभेदसाधकम्॥

"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥

परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ।
तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥
यदेतद् दृश्यते मूर्तमेतत् ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्रमन्ति मोहसंप्लवे ॥
यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।
तदैषोऽहमयं चाभ्यां वक्तुमेवमपीष्यते ॥
यदा समस्तदेहेषु पुमानेको व्यवस्थितः ।
तदा हि को भवानित्येतद्विफलं वचः ॥ ”

इत्यादिवाक्यानि प्रत्यगात्मपराणि वा भवन्तु, परमात्मपराणि वा, उभयथाऽद्वैत एतेषां वचनानां स्वारस्यम् ॥

विष्णुपुराणे हि शरीरशरीरिभावश्चिदचितोर्न कुत्रापि प्रतिपाद्यते । केवलं सामानाधिकरण्यं ‘ ज्योतीषि विष्णु ’ रित्यादौ श्रूयते । क्वचित्तु मूर्तामूर्ते इति मूर्तादिपदम् । तत्र शरीरशरीरिभावविवक्षायां मूर्तिपदं वितथम् । सामानाधिकरण्यं तु ‘ मृद् घटः ’ ‘ इदं रजतम् ’ इत्यादाविव कार्यकारणभावेऽप्युपपद्यते । अन्यत्तु सर्वमद्वैतमतेऽप्युपपद्यते । धर्मभूतज्ञानकथाऽपि विष्णुपुराणे नास्ति, न वा जीवाणुत्ववादः । अपरः कोऽपि विशिष्टाद्वैतासाधारणप्रक्रियाविशेषः प्रतितन्त्रसिद्धान्तो नात्र दृश्यते, इति विशिष्टाद्वैतसिद्धान्त एव विष्णुपुराणस्वारस्ये न किमपि प्रमाणम् । किं बहुना ? विष्णुरपि परमात्मरूपेण योऽत्र प्रतिपाद्यते, तत्सिद्धान्तविरुद्ध एवात्र दृश्यत इत्यनुपदमेवोपपादितम् ॥

शरीरलक्षणं नियम्यत्वमात्रमिति तु न युक्तम् ; तावताऽपि नियामकत्वरूपं पारिभाषिकमेव शरीरित्वम् , शरीरत्वं वोपपादितं भवति । न चैतादृशं

शरीरत्वं शरीरित्वं वा कस्यापि वैदिकस्यानभिमतम्। निर्विशेषब्रह्मवादेऽप्यन्तर्यामिब्राह्मणानुसारेण नियामकत्वं तस्योरीक्रियत एव, द्वैतमते, द्वैताद्वैतमते, किं बहुना? ईश्वराङ्गीकर्तृणां मते सर्वत्र तदङ्गीक्रियते, परं त्वपृथक्सिद्धिमनङ्गीकृत्य। शरीरदुःखेन शरीरिणः परमात्मनोऽपि दुःखित्वापत्तिशङ्कापरिहारार्थे "भोक्त्रापत्तेरविभागश्चेत स्याल्लोकवदि"ति सूत्रे दृष्टान्ततया नियामको राजा यदि शरीरी, प्रजाश्च नियम्या शरीरम्, तर्हि किं तत्र प्रजाशरीरयोरपृथक्सिद्धत्वम्?

यत्तु यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितृं वा शक्यम्, तच्छेषतैकस्वरूपं च, तत तस्य शरीरमिति शरीरलक्षणम्, तत्र तत्कृतिप्रयुक्तचेष्टासामान्यकत्वम् तत्कृतिप्रयुक्तस्वप्रतियोगिकपतनप्रतिबन्धकसंयोगसामान्यवत्त्वम्, तन्निष्ठातिशयाधेयकत्वं वा प्रत्येकं लक्षणम्। तत्र प्रथमलक्षणे भृत्यो राजशरीरमिति व्यवहारवारणाय सामान्यपदमिति वर्णनं तु, भोक्त्रापत्तिसूत्रे राजभृत्यदृष्टान्तं विहन्ति, औपचारिक शरीरत्वमादाय दृष्टान्तता तु मुख्यशरीरदोषेण शरीरिणोऽपि दोषभाक्त्वमिति शङ्कासमाधाने नोपयुज्यते। जीवस्य सूक्ष्मस्य, स्थूलस्य वा चेष्टासामान्यस्य परमात्मकृतियुक्तत्वे तस्य वैषम्यनैर्घृण्यदोषो दुष्परिहरः। तत्र सूक्ष्मचितः सूक्ष्माचितश्च सुषुप्त्यवस्थायां चेष्टैव नास्ति, इति कथं तत्र लक्षणसमन्वयः? अनेन देवमनुष्यादिशरीरे शरीरलक्षणसमन्वयोऽपि बाधित इति सूच्यते। सुषुप्तौ श्वासनिश्वासौ हि प्राणसत्तानिबन्धनौ न सुप्तजीवाधीनौ। न च तत्र जीवस्य कृतिः, अन्यथा सुषुप्तिरेव न स्यात्। न च तदा परमात्मन एवेदं शरीरम्; न जीवस्य; सुप्तो देवदत्त इति प्रतीतिविरोधात्। अतस्तत्र तत्र ब्रह्मशरीरत्वं पृथिव्यादीनां तन्नियम्यत्वमात्राभिप्रायमित्येव वक्तव्यम्॥

यस्य चेतनस्येति पारिभाषिकशरीरलक्षणमपि दुष्टं व्यर्थविशेषणं च। तत्र चेतनस्येति व्यर्थम्। चेतनस्य कृत्यभावेन कृतिप्रयुक्तचेष्टा-

सामान्यकत्वेनाचेतनशरीरत्वस्य पृथिव्यादावप्रसङ्गः । धर्मभूतज्ञानेऽतिव्याप्तिपरिहारार्थं यदि चेतनस्येति पदम्, तर्हि जीवधर्मभूतज्ञानस्य ब्रह्मशरीरत्वापत्तिः, जीववत् तद्धर्मभूतज्ञानस्य चैतन्यविशिष्टब्रह्मनियम्यत्वात्। इष्टापत्तौ तु जीवं प्रत्यपि धर्मभूतज्ञानस्य शरीरत्वे का क्षत्या, येन चेतनस्येति सार्थकं स्यात् । तत्रापीष्टापत्तौ नियामकत्वमात्रेण कथं सर्वात्मत्वम् ?

एतेन सर्वात्मनेत्यपि व्याख्यातम् । तेन हि यावदात्मभावमिति यदि विवक्षितम्, तर्हि परमते भावानां प्रतिक्षणपरिणामित्वेन सूक्ष्मचितां स्थूलचितां वोक्तविधं नियम्यत्वं बाधितमित्यसम्भवदूषणग्रस्तमिदं लक्षणम्। सूक्ष्मचितोः स्थूलचितोर्वा सर्वदा तद्भावेनावस्थायां सृष्टिस्थितिसंहारानुपपत्तिः। तत्तदवस्थाविशेषेषु यावत्तत्कालं नियम्यत्वं तु गृहाभरणादीनामपि यावत्तत्कालं तत्तज्जीवनियम्यानां तच्छरीरत्वापादकम् । मुक्तात्मनियम्यत्वाच्च प्रकृतेः तच्छरीरत्वमपि प्रकृतेः स्यात् । न चेदं शरीरसामान्यलक्षणमपि ; मृतदेहेऽनियम्ये, शरीरपदप्रवृत्तिनिमित्ताभावादव्याप्तेः । यद्यौपचारिकशरीरत्वेन तस्यालक्ष्यत्वम्, तर्हि, "यस्य पृथिवी शरीरमि"त्यादौ पृथिव्यादावपि तत्पदमौपचारिकम्, उपाधिपरं वेति विज्ञाय सन्तुष्यताम् ॥

किंच "यस्य पृथिवी शरीरमि"त्यादिना विवक्षितमन्तर्यामिस्वरूपं किं सूक्ष्मचिदचिच्छरीरकम्, उत स्थूलचिदचिच्छरीरकम्, आहो उभयशरीरकम् ? आद्ये पृथिव्यादिकार्यशरीरकत्वायोगः। द्वितीये तज्ज्ञानस्य सर्ववित्त्वाद्यनुपपत्तिः । अत एव न तृतीयः ; सर्वकार्यशरीरकस्यात्राप्रतिपादनात्, कार्यावस्थचिदात्मनाऽवगमस्य बन्धसाधनत्वेनौपनिषदत्वायोगाच्च ॥

एतेन—चिच्छरीरकत्वमपि—व्याख्यातम् । तत्र शरीरत्वं मुक्तात्मनोऽपि विवक्षितं वा, न वा। आद्ये तस्य स्थूलावस्थापत्त्या न मुक्तत्वम्, यदि तदपि कारणतावच्छेदकम् । अन्त्ये तु—तस्य कार्यकारणतान्यतरावच्छेदकत्वात् तद्गतातिशयाधायकत्वरूपशरीरलक्षणायोगः—इति ॥

सूक्ष्मचिदचिद्विशिष्टस्यैव कारणत्वे विशेष्यस्येव विशेषणस्यापि न साक्षाद् उपादानत्वसंभवः। साक्षात् प्रकृतेरिव ब्रह्मणोऽप्युपादानत्वाम्नानं समानम्। विशिष्टस्यैवोपादानत्वे जगज्जन्मस्थितिप्रयोजकत्वमन्तर्यामित्वं तस्यैव स्यात्, न विशेष्यमात्रस्य; अन्यथा विशेषणस्यापि शरीरित्वमन्तर्यामित्वं च स्यात्। अद्वैतमते त्वधिष्ठानत्वेन सर्वसत्तास्थित्यादिप्रयोजकत्वेन ब्रह्ममात्रोपादानत्वस्य सर्वाधिष्ठानत्वरूपस्य सत्त्वात्, सर्वोपाधिकत्वाच्चान्तर्यामित्वमुपपद्यते सर्वकारणस्य। अन्तर्यामित्वं हि न सशरीरत्वेन, किं त्वधिष्ठानत्वेनैव। अत एव—

"अन्तर्याम्यहमग्राह्योऽदृश्योऽहमलक्षणः।
अगोत्रोऽहमगात्रोऽहमचक्षुष्कोऽस्म्यहम्॥"

इति ब्रह्मविद्योपनिषदादिः। एतेन—नित्यसूर्यादयोऽपि—व्याख्याताः। किं वा प्रयोजनं पृथिव्यादिशरीरकत्वेनान्तर्यामिणो नियामकत्वेनावगमस्य। न हि परमात्मनो नियामकत्वमन्यापेक्षम्; अन्यथा कथं लौकिकनियामकवैलक्षण्यम्? यदि पृथिव्यादिनियमने शरीरान्तरानपेक्षा, नियम्यातिरिक्तशरीरान्तराभावादिति ज्ञापनार्थत्वात् तच्छरीरत्वनिर्देशस्य लौकिकनियामकवैलक्षण्यम्, तर्हि न सर्वशरीरकत्वेऽन्तर्यामिब्राह्मणस्य तात्पर्यम्। अतोऽशरीरस्यैव नियामकत्वे पर्यवसानान्न चिदचिच्छरीरकपरमात्मन्येव पर्यवसानम्॥

कथं च पृथिव्यादिशरीराणां दिव्यत्वम्। दिव्यत्वं च यदि परमात्मशरीरस्य ज्ञानानन्दादिरूपशुद्धप्रत्यगात्मस्वरूपत्वम्, तर्हि न सूक्ष्मचितः शरीरत्वम्, तस्यातद्रूपत्वात्। यदि नित्यं भगवन्नियम्यत्वमात्रम्, तर्हि कथं तेन परमात्मनोऽपि दुःखादिप्रसङ्गः, इति तच्छङ्कावारणार्थं "संभोगप्राप्तिरिति चेत्, न वैशेष्यात्" "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" इत्यादिसूत्राणि वितथानि। न चास्मदादिशरीरमपि परमात्मनियम्यम्, नियम्यत्वमात्रेण शरीरं

वा। कर्मफलभोगालम्बनत्वमात्रेण हि बद्धानां तत्तच्छरीरस्य शरीरत्वं नाम। न हि राजनियम्याः प्रजास्तच्छरीराणि ॥

वस्तुतस्तु— अन्तर्यामिब्राह्मणं सर्वान्तरपरमात्मस्वरूपप्रश्नस्य पर्यवसितमुत्तरम्। तद्धि उषस्तचाक्रायणकहोळप्रश्नोत्तरस्य सर्वान्तरस्यैव सर्वनियन्तृत्वरूपेणोपपादनपरम्; सर्वान्तरत्वस्य पूर्वोपक्षिप्तस्यैवानुषङ्गेणान्तर्यामिब्राह्मणस्य प्रवृत्तेः। वाक्यभेदस्त्वकिंचित्करः, ब्राह्मणभेदो वा, अन्यथा कहोळप्रश्नोतरयोर्भिन्नविषयत्वापत्तेः। "सैव हि सत्यादयः" इत्यधिकरणं हि वाक्यभेदेऽप्युपास्यस्वरूपानुकर्षणेन स्थानभेदमात्रेऽपि न विद्याभेद इति विवेचयति। अयमेव न्यायोऽत्रापि ॥

अत एवान्ते वाचक्नवीप्रश्नोत्तरेणाक्षरस्यैव सर्वविधारकत्वप्रशासितृत्वेनोपसंहारः। न चाक्षरमन्तर्यामि च वस्तुगत्या भिन्नमत्र; औपाधिकस्यान्तर्यामिण एव प्रशासितृत्वानुवादेन, तदपवादेन वा निर्विशेषस्वरूपेणैव परमात्मन उपसंहारस्तृतीयाध्यायस्य। इदमेवाभिप्रेत्य—शरीरपदम्—"यस्य पृथिवी शरीरमि"त्यादावुपाधिपरमित्युक्तमधस्तात् ॥

परमार्थतस्तु—अन्तर्यामिब्राह्मणस्य सर्वान्तरत्वं सर्वोपाधिकत्वेन, न तु स्वरूपत इत्येवमर्थे तात्पर्यं स्वीकर्तव्यम्। अन्यथा—"एष त आत्मान्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ता नान्यदतोऽस्ति विज्ञातैष त आत्माऽन्तर्याम्यमृतोऽतोऽन्यदार्तमिति तदितरस्यार्तत्वाम्नानमुपरुध्यते। अत्रान्तर्यामिणोऽन्यस्यार्तत्वं बोध्यते। तत्रान्यत्वं कस्य सर्वशरीरकस्यैवात्रान्तर्यामिपदेन विवक्षायाम्? न चात्रोपसंहारेऽन्तर्यामी शरीरित्वेनाम्नातः, येन तस्य शरीरित्वं मुख्यतात्पर्यविषयः स्यात्। सर्वत्र तत्तच्छरीरान्तरत्वेन सर्वान्तरत्वं बोध्यमानं "यत् साक्षादपरोक्षाद् ब्रह्म स आत्मा सर्वान्तरः" इत्याम्नातं सर्वान्तरं प्रत्यभिज्ञापयत् तस्यैवान्तर्यामित्वं ज्ञापयति ॥

वाचक्नव्यास्तृतीयप्रश्नोत्तरं तु "नान्यदतोऽस्ति विज्ञातृ" इत्यादिनाऽन्तर्यामिब्राह्मणावगतमौपाधिकं द्रष्टृत्वमपि प्रतिषेधति, इति तस्य निर्विशेषं पारमार्थिकं स्वरूपमेव प्रतिपाद्यत इत्यवगम्यते। तेन चान्तर्यामिवद् न दृश्यः, परं तु न द्रष्टापीति विशेषः सिध्यति, इति, केवलं दृग्रूपमेव पारमार्थिकमिति फलति। अत एव वाचक्नव्याः—"भगवन्तस्तदेव बहु मन्यध्वम्। यदस्मान्नमस्कारेण मुच्यध्वं नैव जातु युष्माकमिमं ब्रह्मोद्यं जेते"त्युपसंहारो ब्रह्मविचारस्य—"ब्राह्मणा भगवन्तः यो नो ब्रह्मिष्ठः एता गा उदजतामि"त्युपक्रान्तस्योपपद्यते। अन्यथाऽन्तर्यामिब्रह्मविज्ञानेनैव ब्रह्मिष्ठत्वे तत्रैव ब्रह्मविचारस्योपसंहार आपद्येत, न वा वाचक्नव्याः प्रश्नस्योत्तरस्य वोत्थानमपि॥

किंच—अन्तर्यामिब्राह्मणमिदं देवतानामपि ब्रह्मशरीरत्वं प्रतिपादयति वा, न वा। आद्येऽन्तर्यामिब्राह्मणमधिभूतमध्यात्मं चैव ब्रह्मणश्शरीरत्वेन पृथिव्यादीन् वागादींश्च श्रावयति, न त्वधिदैवतमपि। द्वितीये तु न विशिष्टयोरद्वैतम्। चिदचिद्ब्रह्मातिरिक्तानां देवानां ब्रह्मापृथक्सिद्धानां तदशरीराणां च स्वतन्त्राणा सत्त्वात्। अद्वैतमते त्वाधिभौतिकाध्यात्मिकयोरेव दृष्ट्या सर्वान्तरस्यान्तर्यामित्वेनोपास्यत्वमिति सुष्ठु लगति॥

तत्रान्तर्यामित्वमवस्थाविशेषेण शक्तिविशेषेण वा न भवति, किं त्वौपाधिकत्वेनैवेति भाष्य एव व्यक्तम्। तेन चान्तर्यामित्वेनोपासनं न देवानामप्युपाधितया विवक्षणेनेति फलति॥

निष्कर्षस्तु—"यस्य पृथिवी शरीरमि"त्यादौ शरीरपदं तैत्तिरीयमनोमयादौ शरीरमुखेनोपदिश्यमानत्ववत् पृथिव्यादिकार्यमुखेनोपदिश्यमानत्वाभिप्रायम्। तत्रान्तर्यामित्वं हि शरीरान्तःसंचारमात्रेण, न तु तदपृथक्सिद्धत्वेन। अन्तःसंचारस्तु—"तदनुप्रविश्य सच्च त्यच्चाभवदि"त्युक्तरीत्या तदात्मना भानमात्रम्, येनाधिष्ठानत्वं ब्रह्मणः स्थिरीकृतं भवति। अत एव—"अन्तश्शरीरे निहितो गुहायामज एको नित्यो यस्य पृथिवी शरीरं यः पृथिवीमन्तरे संचरन् यं

पृथिवी न वेद यस्यापः शरीरं योऽपोऽन्तरा संचरन्" इत्युपक्रम्य "यस्य मृत्युः शरीरं मृत्युमन्तरा संचरन् यं मृत्युर्न वेद स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यन्ते सर्वभूतान्तरात्मत्वमेव सुबालोपनिषदि नारायणस्याम्नायते ॥

स चायं नारायणो "न सन्नासन्न सदसदि"त्यादिना सुबालोपनिषदि प्रक्रान्तः—"भगवन् कस्मिन् सर्वेऽस्तं गच्छन्ती"ति रैक्वप्रश्ने "चक्षुरप्येति, यच्चक्षुरेवास्तमेति, द्रष्टव्यमेवाप्येत्यादित्यमेवास्तमेति य आदित्यमेवास्तमेति, स विराजमेवाप्येति, यो विराजमेवास्तमेति, प्राणमेवाप्येति, यः प्राणमेवास्तमेति, विज्ञानमेवास्तमेति, यो विज्ञानमेवास्तमेत्यानन्दमेवास्तमेति, य आनन्दमेवास्तमेति, तुरीयमेवाप्येति, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येती"ति प्रस्तुत्य—"श्रोत्रमेवाप्येती"त्यादिना—श्रोत्रनासाजिह्वात्वग्-वाग्-हस्तपादपायूपस्थमनोबुद्ध्यहंकारचित्तानामप्ययस्थानत्वेन निरूप्यमाणो ब्रह्म विष्णुरुद्रातिरिक्तोऽशरीर एवेति प्रतीयते ॥

तत्र पादपरमाप्ययस्थानोपपादनावसरेऽवान्तराप्ययस्थानत्वं न केवलं विष्णोः, किन्त्वन्तर्यामिणोऽपि प्रतिपाद्य तस्याप्यप्ययस्थानत्वं तुरीयस्य प्रतिपाद्यते । एवमेव बुद्धिपरमाप्ययस्थानत्वस्य तुरीये पर्यवसानोपपादनावसरे, तथाऽहंकारस्य परमाप्ययस्थानोपपादनावसरे च ब्रह्मकृष्णरुद्रादीनामप्यवान्तराप्ययस्थानत्वं प्रतिपाद्यत इति सुबालोपनिषत्तात्पर्यानुसन्धानमद्वैतमतमेवोपबृंहयति ॥

अत एव सुबालोपनिषत् तुरीयस्याप्यप्ययस्थानं निर्बीजं तत्वमित्युपसंहरन्ती —"य एवं निर्बीजं वेद निर्बीज एव स भवती"ति तस्य तृतीयखण्डोपक्षिप्तं "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते । ब्रह्मैव सन् ब्रह्माप्येती"ति प्रस्तुतोत्क्रमणनिरपेक्षब्रह्मभावसिद्धान्तं केवलाद्वैतिनां साधु व्यवस्थापयति ॥

शरीरलक्षणं तु श्रीभाष्यस्य तदनुसारिणां च मृतशरीरे, अर्चायां चाव्याप्तम्। न हि मृतशरीरं यावत्सत्तमसंबन्धानर्हम्। स्वशक्ये नियम्यस्वभावं वा, मन्त्रादिना देवताप्रतिष्ठाविधेः पूर्वम्; पुनः प्रतिष्ठायां बालालयस्थापनानन्तरं वा शिलादिविग्रहे यावत्सत्तमसंबन्धानर्हत्वात् ॥

शरीरलक्षणं तु मुख्यं यदाश्रित्यैवात्मा भोगवान् भवति, तत्त्वमेव। इद तु श्रीभाष्यसिद्धान्तेऽपि मुक्तात्मनोऽप्यप्राकृतेन्द्रियशरीरादिस्वीकाराद् नाव्याप्तम्। ईश्वरस्य तु न शरीरित्वमविप्रतिपन्नम्, येन तत्राव्याप्तिराशंक्येत। मायावच्छिन्नम्, तदुपहितं वा चैतन्यं खल्वीश्वरो नाम। ईश्वरेण स्वेच्छया गृहीतमप्राकृतं शरीरमपि तस्य भोगायतनमेव। व्यक्तीकरिष्यते च सर्वमुपरिष्टात् ॥

सारांशस्तु—सर्वान्तरत्वनिर्णयाय गार्गिप्रश्ने पूर्वस्मात्पूर्वस्मादुत्तरस्योत्तरस्यान्तरत्वेन ब्रह्मलोकशब्दवाच्यब्रह्मान्तारम्भकभूतपर्यन्तं निरूप्य तत्राप्यन्तरं सूत्राख्यं सूक्ष्मं वायुतत्त्वं समष्टिसृष्टिलिंगात्मकमुद्दालकप्रश्नोत्तरेण निरूप्य सूत्रादप्यन्तरं तस्यैव नियन्तारमन्तर्यामिणं निरूपयति—"यः पृथिव्यां तिष्ठन्नि"त्यादिना। तत्र स्थितिर्यस्य कस्याप्यस्तीत्यत उक्तम्—पृथिव्या अन्तर इति। अभ्यन्तर इत्यर्थः। पृथिव्यभिमानिनि जीवेऽपि तदन्तरत्वमस्तीत्यत उक्तम्—यं पृथिवी देवता मदन्योऽस्तीति यं न वेदेत्यर्थः—स्वात्मानं त्वमहमिति वेत्त्येवेति तद्व्यावृत्तिः ॥

ननु—वास्यादिप्रेरकत्वं शरीरिणि वर्धक्यादौ दृष्टम्, तद्वदीश्वरस्य पृथिवीनियमने शरीरापेक्षा स्यात्। शरीरित्वं चेश्वरस्य श्रुतिषु सिद्धमयुक्तम्। "यस्य पृथिवी शरीम्" इति पृथिव्याख्यं द्रव्यं शरीरम्, यं पृथिवी न वेदेत्युक्तम्। पृथिवीदेवताकर्मार्जितम्, उपलक्षणमेतत् तदीयं करणं च तदेव यस्य संबन्धि, न तु स्वकीयं शरीरमिन्द्रियं वाऽस्तीत्यर्थः। न च—शरीरत्वस्य प्रतिसंबन्ध्यप्यपेक्ष्यते। अतो यस्येति षष्ठी शरीरिभावाधीनेति—वाच्यम्।

शरीरत्वं ससंबन्धिकं नेति शरीरलक्षणे वक्ष्यमाणत्वात् । किं च पृथिवी-शरीरं यस्येति न वाक्यार्थः, तस्य प्रकृते सर्वान्तरत्वेऽनुपयोगात्, नियम्यत्वस्य वास्यादौ नर्तितदारुयन्त्रादौ च व्यभिचारेण शरीरित्वानियतत्वात्, पृथिवी-मन्तरो यमयतीत्यनेनैव भवदीयशरीरवत्त्वस्यार्थसिद्धत्वेन पौनरुक्त्यात्, त्वन्मते शरीरत्वस्य नियम्यत्वघटितत्वेन शरीरमित्यनेनैव तत्सिद्धेरुत्तरवाक्यवैयर्थ्यापातात्, आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीति भवदभ्युपगमात् । न च 'यस्य पृथिवी शरीरमि'त्यचित्पृथिवीनियामकत्वलाभाय, 'यः पृथिवीमन्तरो यमयती'त्यनयोः पौनरुक्त्यस्य वज्रलेपत्वात्, अचेतनापृथिवीति जीववदात्मत्वाभावात्, पृथिवीनियामकस्य जीवस्य नियामकतयैव पृथिवी-नियामकत्वसर्वान्तरत्वयोर्लाभात्, 'आत्मनी' त्यनेन सर्वात्मनां शरीरत्वे सिद्धे विशिष्टजीवानामपि शरीरत्वसिद्धेश्च पौनरुक्त्यदोषानिस्तारात् । अस्मन्मते तु विज्ञानाख्यान्तःकरणाभिमान्यपेक्षया पृथिव्याद्यभिमानिनां न्यूनाधिकभेदान्न पौनरुक्त्यशंकावकाशः । तस्माद् नात्र पृथिव्यादिशरीरकत्वं वाक्यार्थः, किन्तु पृथिवी शरीरमेव यस्येति परिसंख्यार्थके स्वशरीरेन्द्रियनियमने शरीरेन्द्रियान्त-रानपेक्षावदीश्वरस्यापि सन्निधानमात्रेण नियामकत्वादीश्वरनिष्ठनियामकत्वस्य नित्यतया वर्धकिनिष्ठनियामकत्ववत् सामग्र्यजन्यत्वाच्च पृथिवीनियमने शरी-रान्तरापेक्षा नास्तीत्याशयेन शरीरान्तरनिषेधपरत्वात् ॥

यथा त्वन्मतेऽन्नमयादिकोशेषु ब्रह्मण एव "तस्यैष एव शारीर आत्मे"ति शारीरात्मकत्वकथनानन्तरमानन्दमयकोशेऽप्यानन्दमयाद्ब्रह्मणोऽन्यस्य "तस्यैष एवे"त्यनेन शारीरात्मकस्यानन्दमयस्य ब्रह्मत्वं न सिध्येदित्याशंक्य आनन्दमयस्य पूर्वकोशेषु शारीरात्मत्वेन निर्दिष्टस्य ब्रह्मणश्शारीरात्म-त्वात् संसारवारणार्थं तस्यैष एव शारीर आत्मा, न तु शारीरात्मान्तरमिति परिसंख्यार्थं वचनम्, न तु स्वस्यैव स्वं प्रति शारीरात्मविधानार्थमित्युक्तम्, तद्वदिहापि शरीरत्वविधावपि तात्पर्ये वाक्यभेदप्रसंगात् सर्वान्तरत्वनिरूपणेऽन-

पेक्षितत्वाच्च शरीरत्वविधानं न संगच्छते। यस्य शरीरमित्युक्ते शरीरित्वमेव षष्ठयर्थः स्यादिति चेत्, न; तस्यासिद्धत्वात्, निषिद्धत्वाच्च ॥

किंनिरूपितं तर्हि शरीरत्वमिति चेत्, पूर्ववाक्यस्थपृथिवीदेवताकर्मार्जितत्वादिति तन्निरूपितमेव शरीरत्वमनूद्यते। ततश्च पृथिवीदेवताकर्मार्जितं पृथिव्याख्यं शरीरमेव, यस्य पृथिवीनियमने प्रयोजकम्, न तु स्वकीयमिति फलितोऽर्थः ॥

वस्तुतस्तु—शरीरशब्दोऽत्र नियम्यपर., इति नियामकत्वं षष्ठयर्थ इति न काप्यनुपपत्तिः। अतो न पृथिवीशरीरकत्वे तात्पर्यम्। श्रुतत्वमात्रेण तदंगीकारे "पृथिव्यां तिष्ठन्" इति श्रुत्या पृथिव्याधेयत्वमपि ब्रह्मण. स्यात्। स्वे महिम्नीति श्रुत्या बाधितं तदिति चेत्, शरीरित्वमपि श्रुत्या बाधितमिति वक्ष्यामः ॥

गार्ग्युद्दालकप्रश्नाभ्यां सूत्राख्यस्य लिङ्गस्यान्तरत्वकथनेनोपरतस्य प्रश्ने प्रतिज्ञातं लिङ्गोपाधिकजीवस्य सर्वान्तरत्वम्, लिंगाख्यसूत्रादप्यांतरत्वेन निर्व्यूढं तस्यैव जीवस्य सोपाधिकं रूपम् ॥

वस्तुतस्तु—उपाधितो भिन्नमिवात्मानं मन्यमाने स्वप्रतिबिम्बजीवे स्थितस्स यमयति तत्तद्व्यापारेषु नियमयति—"यः एष एवात्मैवान्तर्यामी; अमृतोऽसंसारीत्यर्थः। अत्रान्तर्यामिप्रकरणे तमोऽन्धकारतेजस्सहपाठात्। विज्ञानं बुद्धिः; करणप्रायपाठात्। माध्यन्दिनपाठ आत्मशब्दो बुद्धिपर एव; विज्ञानस्थाने पठितत्वात्। ततश्च बुध्युपाधिको जीवोऽर्थः। तस्मान्नेयं श्रुतिर्जगच्छरीरत्वे मानम्। सुबालोपनिषदि च "तदाहुरि"त्यादिनाऽचेतनानां महदादिक्रमेण सृष्टिम्, व्युत्क्रमेण लयं चोक्त्वाऽऽप्राणाद्यनन्तरं ब्रह्मसत्यतपोदमदानदयादिभिः स्वाधीनवतो "न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येती"त्युक्त्वा, दहराकाशेऽपि सुप्तं जीवस्वरूपं तदेकतापत्तिं पुनर्जागरितं चोक्त्वा "य एतस्मिन्नन्तरे संचरति, सोऽयमात्मे"त्यादिना सर्वा-

न्तरमन्तर्यामिणम्—"अयमात्मे"ति जीवाभिन्नमुपास्यत्वेन प्रक्रम्य, "य एष सर्वेश्वरः" इत्यादिनाऽपीश्वरमन्तर्यामिरूपं तस्यैवौपाधिकमन्नमयादिरूपत्वं चोक्त्वा "नास्ति द्वैतमि"ति द्वैतनिषेधपूर्वकं परस्परस्यापि नारायणादुत्पन्नत्वेन कार्यकारणयोरभेदान्नारायणशर्मकत्वमुक्त्वा, "अन्तश्शरीरे निहितो गुहायामि" त्युपक्रम्य "यस्य पृथिवी शरीरमि"त्यादिनाऽन्तर्यामित्वेन सर्वान्तर्यामित्वमेवोपपादितम्। अग्रे च "अस्मिन् सर्वेऽस्तं गच्छन्ती"त्यादिना स्वलयाधिष्ठानत्वेन ब्रह्मणस्सार्वात्म्यमुक्त्वा "य एवं निर्बीजं वेद निर्बीज एव भवति सर्वस्यात्मा भवति य एवं वेदे"ति जीवस्यान्तर्याम्यभेदेन ब्रह्मैक्यमुक्त्वा, उपसंहारे ब्रह्मलोकान्तानामात्मन्येव प्रोतत्वकथनेन सर्वान्तरात्मत्वमेवोपपादितम्। अतस्तत्रापि सर्ववेदान्तप्रत्ययन्यायेन बृहदारण्यकान्तर्यामिनिरूपणेनास्मदुक्तं सर्वमनुसन्धेयम्। तत्राप्युपक्रमे, मध्ये, उपसंहारे च सर्वान्तरत्वे, अद्वैते च तात्पर्यावगमात्, शरीरशरीरिभावकथनस्यानुपयोगात्, अतिदुष्टे शरीरे गुहायां निहितोऽप्यात्मा न शरीरं पश्यतीत्युपसंहृतम्। एवमन्यत्राप्यूह्यम्। तस्माद्ब्रह्मणस्सशरीरत्वे कापि श्रुतिर्न मानम्॥

स्मृतिपुराणागमेष्वपि नियम्यत्वमात्रेण शरीरत्वव्यपदेश औपचारिक एव, न तूक्तवक्ष्यमाणहेतुभिर्मुख्यं शरीरत्वम्। निषिद्धं चेश्वरस्य सर्वश्रुतिषु शरीरित्वम्; ईशावास्ये—"स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धमि"त्यत्र 'अकायमि'ति शरीरसामान्यस्य, 'अव्रणमस्नाविरमि'ति स्थूलशरीरस्य च निषिद्धत्वात्। न च स्वकर्मारब्धस्यैव निषेधः; संकोचे मानाभावात्, 'अपापविद्धमि'त्यनेन कर्मतत्कृतदेहोपभोगानां निषिद्धत्वाच्च॥

नच—अन्ते "यत्ते रूपं कल्याणतमं तत्ते पश्यामी"ति शरीरित्वमुक्तमिति—वाच्यम्; तत्रादित्यस्य प्रकृतस्य तत्ते इत्यनेनोक्तत्वाद् रूपशब्दस्य स्वरूपपरत्वात्, शरीरे रूपत्वाभावाच्च, अग्रे च "योऽसावसौ पुरुषस्सोऽह-

मसी"ति पुरुषात्मनोरैक्यस्योक्तत्वात् , अहंपदस्य मच्छरीरीत्यर्थपरत्वेऽस्मीत्युत्तमपुरुषानुपपत्तेः, पुरुषशरीरमहमित्यर्थे पुरुषशब्दस्य शरीरलक्षणापत्तेः ॥

तलवशाखोपनिषदि च—"केनेषितं पतति प्रेषितं मन" इति प्रेषितं प्रेरितमित्युक्ते देहादिसापेक्षत्वेन प्रेरकत्वप्रसक्तौ तद्व्युदासायेषितमिति विशेषणादिच्छामात्रेणैव प्रेरकत्वम्, न तु वाक्कायाभ्याम्, इत्यशरीरत्वमेवोपक्रम्य 'श्रोत्रस्य श्रोत्रमि'त्यादिना 'न तत्र चक्षुर्गच्छति, न वाग् गच्छति' इति च वागगोचरीभूतमशरीरमेवोक्तम् । अत एवाग्रे देवानामिन्द्रियगोचरे प्रादुर्भूतम् यक्षरूपमीश्वरस्य न वास्तवम्, किन्तु मिथ्याभूतमिति विद्युद्दृष्टान्तोक्तिः ॥

कठवल्याम्—"अशरीरं शरीरेष्वनवस्थेष्ववस्थितमि"ति शरीरसामान्यनिषेधेन देवमनुष्यादिशरीरेषु तत्प्रति शरीरत्वापन्नेऽवस्थावत्त्वेऽपि ब्रह्मणस्तेषा च शरीरशरीरिभावाभावस्योक्तत्वात् "अशब्दमस्पर्शमिति" च स्वरूपतो विशिष्टरूपेण वा रूपादिराहित्योक्त्या, "रूपं रूपं प्रतिरूपो बभूव" इति देवादिकृतरूपवत्त्वोक्त्या च वास्तवाशरीरत्वकथनाच्च न ब्रह्मणः शरीरित्वम् ॥

प्रश्नोपनिषदि च—चतुर्थे गार्ग्यप्रश्ने—"अच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते" इति ब्रह्मण. शरीरमात्रनिषेधात्, पंचमे—सत्यकामप्रश्ने "परात् परं पुरिशयं पुरुषमीक्षते"इति पुरिशयनमात्रोक्त्या भ्रान्तिप्राप्तस्य शरीरस्य निरासायाग्रे—"शान्तमजरममृतम्" इति जराख्यशरीरधर्मसंबन्धनिषेधाच्च ब्रह्म न सशरीरम् । षष्ठे प्रश्ने षोडशकलं पुरुषं प्रकृत्य "स एषोऽकलोऽमतो भवती"ति मुक्तावशरीरब्रह्मैकयस्योपसंहारात्, "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपाद"मिति स्थूलसूक्ष्मशरीरद्वयनिषेधात्, अग्रे च—"दिव्यो ह्यमूर्तः पुरुषः," "अप्राणो ह्यमनाश्शुभ्र इति तन्निषेधाच्च ॥

मुण्डके यद्यपि—"अग्निर्मूर्धे"त्यादिना विराड्रूपमुक्तम्, तथापि तस्य न त्वदभिप्रेतशरीरसाधाकत्वम्। यस्य "सर्वाणि भूतानि शरीरमि"त्यादिना

सर्वस्य साक्षाच्छरीरत्वादिनावयवत्वसंभवात्। अवयववाचकानां वागादिशब्दानां शरीरपर्यन्तत्वासंप्रतिपत्तेश्च , अग्रे "निष्कळं निष्क्रियमि"ति तन्निषेधाच्च ॥

माण्डूक्ये च—"अदृश्यमव्यवहार्यमि"त्यादिना तन्निषेधः, प्रपंचोपशममिति च साक्षान्निषेधश्च ॥

तैत्तरीयके तु—भूरादिव्याहृत्यात्मनोपास्यस्याकाशवत्सूक्ष्मस्वरूपत्वात्, आकाशशरीरमित्युक्तं भवतु भवदुक्तरीत्यभिप्रायेण। परं तु तत्रापि शरीरपदं वितथमेव। ऐतरेयके च—सूक्ष्मस्थूलदेहसृष्ट्यनन्तरं 'कथं न्विद महते स्यादिति अथ कोऽहमिति च प्राणादिव्यापाराणां निरधिष्ठातृकत्वमात्रं 'स एतमेव सीमानं विदार्यैतया द्वारेति प्रतिपाद्य, तत्रेश्वरस्यैव प्रवेशमुक्त्वा, स्थितस्य प्रविष्टस्य तिस्रोऽवस्था इति जाग्रदादिस्थानान्युक्त्वा, "स जातो भूतान्यभिव्यख्यत" इति तस्यैव देहाद्यभिमानित्वेन ब्रह्मणश्शरीरित्वकथनात् ॥

छान्दोग्ये—"अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति "न ह वै सशरीरस्ये"ति चान्वयव्यतिरेकाभ्यां शरीरसामान्यनिषेधः ॥

बृहदारण्के—अन्तर्यामिब्राह्मणोक्तं शरीरान्तरं विना साक्षात्प्रेर्यत्वरूपगुणयोगादौपचारिकं शरीरपदम् , "यस्य पृथिवी शरीरमि"ति शृण्वतो भ्रान्त्या प्राप्तं मुख्यशरीरत्वं निराकर्तुं तदुत्तरगार्ग्यप्रश्नेऽक्षरविद्यायामचक्षुषमश्रोत्रमित्याद्यमुखमित्यन्तेन स्थूलसूक्ष्मशरीरनिषेधात् , "न तदश्नात्यस्थूलमित्या"दिना तद्धर्मक्रियागुणनिषेधात्, अकामयमान इत्युपक्रम्य—अथायमशरीर इति मुक्तजीवस्य ब्रह्मैक्याभिप्रायेण शरीरमात्रनिषेधाच्च न ब्रह्म सशरीरम् ॥

न च—स्वकर्मार्जितशरीरस्यैवेते सर्वे निषेधाः, अन्यथा "हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः" इति "सहस्रशीर्षा पुरुषः" "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यावि"त्यादिश्रुतिविरोध इति—वाच्यम्; पुरुषसूक्तादिषूपासनार्थं तत्तदवयवत्वकल्पनया साक्षान्नियम्यतामात्रेण शरीरत्वोपचारात् ॥

अत एव भक्तानामुपासनार्थमीश्वरेण गृहीतानां शिवविष्ण्वादिविग्रहाणां भौतिकानामभौतिकानां वा स्वमायया कल्पितत्वाद् न वास्तवं शरीरत्वम् । परन्तु तेषु शरीरेषु जीवान्तर्भावात्साक्षादीश्वरप्रेरणयैव चेष्टाजननात् तदीयमिदं शरीरमिति गौणो व्यवहारः । अत एव शिवविष्णुकृष्णरामादिशब्दाः स्मृतिपुराणादिषु शरीरमनन्तर्भाव्य ब्रह्मण्येव व्युत्पादिताः, न तु शरीरवाचकत्वेन शरीरिपर्यन्ततामाश्रित्य समर्थिताः ॥

नापि सूक्ष्मचिदचितोः शरीरलक्षणसमन्वयः, तत्साधारणशरीरलक्षणासंभवात् ॥

यद्यपि कर्मफलभोगसाधनेन्द्रियाश्रितत्वे सति पञ्चवृत्तिप्राणाधीनधारणत्वे सति भूतसंघातविशेषकत्वं न शरीरलक्षणम्, पारमेश्वरलीलाविग्रहेषु मुक्तानां शरीरेषु च कर्मफलभोगार्थत्वाभावेन भौतिकत्वाभावेन चाव्याप्तेः, स्थावरेषु प्राणस्य पञ्चवृत्तित्वाभावाच्च, अहल्याशिलारूपे इन्द्रियाश्रयत्वभोगहेतुत्वयोरभावाच्च ॥

नापि भोगायतनत्वं लक्षणम्; वेश्मादावतिव्याप्तेः । न च यत्र स्थितस्यैव भोगः, तदेवायतनमिति—वाच्यम्; परकायप्रविष्टजीवं प्रति शरीरत्वाभावात्, भोगायतनत्वाच्च तत्रातिव्याप्तेः ॥

नापि यदिच्छाधीनस्वरूपस्थितिप्रवृत्ति यत्, तत्तस्य शरीरमिति लक्षणम्, देवप्रेतपिशाचादीनां जीवं प्रति शरीरत्वात्तत्राव्याप्तेः, तेषां जीवायत्तस्वरूपस्थितिप्रवृत्तित्वाभावात्, देवे च जीवायत्तप्रवृत्त्यभावात्, मृतदेहे जीवायत्तस्थित्यभावादव्याप्तेः, नर्तनप्रतिमादिष्वव्याप्तेश्च ॥

नापि तद्देशनियम्यविधार्यवेपत्वं लक्षणम्; क्रियादिष्वतिव्याप्तेः ॥

तथापि जरायुजादिसर्वशरीरेष्वनुगतैकाकाराभावाच्छरीरत्वस्योपाधिरूपस्यैव वाच्यत्वात् श्रुतिसिद्धेश्वरशरीरचिदचिदवतारमुक्तदेहानुगतस्यैव

दृष्टप्रयोगानुसारेण शरीरपदप्रवृत्तिनिमित्तत्वं कल्पनीयम् , इति मनुष्यत्वादिकमननुगतत्वादुपेक्ष्योपाधिरूपमेव प्रवृत्तिनिमित्तं कल्पयते ॥

ननु—यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यम् , तच्छेषतैकस्वरूपं च तत् तस्य शरीरमिति लक्षणम् । रुग्णदेहे रोगेण प्रतिबन्धान्नियमने शक्तिरस्त्येव, इति नाव्याप्तिः, सुक्रृतदेहे तु मरणकाल एव प्रक्रान्तविशरणत्वात् , देहैकदेशत्वेन देहशब्दस्तत्र गौणः । चिदचिद्रूपं जगत्त्वीश्वरेण नियम्यं धार्यं तच्छेषभूतं सर्वं तच्छरीरमेवेति भाष्योक्तं सम्यगिति—चेत् , न ;

द्रव्यगुणकर्माद्यात्मकं सर्वमचेतनं जीवाश्चेश्वरं प्रति शरीरमिति त्वया वाच्यम् , अन्यथा 'ऐतदात्म्यमिदं सर्वमि'ति पदाभ्यां परामृष्टस्य प्रत्यक्षादिप्रमाणसिद्धस्य सर्वस्यैतदात्म्यासिद्धिप्रसंगादेकविज्ञानेन सर्वविज्ञानानुपपत्तेः, "सर्वं खल्विदं ब्रह्म तज्जलानि"ति द्रव्यस्येव जन्मादिमतो गुणक्रियादेरपि हेतूपन्यासेन ब्रह्मात्मकत्वस्य स्वीकृतत्वाच्च । उक्तं च जिज्ञासासूत्रान्ते "सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकार. परमपुरुष एव कार्यावस्थकारणावस्थजगद्रूपेणावास्थितः" इति । अवश्यं चैतत्त्वया वाच्यम् , अन्यथा चिदचितोः सर्वावस्थयोः परमपुरुषशरीरत्वेन तत्प्रकारतयैव पदार्थत्वात् तत्प्रकारः परमपुरुषः सर्वदा सर्वशब्दवाच्य इति ग्रन्थासंगतिः स्यात् , रूपरसशुक्लकृष्णलोहितयागच्छेदनादिशब्दानां शरीरवाचकत्वाभावात् , सर्वशब्दवाच्यत्वाभावप्रसंगात् । अतो द्रव्यपदे दत्ते ब्रह्म प्रति न गुणकर्मादावव्याप्तिरित्युक्ते तु जीवं प्रति तत्रैवातिव्याप्तेः, उभयथाऽनन्दादावतिव्याप्तिः ; ज्ञानानन्दयोस्त्वया द्रव्यत्वांगीकारात् । चेतनस्येति च व्यर्थम् ; अचेतनस्य नियमनाशक्तेः । सर्वात्मनेत्यस्य सर्वावयवेष्वित्यर्थे जीवेऽव्याप्ति. ; निरवयवत्वात् , जीवं प्रति देहे चाव्याप्ति. ; सर्वावयवेषु नियामकत्वासंभवात । स्माप्तदेहेषु चाव्याप्तिः; तेषु जीवस्यास्वातन्त्र्यात् , तत्सृष्टेरीश्वरकर्तृकत्वांगीकारात् तन्नियमने चासामर्थ्यात् ॥

तच्छेषतैकस्वरूपमिति च तं प्रति शेष एवेति वा? तं प्रत्येव शेष इति वाऽर्थः? आद्य एकपदवैयर्थ्यम्। तं प्रति शेष एव, न तु शेषीति हि तदर्थः। न चैकं प्रत्येवैकस्य शेषत्वशेषित्वे स्तः। न चान्यं प्रति शेषित्वं व्यावर्त्यम्, जीवानां स्वशरीराणि प्रति शेषित्वेनाव्याप्तेः। द्वितीये ब्रह्म प्रत्यचित्स्वव्याप्तिः। अचितां जीवं प्रत्यशेषत्वात्, अन्यथा देवादिदेहेष्वव्याप्तिः। तस्माद् नैतल्लक्षणम्। अत एव "सर्वं खल्वि"त्यादौ सामानाधिकरण्यमपि न शरीरशरीरिभावनिबन्धनम्, किन्तु कार्यकारणभावनिबन्धनम्। अत एव "तज्जलानि"ति तत्र वाक्यशेषः। अचितां जीवं प्रत्यशेषत्वात्, अन्यथा देवादिदेहेष्वव्याप्तिरिति। तस्मान्नैतल्लक्षणं युक्तम् ॥

अत्र प्रमेयमालाकारः—लोके तावद्विभिन्नाकारेषु नरपशुनागादिषु ब्रह्मादिस्थावरान्तजीवशरीरेषु भगवल्लीलादिविग्रहेषु च 'यस्य आत्मा शरीरम्' 'यस्याव्यक्तं शरीर'मिति ब्रह्म प्रति सर्वावस्थावस्थितचिदचितोश्च शरीरशब्दः प्रयुज्यते। तत्र सति संभवे सर्वानुगत प्रवृत्तिनिमित्त वाच्यम्। न च मनुष्यत्वाद्याकृतिरनुगता। नापि चेष्टेन्द्रियभोगाश्रयत्वरूपं गौतमोक्तमुपाधित्रयमनुगतम्; चिदचितोर्ब्रह्मशरीरत्वेन श्रुत्यादौ बहुळव्यवहृतयोरव्याप्तेः। न च तत्र लाक्षणिकत्वम्, मनुष्यादावेकत्र शक्तिः, अन्यत्र लक्षणेत्यपि सुवचत्वात्। अतो भाष्योक्तं लक्षणत्रयमेव सम्यक् ॥

तस्यायमर्थः—यस्ये'ति षष्ठ्यन्तं पुत्रत्वादिवच्छरीरत्वं सप्रतियोगिकमिति सूचनाय। किंच "आत्मन आकाशस्सम्भूतः" इत्यादिषु केवलात्मपदश्रवणात्, आत्मत्वस्य शरीरप्रतियोगिकत्वादात्मेतरस्य सर्वस्य शरीरत्वसिद्धिः। चेतनस्ये'ति पदं धार्यत्वशेषत्वलक्षणे लक्षणद्वये दीपं प्रति प्रभायां त्रिष्वपि लक्षणेष्वात्मधर्मज्ञाने चातिव्याप्तिवारणाय। चैतन्यविशिष्टाद्भिन्नस्यैव चैतन्यविशिष्टं प्रति शरीरत्वलाभात्। **द्रव्यपदम्** जीवगतक्रियादिवारणाय। **सर्वात्मनेति** यावद्द्रव्यभावितयेत्यर्थः। तेन कदाचि-

न्नियम्यगृहवस्त्राभरणादिव्यावृत्तिः। अत एव जीवसमष्टिधार्यप्रकृतौ जीवसमष्टिं प्रति नातिव्याप्तिः। एकैकजीवं मुक्त्वा समुदायस्यान्यान्यत्वेन यावत्प्रकृतिसत्त्वं विधारकैकसमष्ट्यभावात्। स्वार्थे स्वशक्ये तत्तच्छरीरासाधारणकार्य इत्यर्थः। तेन शक्यार्थे नियम्यत्वाभावेऽपि नासंभवः। नियन्तुं धारयितुं शेषभूतमिति च ब्रह्मादिष्वव्याप्तिवारणाय। शक्यम्=शक्तिविषय इत्यर्थ.। तेन रुग्णदेहे प्रतिबद्धा नियमनशक्तिरस्तीति नाव्याप्तिः। करपादाद्यवयवानामेवेन्द्रियाणां समुदायावस्थापत्त्या शरीरत्वात् तत्तद्रूपेणैव नियम्यरोगत्वादिदर्शनात्, विभक्तानां तदर्शनाच्च न तत्रातिव्याप्तिः। जीववियोगलक्षण एव शरीरे प्रारब्धे मृतदेहे पूर्वदेहैकदेशत्वाच्छरीरशब्दो गौण इति न तत्राव्याप्तिदोषाय—इति॥

अत्र ब्रूमः—न तावत्सकलशरीरव्यवहाराणामनुपचरितत्वादेकं शरीरलक्षणं वक्तुं शक्यम्, उक्तं वा भवता। लोकव्यवहारे मृतसंस्कारादिविधिषु चाम्रेडितानामनन्तमृतदेहविषयशरीरशब्दानां त्वयैव करणवत्त्वानगीकारात्, "अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत, एवमेवेदं शरीरं शेते। अथायमशरीरकः" इत्यारण्यके दर्शनाच्च "भेदश्रुतेर्वैलक्षण्याच्चे" त्यत्र भाष्ये एतच्चैव सर्वे रूपमभवन्निति श्रुतौ रूपम्=शरीरम्, अभवन् तदधीनप्रवृत्तयोऽभवन्निति रूपशब्दस्य शरीरार्थकस्य गौणार्थस्यभानात्, आरण्यके च वाचः पृथिवी शरीरमिति शरीरश्रवणस्यादश्शरीरमिति करणाधारत्वात् प्रायेण शरीरशब्दप्रयोगदर्शनात्, सर्वेषु श्रुतिस्मृतिपुराणेषु "अकायमशरीरमि"त्यादिशरीरनिषेधेषु शरीरादिपदानां प्रतिषेध्यसमर्पकाणां कर्मवश्यशरीरपरत्वेन विशेषलक्षणांगीकाराच्च॥

किंच 'मनुष्य. कर्मणा देवो जायते' इत्यादौ देवादिपदानां देहपराणां सामानाधिकरण्यस्य शरीरिणि लक्षणयोपपत्तावप्यनुपचरितप्रचुरप्रयोगानुरोधेन शरीरव्याप्तिशक्तिं कल्पयित्वा तद्दृष्टान्तेनापृथक्सिद्धप्रकारत्वेन जातिगुण-

शरीराणां तद्वाचकशब्दाना प्रकारिपर्यन्तत्वदर्शनात्, शरीरिपर्यन्तं शक्तिमङ्गीकृत्य, "आत्मैवेदम्" "तत्त्वमसी'त्यादौ चाचिद्वाचिनां त्वमिदमहमादिपदानामचिद्देहकजीववाचकानां तादृशजीवशरीरकब्रह्मणि शक्तत्वेन मुख्यसामानाधिकरण्य निर्वोढुं चिदचित्साधारणं शरीरत्वं भवता निरुक्तम्। एवं च सति देवमनुष्यादिशरीरेषु श्रुतिं परित्यज्य तत्प्रापकादृष्टसहकृताहंकारजनितप्रत्ययविषयत्वयोग्यतारूपं देवत्वादिकं देहात्मनोरनुगतं देवादिपदप्रवृत्तिनिमित्तं स्यात्। ततश्च न शरीरविशिष्टे शक्तिसिद्धिः, देवो मनुष्यो जात इति चात्मरूपपदद्वयार्थव्यक्तिमादाय सामानाधिकरण्योपपत्तिः ॥

किंचैवं लक्षणोच्छेदः, शक्यलक्ष्यार्थयोस्संबन्धस्यावश्यकत्वात्, गंगातीरसंयोगाश्रयत्वं गंगापदप्रवृत्तिनिमित्तमाश्रित्य तीरे शक्तेः सुवचत्वात् ॥

किंच ब्रह्मान्यत्वं शरीरत्वं नियम्यत्व वा। तद्वाचकानां ब्रह्मपर्यन्तताेच्यताम्, किमनेनायासेन? अत आत्मप्रतियोगिकशरीरत्वस्य चार्वाकादिपामरपरीक्षकासाधारणसर्वानुभूयमानचाक्षुषज्ञानविषयत्वासंभवाद् न भवदुक्त शरीरव्यवहारनिर्वाहकम् ॥

न च—चेष्टेन्द्रियभोगाश्रयत्वमपि न चाक्षुषम्; विशेषणानामचाक्षुषत्वादिति — वाच्यम्; साक्षात्प्रयत्नजन्यक्रियाविशेषरूपचेष्टासुखदुःखानुभवस्य चक्षुरादिगोळकाश्रयत्वस्य सर्वेषां स्वशरीरे प्रत्यक्षत्वेन मनुष्यत्वादेस्तद्व्याप्यत्वनिश्चयसंभवात्, तदाकृतिविशेषोपनीततादृशशरीरत्वविशिष्टाध्यक्षसंभवाद् देहातिरिक्तात्मज्ञानशून्यानां भवदुक्तशरीरत्वज्ञानगन्धाभावात्। एतेन—लक्षणे 'यस्ये'ति षष्ठी शरीरत्वस्य चेतनप्रतियोगिकत्वस्य ज्ञानायेति—परास्तम्; उक्तदोषप्रसंगात्। न चेदं शरीरमिति ज्ञानानन्तरं कस्येत्याकांक्षानियमात् सप्रतियोगिकत्वमिति—वाच्यम्; गौरिति ज्ञानादपि कस्येत्याकांक्षादर्शनाद् गोत्वादेरपि सप्रतियोगिकत्वापत्तेः ॥

यदि तत्र लोके गवां स्वस्वामिकत्वनियमज्ञानादानुमानिकस्वत्वज्ञानात् स्वाम्याकांक्षा, तर्हि संज्ञाविशेषविशिष्टभोक्तृनियतत्वज्ञानाच्छरीरस्यापि तज्जिज्ञासा भविष्यति। अत एव कोऽयं मृत इति संज्ञाविशेषविशिष्टजिज्ञासा दृश्यते ॥

यदपि—"आत्मन आकाशस्संभूत" इति केवलात्मपदग्रहणेऽपि तदितरस्याकाशादेः शरीरत्वलाभः फलमित्युक्तम्; तदपि तुच्छम्; आत्मनः शरीरप्रतियोगित्वाभावात्, "द्युभ्वाद्यायतनं स्वशब्दात्" इत्यादौ आप्नोतीत्यात्मा इति निर्वचनात् ॥

न च—आप्तिराप्यसापेक्षेति—वाच्यम्, तावतापि त्वदुक्तशरीरत्वविशिष्टानपेक्षणात्। अत एवात्रैव स्वेतरसमस्तनियन्तृत्वेन व्याप्तिस्तस्यैव संभवतीति व्याप्तिसद्भावोपपादकं नियन्तृत्वमुक्तम्, न शरीरित्वं प्रवृत्तिनिमित्तम् ॥

यच्च—चैतन्यविशिष्टस्येत्यनेन ज्ञानातिव्याप्तिनिरासः—इति, तन्न, यदि चैतन्यविशिष्टस्येत्यनेन चैतन्यस्य नियन्तृकोटिप्रवेशान्न नियम्यकोटिप्रवेश इत्यभिप्रायः, तर्हि जीवो ब्रह्मशरीरं न स्यात्, तस्यापि स्वनियम्यकोट्यप्रवेशात् ॥

यदि च 'यस्ये'त्युक्त्वा तत्तच्चैतन्यविशिष्टविशेषग्रहणान्नाव्याप्तिरिति, तर्हि ब्रह्म प्रति जीवगतज्ञानेऽतिव्याप्तिः। चैतन्यविशिष्टं ब्रह्म प्रति जीवचैतन्यस्यापि नियम्यत्वात्। न चेष्टापत्तिः; जीवं प्रत्यपि ज्ञानस्य शरीरत्व इष्टापत्तेः सुकरत्वेन ज्ञानव्यावर्तनवैयर्थ्यात् ॥

धार्यत्वघटितद्वितीयलक्षणे च मुक्तान् प्रति ब्रह्मतज्ज्ञानादेः शरीरत्वं स्यात्; "सोऽश्नुते सर्वान् कामान् सहे"ति तत्कल्याणगुणानां मुक्तभोग्यत्वाङ्गीकारात्। द्रव्यपददाने च गुणक्रियादावव्याप्तिः प्रागेवोक्ता। 'सर्वात्मने'ति यावद्द्रव्यभावेनेत्यर्थः; त्वन्मते भावानां प्रतिक्षणपरिणामित्वेन गृहाभरणादीनामपि नियतकालीनानां तदभावकालीनेभ्यो भिन्नत्वेन तत्रातिव्याप्तेरपरि-

हारात्। आद्यसूत्रे—अचिदंशस्तु चिदंशपरिणामी, कर्मनिमित्तपरिणामभेदो "विनाशी"ति, "उत्पत्त्यसंभवात्" इत्यत्र प्रकृतिषु तत्तद्विक्रियेति च कथनात्, अन्यथा मृतदेहे नियामकाभावात्, तदभेदाज्जीववद्देहेष्वसंभवापत्तेः ॥

यच्च----जीवसमष्टिविधार्यप्रकृतौ नातिव्याप्तिः, जीवसमष्टेर्नानात्वात्—इति; तदप्ययुक्तम्, नित्यमुक्तानामेकैकं प्रति प्रकृतेश्शरीरत्वप्रसंगात्, त्वन्मते ब्रह्मलीलोपकरणत्वेन कृत्स्नं जगत्पश्यतां सर्वं सुखरूपमेवेति भूमाधिकरणोक्तेः, प्रकृतेर्मुक्तोपभोग्यत्वेन यावत्सत्त्वं तस्य धार्यत्वात्, तच्छेषत्वाच्च। उक्तं हि भूमाधिकरणे ब्रह्मणो लीलोपकरणं तदात्मकं चानुसधीयमानं जगन्निरतिशयप्रीतये भवतीति। श्रुतौ मुक्तं प्रक्रम्य "तस्य सर्वेषु लोकेषु कामचारो भवती"ति तच्छेषत्वाभिधानाच्च ॥

**नियन्तुमिति** नियमनं कार्यानुरूपबुध्युत्पादनम्, अनुमन्तृत्वम्, परिणमयितृत्वं वा' सर्वथा जीवं प्रति मनुष्यादिदेहेष्वव्याप्तिः। न ह्यचेतने देहे बुध्युत्पत्तिरस्ति, येन तत्प्रयोजको जीवः, अनुमन्ता वा स्यात्, देह उपचयापचयरूपपरिणामस्य जीवकर्तृकत्वाभावाच्च ॥

न तृतीयोऽपि। न च—देहनिष्ठचेष्टाजनकत्वम्, तच्च जिगमिषाद्यन्वयाद्यनुविधानादस्त्येवेति—वाच्यम्, स्वाप्नशरीरेष्वव्याप्तेः, स्वप्नस्य ईश्वरकर्तृकत्वात्। न च—स्वप्नेऽपि मनोवृत्तिसत्त्वात् स्वप्नदेहे प्रेरकताऽस्त्येवेति—वाच्यम्; स्वप्ने स्वदेहसृष्ट्यभावेन गजतुरगादिदर्शनस्य मनोमात्रविशिष्टजीवकर्तृकत्वात् ॥

"तदानीं असौ स आदित्यो य एष तस्मिन्मण्डले पुरुषो यश्चायं दक्षिणे अक्षन्पुरुषस्तावेतावन्योऽन्यस्मिन्प्रतिष्ठितावि"त्युपक्रम्य "देहवद्भिरवाप्यते" इत्यन्तेन ग्रन्थेन ते अक्षरचिन्तकाः पञ्चाग्निविद्योपासकाः मां मत्समानाकारमसंसारिणमात्मानं प्राप्नुवन्त्येवेत्युक्तमित्युक्तम्। त्रयोदशाध्याये चातिशयितैश्वर्या-

पेक्षाणामात्मकैवल्यप्रयात्रापेक्षाणां च भक्तियोगस्तत्तदपेक्षितसाधनमिति चोक्तम् ॥

अष्टमे कैवल्यार्थिनां "यदक्षरं वेदविदो वदन्ती"त्यादिनोक्तं ब्रह्मोपासनमपि ब्रह्मप्राप्तिसाधनमित्युक्तम्—अत्र यद्यपि पंचाग्निविद्यायाः प्रकृतिवियुक्तात्मयाथात्म्यविषयत्वं न श्रुतिलिङ्गगम्यम्; तयोरभावात् ॥

यत्तु "पंचम्यामाहुतावापः पुरुषवचसः" इति प्रकृतिस्वरूपस्य "रमणीयचरणाः" इत्यादिना मनुष्यत्वादेः कर्मकृतत्वेन, जीवस्य स्वतोऽसंसारित्वादात्मस्वरूपस्य च प्रकरणविवेचनात् "तद्य इत्थं विदुरितीत्थंशब्देन प्रकृत्यात्मविवेकस्य परामर्शेन तत एव च नियम्यत्वाद् मनस्यतिव्याप्तिः। न हि तदा जागर इव स्थूलसूक्ष्मशरीरसमुदायरूपेण प्रेर्यता, येनेष्टापादनं स्यात्, तदानी स्थूलदेहज्ञानाभावात् ॥

धारयितुमिति च किं धार्यत्वम्—आधेयत्वं वा? तत्प्रयोज्यस्थितिकत्वं वा? आद्ये अणोर्जीवस्य देहे स्थितत्वान्न तदाधेयत्वम्, मुक्तस्वीकृतनानादेहेषु च "प्रदीपवदावेशः" इत्यत्र ज्ञानव्याप्तिमात्रांगीकारे जीवशरीरयोस्संयोगस्यैवाभावान्नाधेयत्वसंभवः ॥

यदि संयोगमात्रेण, ज्ञानप्रवेशमात्रेण वाऽऽधेयत्वम्, तर्हि मुक्तान् प्रति ब्रह्मणो जीवानां च परस्परशरीरत्वप्रसंगः। किंचाधेयत्वपक्षे जीवसमष्टिविधार्यत्वेन प्रकृतावतिव्याप्तेः, गृहादावतिव्याप्तेश्च परिहारावसंगतौ; ब्रह्मण इव प्रकृतेर्गृहादेश्च जीवाधेयत्वाभावात् ॥

अन्त्ये नित्यमुक्तान् प्रति प्रकृतिब्रह्मतद्गुणेष्वतिव्याप्तिः; तेषां मुक्तभोग्यत्वेन तत्स्थितेस्तत्प्रयुक्तत्वात्, अन्यथा जीवस्य ब्रह्मशरीरत्वं न स्यात्; तत्स्थितेरपि ब्रह्मप्रयुक्तत्वाभावप्रसंगात् ॥

शक्यमिति च व्यर्थम्। अनियमनकालीनव्यक्तीनां मृतशरीरवद्गौणत्वसंभवात् ॥

किंचाऽऽधेयत्वपक्ष आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तमिति "विवक्षितगुणोपपत्तेश्चे"त्यत्रत्यभाष्यविरोधः ॥

यच्च---परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपम्, स शेषः, परश्शेषी, अन्यस्मिन् फलं जनयितुं स्वीकार्यत्वमेव यस्य स्वरूपप्रयुक्तम्, स शेष इत्यर्थः। सप्तम्या फलस्य स्वविनाश्यकर्मशेषत्वनिरासः, अन्यस्मिन् जनयितुमित्युक्तेः परगतमतिशयं स्वस्मिन् सन्निधातुमुपादेये शेषिणि नातिव्याप्तिः, तत्फलनाश्रयत्वलाभात्। फलशब्देनानुषङ्गिकफलाश्रयत्वे नासंभवशकावकाशः; भृत्यस्वीकारे मुख्यफलानाश्रयत्वात्। स्वीकर्ता च शेष, शेष्यन्यो वा, एवकारेण शेषिव्युदास.। भृत्यगतातिशयाधायकत्वेऽप्युपादातृत्वात् स्वरूपप्रयुक्तपदेनोपादेयगुणाद्याश्रये नातिव्याप्ति---इति, तत्तुच्छम्;

फलस्य पुरुषशेषत्वाभावापत्तेः। न हि फलेन पुरुषेऽन्यत्फलं जन्यते; अनुकूलज्ञानत्वस्यैव सुखत्वांगीकारात्। कर्तुश्च यागादिशेषत्वं न स्यात्; उपादातृत्वात्, मुख्यफलाश्रयत्वाच्च। जीवेषु चाव्याप्तिः; ब्रह्मणि जन्यसुखाभावेन लीलारसस्य दुर्वचत्वात्, प्रेतसंसारान्मुक्तो निरतिशयसुख्यहं भूयामित्येव जीवानामुपासनादौ प्रवृत्तेः, ब्रह्म सुखी भूयादिति कस्याप्यप्रवृत्तेः ॥

निरतिशयसुखं जीव आधातुमेव ब्रह्मण उपादेयत्वात् ब्रह्मण एव शेषत्वापत्तिः, नित्यमुक्तान् प्रत्यपि ब्रह्मप्रपंचस्य शेषत्वापत्तिश्च। तस्मान्न भवदुक्तलक्षणत्रयं युक्तम् ॥

किं तर्हि शरीरत्वमिति; चेष्टाश्रयत्वमेव। चेष्टा हि प्राणसंयोगजन्यक्रियाविशेषः। ततश्च प्राणविधार्यत्वं फलितम्। बृहदारण्यके---"अहमेवैतत्प्राणमवष्टभ्य विधारयामी"ति "यावदस्मिञ्छरीरे प्राणो वसति तावदायुरेति, यस्मिन्नुत्क्रामति इदं शरीरं पापिष्ठमि"ति च प्राणविधार्यत्वस्य, तद्वियोगे "विना-

शित्वस्य चोक्तत्वात्। त्वन्मते मुक्तब्रह्मविग्रहयोरप्राकृतरूपादिवत्प्राणेन्द्रिय-सत्त्वान्नाव्याप्तिः ॥

प्राणविधार्यत्वं च प्राणसंबन्धव्याप्यस्थितिकत्वम्। अतो न जीवे ब्रह्मणि प्रकृतौ वाऽतिव्याप्तिः। मृतशरीरे तु त्वयोक्ता गतिः। रुग्णदेहे च नाव्याप्तिः। अहल्याशिलादिदेहे च तरुगुल्मादिदेहे च तरुगुल्मादिपदे तत्संज्ञत्वादस्त्येव लिंगशरीरमिति नाव्याप्तिः। स्वाप्नशरीरेष्वपि तेत्तुल्याः प्राणाः सन्तीति नाव्याप्तिः ॥

यद्वा अत्यन्तायोगव्यवच्छेदमात्रेण विधार्यत्वयोग्यतामात्रं विवक्षितम्। ततश्च मनुष्यत्वादिकं प्राणविधार्यान्यावृत्तिसामान्यमननुगतमेव; योग्यताव-च्छेदकमुपादाय लक्षणनिर्वाहाद् न मृतशरीरे चौपचारिकत्वकल्पनं युक्तम्; त्वयापि नियन्तुं धारयितुमिति वा शक्यं इति शक्यतावच्छेदकमादायैव लक्षणस्य निर्वाह्यत्वात् सर्वशरीरानुगतस्य तस्यासंभवात्, सभवे वा तस्यैव लाघवेन शरीरलक्षणत्वापत्तेः, अननुगतस्यैवावच्छेदकस्यावश्यं प्रवेशनीयत्वात्॥

यद्वा—इन्द्रियगोलकत्वमेव शरीरत्वम्। ऐतरेयके—"आयतनं नः प्रजानीही"ति इन्द्रियैः पृष्टे, ताभ्यो गामनयदित्याद्युक्ते इन्द्रियाश्रयलक्षण-त्वस्य सूचितत्वात्, कृत्स्नं च स्थूलशरीरं लिङ्गशरीरत्वगिन्द्रियगोलकमेवेति नाव्याप्तिशङ्का ॥

यद्वा—स्वतन्त्रभोगायतनत्वं शरीरत्वम्। स्वतन्त्रत्वं चात्र भोगायत-नान्तरनिरपेक्षत्वम्। लिङ्गशरीरं तु न भोगायतनमिति तत्सापेक्षत्वेन स्थूल-शरीरे नासभवः, "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः। न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ती" त्यन्वयव्यतिरेकाभ्या भोगायतनत्वस्य सूचितत्वात् ॥

न च मुक्तशरीरलीलाविग्रहयोरव्याप्तिः; तत्रापि त्वया लीलारसानुभवा-ङ्गीकारात्। अहल्याशिलादेहेऽपि भोगोऽस्त्येव; अन्यथा पापफलत्वानुपपत्तेः।

गृहादिकं च न स्वतन्त्रभोगायतनम्, देहान्तरसापेक्षत्वात्। अत एव न पिशाचग्रस्तशरीरेऽतिव्याप्तिः। परकायस्तु प्रविष्टजीवान्तरं प्रति शरीरमेव॥

वस्तुतस्तु—शरीरत्वस्य सप्रतियोगिकत्वाभावान्न तत्र लक्षणासंगतिर्दोषाय॥

यद्वा—ज्ञानान्यत्वे सति गौणाहंपदजन्यप्रतीतिविशेष्यतायोग्यत्वं शरीरत्वम्। देहात्माभिमान एवाविद्येति त्वयाऽभ्युपगतत्वाद् न तत्र गौणत्वमयुक्तम्; ईश्वरेणाहमित्युक्ते श्रोतॄणां देहविशिष्टे ज्ञानजननाद् न तद्देहेष्वतिव्याप्तिः॥

न च—एवं त्वन्मतेऽप्यशरीरत्वमीश्वरस्य मुक्तानां च न स्यात्; लीलाविग्रहवत्त्वादिति—वाच्यम्; प्रपञ्चवत्तेषामपि श्रौतनिषेधबलेन मिथ्यात्वांगीकारात्॥

यद्वा—शरीरित्वं शरीर आत्माभिमानवत्त्वम्। तच्च सर्वजीवानामामुक्त्यहंकारकृतं त्वयाप्यंगीकृतम्। न त्वीश्वरस्य तदस्तीति तादृशशरीरित्वमेव निषिध्यते। अत एव न ह वै शरीरीत्युपपद्यते। हिरण्यगर्भस्य जीवत्वात्। इदमेव देहात्मनोरभेदज्ञानमुपजीव्य शरीरवाचकानां शरीरिणि लौकिका वैदिकाश्च व्यवहाराः प्रवृत्ताः, जलक्षीरयोरविवेकेन क्षीरशब्दवत्। अतो न शरीरवाचकानां कार्त्स्न्येन शरीरिपरत्वम्। अतो न प्रकृतिजीवयोर्ब्रह्मशरीरत्वम्; चेष्टाश्रयत्वादिनिरुक्तलक्षणाना तत्राभावात्॥

अपिच त्वया मृत्वा शीर्त्वा साधितस्य चिदचितोर्ब्रह्मशरीरत्वस्य फलं न पश्यामः॥ इत्थं हि तव मतम्—सर्वं ज्ञानं सप्रकारकमेव, इदमित्थमित्याकारगोचरत्वेनैव सर्वस्य ज्ञानस्यानुभवसिद्धत्वात्, इत्थमित्यस्य प्रकारित्वावश्यंभावात्, त्रिकोणत्वसास्नाद्याकारं विना वस्तुनोऽनुभवागोचरत्वादाकारस्यैव सामान्यशब्दार्थत्वात्। स एव चाकारो वस्तुनो वस्त्वन्तराद्भेदः, न त्वन्योन्याभावः, प्रतियोग्यज्ञानेन प्रथमज्ञाने तज्ज्ञानासंभवात्, इतरनैरपेक्ष्यस्य प्रमा-

ज्ञानेऽपि भासमानत्वाच्च, परन्तु प्रथमपिण्डज्ञाने भासमानोऽप्याकारः पिण्डान्तराज्ञानात्सामान्यत्वेन न भासते, द्वितीयादिपिण्डज्ञानेषु तु सामान्यत्वेन भासते। एतादृशप्रत्यक्षमूलकत्वाच्च प्रमित्यन्तराणां सविकल्पकत्वनियमः। तद्विषयाश्च केचित्प्रकारा एव प्रकारिभ्यः पृथक्सिद्धिस्थितिप्रतीत्यनर्हाः, यथा—'खण्डो गौः' 'शुक्लः पट' इति जातिः, गुणाश्च। कानिचिद् द्रव्याण्यपि—यथा प्रज्ञानशरीराणि गौर्मनुष्य' इति। कानिचिद् द्रव्याणि पृथक्प्रतीत्यर्हाणि-यथा दण्डः कुण्डलमिति। कालोऽपि द्रव्यविशेषणमेव; इदानीमिति विशेषणतयैव प्रतीतेः। यद्यप्यत्र गोत्वं शौक्ल्यं शरीरं प्रभा ज्ञानं काल इति स्वातंत्र्येणापि प्रयोगप्रत्ययौ दृश्येते, तथापि व्यवहाराणा व्यवहार्यपदार्थविवेचनाय निष्कर्षकशब्दैः' स्वरसतः प्रकारभूतानामेव पृथक्कृत्य व्यवहारो न स्वारसिकः। अतो जातिगुणवचनानां गौः शुक्ल इत्यादीनां प्रकारिपर्यन्तत्वेऽननुगतत्वेन जातित्वगुणत्वयोरनियामकत्वात्कर्मणा मनुष्यो देवो जात इति देवमनुष्यादिशब्दानामात्मन्यनुपचरितत्वप्रयोगाल्लाक्षणिकत्वानुपपत्तेः, जातिगुणशरीरेष्वनुगतमपृथक्सिद्धप्रकारत्वमेव तद्वाचकानां प्रकारिपर्यन्तत्वप्रयोजकं कल्प्यते। अतः शरीरवाचकानां सामानाधिकरण्यावसेयमेव शरीरिप्रकारित्वम्, न तु स्वाभाविकम्। पृथक्सिद्धानां तु प्रकारत्वं 'दण्डी' इत्यादिमत्वर्थीयप्रत्ययावसेयमेव ॥

ननु—व्यक्तिं गुणं च प्रति जातिगुणयोरिवात्मानं प्रति शरीरस्यापि नियमेन प्रकारत्वे प्रकारप्रकारिणोस्सहोपलम्भनियमो भज्येत, शरीरग्राहिणा चाक्षुषेणात्माग्रहणादिति—चेत्, न, जातिव्यक्त्योः, गुणगुणिनोश्चैकेन्द्रियग्राह्यत्वेन सहोपलम्भनियमेऽपि देहात्मनोरेकेन्द्रियग्राह्यत्वेन सहोपलम्भनियमाभावात् ॥

कुतस्तर्हि प्रकारत्वनियम इति चेत्, शरीरस्यात्मविश्लेषे विनाशादात्मैकाश्रयत्वम्, आत्मकर्मफलोपभोगार्थत्वेनात्मैकप्रयोजकत्वम्, देवो मनुष्यो जात इत्यादिप्रतीत्याऽऽत्मविशेषणत्वं च दृष्ट्वा जातिगुणवदात्मैकप्रकारत्व-

नियमस्यानुमानात्। अत आत्मैकप्रकारतैकस्वभावत्वाच्छरीरस्य स्वचक्षुषः प्रकारिग्रहणासामर्थ्येऽपि तत्समर्थो देवमनुष्यादिशब्दः तत्प्रकारकमेवात्मानं बोधयति ॥

न च—जातिर्गुण इत्यादिवच्छरीरमित्यादौ शब्दोऽपि न प्रकारत्वेन शरीरं बोधयतीति व्यभिचार इति — वाच्यम्। निष्कर्षकशब्द-व्यतिरिक्तानामेव प्रकारिपर्यन्तत्वनियमात्, एतेषां च निष्कर्षकत्वात्। ततश्च प्रागुक्तलक्षणे ब्रह्मातिरिक्तस्य कृत्स्नस्य ब्रह्मशरीरत्वाज्जीवादिशब्दा ब्रह्मरूपशरीरपर्यन्ता एव। देहादिशब्दास्तु देवत्वविशिष्टदेहविशिष्टजीवशरीर-ब्रह्मवाचका एव, इति वेदान्तश्रवणेन सर्वशब्दानां ब्रह्मणि शक्तिग्रहः पूर्यते। अत. "तत्त्वमसि" "अयमात्मा ब्रह्म" "अनेन जीवेनात्मना" "सर्वं खल्विदं ब्रह्मे" त्यादौ," त्वमात्मा जीव इत्यादिपदानां तत्तच्छरीरकब्रह्मपरत्वा-लक्षणां विनैव ब्रह्मवाचकसामानाधिकरण्यान्नाद्वैतसिद्धिः—इति ॥

अत्र ब्रूमः—यत्तावदुक्तं त्रिकोणत्वाद्याकारकमेव ज्ञानं जायत इति, तत्रेदं वक्तव्यम्—किं त्रिकोणत्वादिकं पटत्वादिव्यतिरिक्तो धर्म., उत व्यक्त्यन्तर्भूत इति। नाद्यः; अवस्थान्तरापन्नं हि कारणं कार्यमित्युच्यते, न कारणमात्रम्। अवस्थान्तरं कारणगतसंयोगविशेषाः। ते च द्वयोर्द्वयोस्तन्त्वो-र्भिन्ना एव, इति न सर्वेषां तन्तूनामेकं संस्थानत्वम्। सर्वे च तन्तवो मिळिताः पटबुद्धिविशेषविषयाः, न प्रत्येकम्। मेळनं च तावता संस्थानानामेव। न च संस्थानं मुक्त्वा तन्तुषु पटबुद्धिरस्ति। अतः सस्थानविशिष्टा एव तन्त्वादयः पटादिव्यक्तयः। अतः त्रिकोणत्वादि संस्थानं विशेषणं भवदप्यवयवानामेव भवेत्, न तु पटादेरवयविनः कार्यस्येति। अत एव पट उत्पन्नः, विनष्ट इत्यादयः प्रत्ययाः पटशब्दार्थे विशेषेऽनुपचरिताः ॥

तन्तव एव पटव्यक्तिः। संस्थानमेव पटत्वमित्यंगीकारे तु पटे तेषा-मुपचरितत्वं स्यात्। पटत्वमुत्पन्नं विनष्टमित्येव प्रत्ययो मुख्यः स्यात्। कार्य-

कारणयोरनन्तत्व च भज्येत, पटत्वे कार्यत्वाभावात्, संस्थानगुणस्य च तन्तुभ्यो भिन्नत्वात् ॥

किंचोपादानगतोत्तरावस्थैव पूर्वावस्थानाश इति मतम्। तत्र कपालावस्थायाः घटत्वरूपावस्थाविनाशत्वेऽपि न घटनाशत्वम्, मृद्द्रव्येण घटेन कपालतत्संस्थानयोरविरोधात्। अतः केवलादुपादानादवस्थाविशेषोत्पत्तिरूपोपाधिना तस्यैव व्यावहारिकभेदमाश्रित्योत्पत्तिविनाशादिकं निर्वाह्यम्, पारमार्थिकाभेदेन च कार्यकारणानन्यत्वं निर्वाह्यम्। अतः पटत्वमवस्थाविशेषापन्नतन्तुरूपपटव्यक्तौ केवलतन्तुकारणिकायां सामान्यमाश्रयणीयमिति न संस्थानेन पटस्य सप्रकारकत्वम् ॥

किंच न संस्थानमात्रं पटत्वम्; रज्ज्वादावपि सत्त्वात्, किन्तु संस्थानविशेषः। न च सकलसस्थानेष्वनुगतसामान्यं विना विशेषो निर्वक्तुं शक्यम्। सादृश्यस्याप्यनुगतत्वे तस्यैव जातित्वाद् अननुगतत्वेऽनुगतबुद्धेरनिर्वाहात् संस्थानस्यैवोत्पत्तिविनाशयोरंगीकृतत्वेनैकपटनाशे सर्वपटेषु पटत्वनाशप्रसंगात् सकलावयवसंस्थानसमुदायनिष्ठानुगतधर्मान्तराङ्गीकारे च तस्यैव जातित्वात्, प्रतीत्यनुरोधेनावस्थाविशेषापन्नतन्तुष्वेव तस्य कल्पनौचित्याच्च। जलमरीचिस्थसूक्ष्मद्रव्येषु गुणकर्मसामान्यरूपं विना नाकारोऽस्य सुनिरूपः। अतः प्राथमिकज्ञानं सर्वतो विलक्षणव्यक्तिस्वरूपं गृह्णाति, द्वितीयादिकन्तु सप्रकारकमित्यभ्युपगन्तव्यम्। अखण्डार्थनिरूपणे च निपुणतरं वक्ष्यामः ॥

एतेन—द्वितीयादिज्ञानेषु सामान्यत्वेन भासत इति—निरस्तम्; प्रतिव्यक्ति सास्नावत्त्वत्रिकोणत्वादेर्भिन्नत्वेनानुगत्यभावात्, सास्नात्वादेर्गवेतरवृत्तित्वविशिष्टसकलगोवृत्तित्वरूपगोत्वाद्भिन्नत्वात्, तस्यापि तत्तदवयवसंस्थानरूपत्वेनाननुगतत्वात् ॥

किंच 'गौरि'त्यादौ प्रत्यक्षेण गोत्वं स्वरूपेणैव भासते, न तु तत्र सामान्यत्वम्। अनेकवृत्तित्वरूपसामान्यस्यानेकानुपस्थितावग्रहणात,

विषयानवस्थापाताच्च। शाब्दज्ञानेऽपि न गोत्वे सामान्यत्वभानम्; शब्दस्य तत्राशक्तेः, अतिगुरुणि सामान्यत्वे शक्तिकल्पनायामप्रामाणिकगौरवापत्तेः॥

यदपि—जातिगुणशरीराणां पृथक्स्थितिप्रतीत्यनर्हत्वं प्रकारतैकस्वभावत्वं मत्वर्थीयलक्षणां च विनैव व्यक्तिगुणशरीरिसामानाधिकरण्यं च, दण्डादौ तु विपरीतम्—इति॥

तत्रेदं किंप्रयुक्तमिति द्रष्टव्यम्। वस्तुप्रयुक्तमिति चेत्, न; 'दण्डी पुरुषः' 'पुरुषे दण्डः' इति धीभेदेनोभयोः प्रकारत्वाप्रकारित्वानुभवात्। न च—तत्र मतुपो लोपविधानात्तथेति—वाच्यम्, शुक्लो घट इत्यादावपि गुणवचनेभ्यो मतुपो लुग्विधानतुल्यत्वात्॥

किंच प्रकारत्वम्—आश्रितत्वं वा? द्रव्यसापेक्षार्थक्रियाकारित्वं वा? विशेषणत्वं वा? नाद्य, पुरुषे दण्ड इत्यत्र दण्डेऽतिव्याप्तिः, पुरुषेऽव्याप्तिश्च, गोमान् रथी गृहीत्यादावव्याप्तिश्च॥

अत एव न द्वितीयोऽपि; प्रभाज्ञानशरीरेष्वव्याप्तेः, पुरुषादावतिव्याप्तेश्च। आश्रयनिरपेक्षार्थक्रियाकारित्वाभावस्तदर्थ इति चेत्, न; दण्डी रथी गोमान् गृहीत्यत्राव्याप्तेः, दण्डरथगोगृहाणां स्वतोऽप्यर्थक्रियाकारित्वात्। न तृतीयः; विशेषणत्वस्य व्यावर्तकत्वपरत्वेन व्यतिरेकमात्रसाधारणत्वेन विशेष्येऽव्याप्तेरनिस्तारात्। व्यावृत्तिबुद्धिप्रयोजकस्वरूपविशेषवत्त्वं तदिति चेत्, दण्डी पुरुषः पुरुषे दण्ड इत्युभयोरपि तादृशरूपत्वेन तद्दोषतादवस्थ्यात्। अतो ज्ञानाभिधानस्वरूपविशेषप्रयुक्तमेव प्रकारत्वम्, न स्वरूपकृतम्॥

तथाहि—'खण्डो गौः,' 'शुक्लो जनः' 'दण्डी' 'गोमान्' 'गृही'त्यादौ सविकल्पकं जायमानं किंचिद्वस्तु विशेष्यत्वेन, किंचिद्वस्तु विशेषणत्वेन, किंचित्संसर्गत्वेन चावगाहत इत्यानुभाविकम्। शब्दोऽपि तादृशधीजननशक्तित्वात्तथाऽभिधत्त इत्युच्यते। अत. शब्दशक्त्या ज्ञानस्य रूपविशेषेण च वस्तुप्रकारत्वादिकम्, न स्वरूपतः। ततश्च ब्रह्मण आनन्दवाक्यार्थे ब्रह्मणोऽपि विशेषणत्वेन

प्रकारत्वात्, 'गुणे शुक्लादयः पुंसी'ति केवलगुणे शुक्लादिशब्दानाम्, रूपरसादिशब्दानाम्, प्रभाज्ञानशरीरेषु प्रभाज्ञानशरीरपर्यायाणाम्, गामनयेत्यादौ शरीरवाचकानां च प्रयोगेषु गुणप्रभाज्ञानशरीराणां प्रकारत्वं विनापि प्रतीतेश्च न क्वापि प्रकारतैकस्वभावत्वम् ॥

नाप्यपृथक्सिद्धेषु मत्वर्थीयाभावनियमः, 'प्राज्ञो' 'मेधावान्' 'शिखी' 'केशी,' 'शाखी,' 'हस्ती' 'समूही'ति दर्शनात्। नापि पृथक्सिद्धेषु मतुब्नियमः, क्षीरं तक्रं मण्डमिति प्रक्षिप्तजलेऽपि प्रयोगात्, 'सिकता' 'शर्करेति' च तद्वति देशे प्रयोगात् ॥

किंच पृथक्सिद्धिस्थितिप्रतीत्यनर्हत्वमव्यवस्थितम्, त्वन्मते संस्थानगुणरूपाकृत्युत्पत्त्यैव द्रव्योत्पत्तिव्यवहारात्, जातिगुणाभ्यां पृथग्घटाद्युत्पत्तिभावात् तद्विनाशादेव द्रव्यनाशात्पृथक्स्थित्यभावात्, सर्वज्ञानानां सविकल्पकत्वांगीकारेण पृथक्प्रतीत्यभावाच्च, प्रकारिणो घटादेरपि पृथक्सिद्धिस्थितिप्रतीत्यनर्हत्वापत्तेः, दीपमणीनां कुड्याद्यन्तरितानां ग्रहणेऽपि प्रभाप्रतीतेः, प्रत्युत प्रभां विना तेषामेवाप्रतीतेः, तेषां सहोत्पत्तिस्थितिकत्वाच्च वैपरीत्यापत्तेः। निर्विकल्पकानङ्गीकारेण ज्ञानगुणं विनाप्यात्माप्रतीतेः, आत्मनोऽपि ज्ञानाद पृथक्सिद्धिस्थितिप्रतीत्यनर्हत्वापत्तेः। परकायस्य प्रविष्टजीवं प्रति पृथगुत्पत्तिसत्त्वाच्च, भगवतोऽपि चिदचिल्लीलाविग्रहत्रिपाद्विभूतीनां नित्यत्वात्सदा सर्वज्ञत्वाच्च स्वस्यापि पृथक्सिद्धिस्थितिप्रतीत्यनर्हत्वात् ॥

यत्तु—देहस्य प्रकारतैकस्वभावत्वमनुमीयते—इत्युक्तम्, तन्न; आत्मविशेषे विनश्यति तत्तदेकाश्रयमिति व्याप्तिरुपजीव्या। तत्र चाश्रयत्वं नाधारत्वम्, अणोः स्थूलदेहाधारत्वाभावात्, प्रत्युत "अनवस्थितेरसंभवाच्च नेतरः" इत्यत्र त्वया जीवस्य स्थानविशेषे वृत्तिरित्युक्तत्वाच्च, किन्तु तदधीनस्थितिकत्वम् ॥

तच्च यद् यत्संबन्धाभावव्याप्यविनाशं तत्तदधीनस्थितिकमिति फलितम्। आश्रयनाशनाश्यगुणादिकं च दृष्टान्त.। तदिदं कायव्यूहेऽणोर्जीवस्य ज्ञान-व्याप्तिमात्रांगीकाराद् जीवसंयोगाभावेऽप्यविनाशाद् व्यभिचरितम् ॥

स्वस्थितिप्रयोजकं यत्, तत्संबधनाश्यत्वं हेतुः। कायव्यूहे च ज्ञानसंबन्ध एव स्थितिप्रयोजकः, इति तन्नाशनाश्यत्वमस्त्येवेति न दोष इति चेत्, तथा सति तदधीनस्थितिकत्वरूपसाध्यघटितत्वाद् हेतोर्व्याप्त्यसिद्धि. ॥

किंच प्रतिक्षणं परिणामित्वेन देहाना भिन्नत्वात् तत्सिद्धेर्जीवसंबन्धा-प्रयोज्यत्वादसिद्धिः॥

प्रत्यभिज्ञाविरोधिविसदृशपरिणामस्यैव नाशत्वात्तस्य च जीवविश्लेष-प्रयुक्तत्वात्तादृशनाशाभावरूपस्थितेर्जीवसंबन्धप्रयुक्तत्वान्न दोष इति चेत्, न, अचिरमृतदेहे प्रत्यभिज्ञासत्त्वेन जीवविशेषे विनाशाभावात। जीवसश्लेष विश्लेषाप्रयोज्यत्वाद्देहस्थित्तिनाशयोः, स्वर्गादागतस्य राजविशेषस्य स्वशरीर-भक्षणकथनेन तद्विश्लेषस्य तन्नाशाप्रयोजकत्वात् ॥

किंच "अहमेवैतद्बाणमवष्टभ्य विधारयामीति", "यावदस्मिच्छरीरे प्राणो वसति तावदायुरि"ति श्रुतिभ्यां प्राणसंबन्धस्य शरीरस्थितिहेतुत्वावगमात्, प्राणविश्लेष एव देहनाशहेतुः, न तु जीवविश्लेषः। वस्तुतो जीवस्य स्थूलसूक्ष्म-शरीरारम्भककर्मतन्नाशाभ्यामेव तत्संश्लेषविश्लेषौ, इति देहनाशः कर्मनाशकृतः, न तु तज्जीवविश्लेषकृतः। गण्डशैलपातचूर्णीकृतदेहनाशे पूर्वं जीवविश्लेषा-भावेन कर्मनाशस्यैव प्रयोजकत्वादिति न तदेकाश्रयत्वसिद्धिः। प्रत्युत जीवस्य देहविश्लेषे ज्ञानतद्गुणोत्पत्तिविनाशाभ्यामेव द्रव्योत्पत्तिविनाशां-गीकाराज्जीवस्यैव देहाश्रयत्वम्, न तु विपरीतम्। उक्तं हि "स्वाप्ययादि"त्यत्र "आमोक्षाज्जीवस्य नामरूपविश्लेषादेव स्वव्यतिरिक्तज्ञानमि"ति। वस्तुत-स्तदेकाश्रयत्वं सप्रकारनियतम्। 'हस्ती' समूही 'शाखी' इति हस्तशाखयो-रवयवयोराश्रितत्वे तद्विश्लेषेण विनाशित्वेप्यवयविनः प्रकारत्वाभावात्, पृथक्-

सिद्धिरिथतिप्रतीत्यनर्हत्वेऽपि मत्वर्थीयप्रयोगाच्च, न सामान्याकारस्यानियम इत्युक्तमेव ॥

यदपि — आत्मगतकर्मफलभोगार्थत्वेनाऽऽत्मैकप्रयोजनकत्वम्—इति, तदपि न प्रकारत्वसाधकम्, ब्रह्मणोऽपि मुक्तानां भोगार्थत्वेन प्रकारत्वापत्तेः। शब्दादिविषयेपु व्यभिचाराच्च। पत्नीपुत्रवस्वादीनामपि भर्तृपितृस्वामिनः प्रति प्रकारत्वापत्तेश्च ॥

यदपि देवो मनुष्यो जात इत्याद्यात्मविशेषणनियमः शरीरस्य—इति, तन्न; अनात्मनि देहेऽहमित्यात्मप्रकाराभेदसंसर्गकदेहविशेष्यकधियोऽङ्गीकारात्। अहं कृशोऽहं मनुष्य इत्यादिप्रत्यक्षे, 'आत्मा वै पुत्रनामासि तज्जाया जाया भवति ताभ्यो गामानयेत्यादिषु शाब्दज्ञानेषु च शरीरस्य स्वातंत्र्येण प्रतीतेश्च विशेषणत्वे नियमाभावात्, देवो मनुष्य इत्यत्र तु देवमनुष्यशरीरयोरेककालवर्तित्वाभावेन विरुद्धत्वाद्; विशिष्टयोरभेदासंभवेन विशेषणत्यागेन लक्षणाया आवश्यकत्वाद्विशेषणासिद्धिः; अन्यथा पाकरक्ते घटे श्यामरक्तोऽयमिति प्रतीत्यापत्तिः। त्वन्मते त्रिवृत्करणप्रक्रियया नीवारेषु व्रीहिवत शुक्तौ रजतवच्च देवमनुष्यशरीरयोः पारस्परानुगमादभेदव्यवहारोपपत्तेः, "पंचम्यामाहुतावापः पुरुषवचसः" इति तदेव मनुष्यदेहभागाधिक्याद् देवो मनुष्योऽभूदिति पदद्वयप्रयोगसाफल्याच्चात्मनो विशेष्यत्वासिद्धेः विशेषणत्वप्रकारत्वयोरभेदेन साध्याविशिष्टत्वाच्च न शरीरस्यात्मैकप्रकारत्वम् ॥

अस्तु वा तथा, न तावता शरीरवाचकशब्दानां शरीरिपर्यन्तत्वनियमः। तथा हि—शरीरवाचकानां शरीरादिनिष्कर्षकशब्दव्यतिरिक्तदेवमनुष्यादिकशब्दानां देहेऽनुपचरितप्रयोगप्रत्ययदर्शनात्, मुख्यवृत्त्यैव शरीरिणि शक्तिकल्पनात्। चिदचिद्वाचकानामीश्वरे मुख्यत्वात् "अयमात्मा ब्रह्म", "अनेन जीवेनात्मनाऽनुप्रविश्य", "आत्मैवेदम्" "तत्त्वमसी," त्यादिष्वात्मजीवेदं-

त्वमादिपदानां जडजीवशरीरकब्रह्मपरत्वेन ब्रह्मादिपदसामानाधिकरण्यं लक्षणां विनैवेति न निर्विशेषाद्वैतसिद्धिरिति ॥

तत्रेदं वक्तव्यम्—शरीरवाचकानां शरीरिणि न शक्तिः, लक्षणयैवोपपत्तौ शक्तिकल्पनायां गौरवात्, अनन्यलभ्यश्शब्दार्थ इति न्यायात् ॥

न च—वाच्यार्थान्वयाद्यनुपपत्तिप्रतिसन्धानं विनापि शरीरिप्रतीतेर्न लक्षणेति—वाच्यम्, प्रचुरप्रयोगबलात्तदुपपत्ते, गवादिशब्दानामनेकेष्वर्थेषु शक्तिमत्त्वेऽपि प्रचुरप्रयोगात्साम्नादिमत एवार्थस्य शीघ्रोपस्थितिरिति त्वयापि "आकाशस्तल्लिङ्गादि"त्यत्रोक्तत्वात्। अत एव सा निरूढलक्षणेत्युच्यते। अंगीकृतं च त्वया भगवच्छब्दस्य ब्रह्मातिरिक्ते लाक्षणिकत्वम् ॥

किंच शरीरादिशब्देभ्य. शरीरिणोऽप्रतीतेर्न नियमेन शरीरिणि शक्तिः ॥

यत्तु—निष्कर्षकव्यतिरिक्तानामेव शरीरिपर्यन्तत्वनियमः, जातिर्गुण इत्यादीनामपि प्रकारपर्यन्तत्वानभ्युपगमात्—इति। किमिदं निष्कर्षकशब्दत्वम्? शरीरमात्रप्रयुक्तत्वमिति चेत्, "यः पृथिव्यां तिष्ठन्" "य आत्मनि तिष्ठन्" "भागो जीवस्स विज्ञेयः," ताभ्यो गामानयत् तेभ्योऽश्वमानयत्' इत्यदौ-केवलशरीरे प्रयुक्तानां पृथिव्यात्मगवाश्वादिशब्दानां निष्कर्षकशब्दत्वापत्तेः। आत्मन्यप्रयुक्तत्वे सतीति विशेपणीयमिति चेत्, "यस्यात्मा शरीरमि' त्यात्मन्यपि शरीरशब्दस्य प्रयुक्तत्वाद् निष्कर्षकत्वापत्तेः। शरीरविशिष्टेऽप्रयुक्तत्वे सतीति विशेषणीयम्। एतौ च गुणे, विशिष्टे च शुक्लादिशब्दवच्छरीरे शरीरविशिष्टे च प्रयुक्तौ, अतो न निष्कर्षकत्वम्। शरीरादिशब्दस्तु न शरीरविशिष्टे प्रयुक्तः, अतो निष्कर्षकत्वमिति चेत्, न शरीरादिशब्दानामपि त्वया जीवपर्यन्तत्वानंगीकारेऽपि ब्रह्मपर्यन्तत्वांगीकारेण मृष्टं वांछत्ययं देह इत्याद्यनहंकारवाक्येषु वांछाया देहप्रयुक्तत्वाभिप्रायेण लक्षणया विशिष्टात्मनि देहादिशब्दप्रयोगेण च निष्कर्षकत्वासिद्धेः ॥

किंच शरीरविशिष्टेऽप्रयुक्तत्वे सति शरीरे प्रयुक्तत्वस्य विशिष्टाभावमपेक्ष्य विशेषणस्याभावः शरीरविशिष्टे प्रयुक्तत्वमेव लाघवाद् निष्कर्षकत्वप्रयोजकम्; अधिकस्य व्यर्थत्वात। तच्छरीरत्वादि यौगिकेषु व्यभिचरितम्। भवदुक्तविशिष्टाभावोऽपि तत्र व्याभिचरित एव॥

किंच आत्मजीवादिशब्देषु हेतोरसिद्धेः, तत्सिद्धौ च तेषां ब्रह्मणि प्रयोगास्याप्रसिध्या विशेषणाभावस्य सन्दिग्धत्वात्, विशेष्यस्य सत्वाच्च ब्रह्मपर्यन्तशक्तिसिद्धौ तेषां विशिष्टप्रयुक्तत्वरूपहेतुसिद्धिः, तात्सिद्धौ च ब्रह्मणि सिद्धिरित्यन्योन्याश्रयः। तस्मान्न शरीरवाचकानां शरीरिणि शक्तौ किंचित् प्रमाणम्॥

किंच शरीरविशिष्ट एव शक्तिः, उत स्वातंत्र्येण शरीरेऽपि शक्त्यन्तरम्? आद्ये सर्वशब्दानां किंचिज्जीवविशिष्टब्रह्मबोधकत्वाद् दण्डिनमानयेत्यादौ केवलदण्डस्य पदार्थैकदेशतयाऽऽनयनान्वयादर्शनात्, गामानयेत्यादावपि गोशरीरविशिष्टजीवशरीरकब्रह्मण आनयनान्वयायोग्यतया वाक्यार्थबोधानुदयात्, सर्वव्यवहारविलोपापत्ति॥

न च दीपानयने पात्रानयनवदुपपत्तिः, तत्र विशेष्यस्य देशान्तरप्रापणरूपाऽऽनयनान्वययोग्यत्वाद् अन्वयबोधे श्रुतार्थापत्त्या पात्रानयनस्याक्षेपसंभवात, ब्रह्मणो विभुत्वेनानयनायोग्यत्वेन वाक्यार्थबोधस्यानुदयात्॥

न च—वेदान्तश्रवणात्प्राग् लौकिकव्यवहारेण विशेषणभूतगवादिमात्रशक्तिग्रहणान्न व्यवहारविलोप इति—वाच्यम्, श्रुतवेदान्तानां भवदीयानां शक्तिग्रहपूरणेऽपि तादृशप्रयोगप्रत्ययानुवृत्तिदर्शनात्, शक्तिभ्रमेण लौकिकव्यवहारोपपादनेऽपि प्रमाणशिखामणेर्वेदस्य वास्तवशक्तिलक्षणादिमूलकार्थ एव तात्पर्यात्, शक्तिभ्रममूलके च तात्पर्याभावेनाप्रामाण्यापत्तेश्च। पुत्रपशुस्वर्गव्रीहिदधिपयःप्रभृतिब्रह्मपर्यन्तशक्तपदसंदृब्धकर्मोपासनापरवाक्यानां "स्वर्गकामो यजेत" "पशुना यजेत" इत्यादीनां तत्तत्कर्मोपासनाविधिपरत्वासंभवेन तद्बोधा-

जननात्, तद्भ्रमजननाद्वा तत्तदनुष्ठानासिद्धेः। सिद्धावप्यविहितानुष्ठानत्वेन फलजनकत्वाभावात् सकलवैदिकमार्गविलोपापत्तिः, सर्ववेदाप्रामाण्यं चापतेत् ॥

एतेन—"चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" इति सूत्रव्याख्यानम्—परास्तम् ॥

तद्धि एवम्—नन्वेवं सर्वशब्दानां ब्रह्मवाचित्वे सति तैस्तैश्शब्दैः तत्तद्वस्तुव्यपदेशो व्युत्पत्तिसिद्धोऽवरुध्येतेत्याशंक्य, समस्तवस्तुप्रकारिणो ब्रह्मणः प्रकारभूतवस्तुग्राहिप्रत्यक्षादिप्रमाणाविषयत्वादित्युपक्रम्य लोके तत्तद्वस्तुमात्रे वाच्ये, ते ते शब्दाः भङ्क्त्वा भक्त्या व्यपदिश्यन्ते तेन तत्परिहारतया व्याख्यातम् ॥

तत्र भञ्जनं नाम विशिष्टविषयशक्तेरेव विशेषणाविषयमात्रत्वभ्रमो वा, शक्त्यन्तरं वा? शक्त्यन्तर्भ्रमो वा? लक्षणा वा? विशिष्टशक्तस्यैव विषयमात्रे तात्पर्यं वा?

नाद्यः, उक्तरीत्या शरीरवाचकत्वहेतुना विशिष्टविषयशक्तेरसिध्या निष्परिपन्थिवृद्धव्यवहारेण विशेषणमात्रशक्तिसिद्धेर्भ्रमत्वाभावात्। व्याकरणकोशाप्तवाक्यादीवा शक्तिग्रहहेतुत्वस्यैव सर्वसंमतत्वात् ॥

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम् ॥

इत्यादिना लोकप्रसिद्धसुखत्वादिपुरस्कारेण स्वर्गादिपदशक्तेरेव ग्रहात्, सर्वप्रमाणविरुद्धस्य शरीरवाचकत्वहेतुनाऽनुमानस्योपजीव्यविरोधेनाभासत्वात् ॥

न च—"सर्वे वेदा यत्पदमामनन्ती"ति श्रुत्यैव सर्वशब्दानां ब्रह्मणि शक्तिस्सिद्धेति—वाच्यम्; वेदशब्दस्याक्षरराशिविशेषे "मन्त्रब्राह्मणयोर्वेदनामधेयमि"ति रूढिप्रतिपादनात्, अन्यथा वेदाधिकरणविरोधात्, वेदावयवपरत्वे च लक्षणाप्रसंगात्, सर्वेषां वेदान्तानां ब्रह्मणि महातात्पर्यप्रतिपादनपर-

त्वात्, तस्य वाक्यस्य प्रतिपदं ब्रह्मणि शक्तिग्राहकत्वाभावात्, त्वदीयशरीरलक्षणे द्रव्यपददानेन जातिगुणक्रियाणां शरीरत्वाभावात्तद्वाचिनां ब्रह्मणि शक्त्यनभ्युपगमाच्च। वेदोदितानां च सर्वेषां धर्माधर्मविधिनिषेधवाक्यानां साक्षात्परंपरया वा मनोनैर्मल्यादिद्वारा ब्रह्मविद्योपायत्वेन ब्रह्मणि महातात्पर्योपपत्तेरस्य वाक्यस्य चरितार्थत्वात् सर्वप्रमाणसिद्धस्योपजीव्यस्य तत्तदर्थपर्यवसन्नशक्तिग्रहस्य भ्रमत्वकल्पनमप्रामाणिकम्। एतेन—द्वितीयतृतीयपक्षावपि— प्रत्युक्तौ॥

न चतुर्थः; सर्वेषां शब्दानां ब्रह्मण्यप्रामाणिकानन्तशक्तिकल्पनागौरवमङ्गीकृत्य ब्रह्मेतरतत्तदर्थपरानन्तवाक्येषु ब्रह्मान्वयाद्यनुपपत्तिप्रतिसन्धानं विनापि लक्षणाकल्पनापेक्षया क्वाचित्केषु शरीरिपदनिर्देशेषु शरीरवाचिनां लक्षणाकल्पनस्यैवोचितत्वात्, 'प्रक्षाळनाद्धी'ति'न्यायात्। तात्पर्याभावे च विशेषणमात्रे तात्पर्यादन्वयबोधो भवति। प्रकृते त्वधीतवेदान्तस्य विशिष्टप्रतीतिरेव नास्तीति वैषम्यम्॥

अपिच स्वर्गिणं ध्वस्तं जानीहीत्यादौ विशेषणे लक्षणैव; "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः" इति विभक्त्यर्थस्य प्रकृत्यर्थान्वयनियमात्, 'गामानये'त्यादौ गोत्व आनयनकर्मत्वानन्वयवद् ध्वंसप्रतियोगिनि स्वर्गे कर्मत्वानन्वयापत्त्या स्वर्गे भागत्यागलक्षणाङ्गीकार्या। वस्तुतस्तु— विशेषणोपहिते विशेष्ये विशेषणनिष्ठधर्ममारोप्य विशेष्यस्यैव शब्दोऽन्वयं बोधयति, केवलविशेष्यस्यैवान्वययोग्यत्वात्। प्राप्ताप्राप्तविवेकेन विशेषणमात्रान्वये बाधस्तु श्रुतार्थापत्तिलभ्यो वा, मानसो वा। एवं "दण्डी प्रैषवानन्वाहे"त्यादिप्राप्तदण्डविशेष्यकहोत्रनुवचनं विशेषणे व्याहतमिति दिक्॥

अपिच सर्वशब्दानां ब्रह्मवाचित्वे "मनो ब्रह्म" "वाचं धेनुम्" "आदित्यो ब्रह्मे"त्यादौ मनोवागादित्यादिशब्दानां तच्छरीरब्रह्मपरत्वात्तेषां वाक्यानां मुख्यब्रह्मोपासनाविधिपरत्वाद् ब्रह्माद्याभासभावप्रतीकोपासनात्वाभावे'

"ब्रह्मदृष्टिरुत्कर्षात्", "आदित्यादिमतयश्चाङ्ग उपपत्तेः" "अप्रतीकालम्बनान्नयतीति बादरायणः" इत्याद्यधिकरणानि निर्विषयाणि स्युः ॥

किंच देवो मनुष्यो जात इत्यत्र जातपदमहिम्ना पूर्वं देवः, इदानी मनुष्य इति प्रतीतेः देवशरीरकत्वस्यातिरिक्तत्वेनोपलक्षणत्वाद् उपलक्ष्यविशेष्यैक्याद्भेदबोधसंभवेऽपि तत्त्वमसीत्यत्र न शरीरशरीरिभावेनाभेदबोधसभवः, येन वाक्यस्य विशिष्टाद्वैतपरत्वादखण्डाद्वैतपरत्वं न स्यात्। अतोऽतीव निष्फलस्तव प्रयासः ॥

अन्तर्यामिब्राह्मणेऽपि "यस्य पृथिवी शरीरमि"त्यादौ शरीरशरीरिणौ पृथक् सिद्धावेव निर्दिश्येते। विना कार्यकारणभावं शरीरशरीरिभावमात्रेण कुत्र वा लोके वेदे वा सामानाधिकरण्यं दृश्यते? स्थूलोऽहमिति सामानाधिकरण्यमत्र मत्वर्थीयप्रत्ययान्ततयेति द्वैतिनः, अन्ये तु केचन गौणं सामानाधिकरण्यमिति। अद्वैतिनोऽधिष्ठानारोप्यभावनिबन्धनं तदिति। कुत्र वाऽन्यत्रापृथक्सिद्धिनिबन्धनं सामानाधिकरण्यं प्रसिद्धम्? अत एवामोदो वदति "नवीनमिदं कल्पनमिति" ॥

भगवतः सर्वत्रानुप्रवेशनिबन्धनं यदि शरीरित्वम्, तदात्मत्वेन वा, तर्हि पूर्वोदाहृतविष्णुपुराणवचनात् प्रधानपुरुषयोः सृष्टेः परमेव स्वेच्छयाऽनुप्रवेशः श्रावितः, इति सृष्टेः पूर्वं ब्रह्मणः सूक्ष्मचिच्छरीरकतावादः कथमुपपद्यते? कुमारिलपादाशयस्तु परीक्षित एव ॥

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" "ऋतं पिबन्तौ सुकृतस्य लोके गुहा प्रविष्टौ परमे परार्ध्ये" इत्यादौ जीवपरमात्मनोरुभयोरपि जडदेहशरीरित्वं प्रतिपादितम्, न तु जीवशरीरकत्वं परमात्मनः। सर्वथा तु "तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादावविद्यापरिणामेषु सच्चिद्रूपेणानुवृत्तिरेवाम्नायते, न शरीरशरीरिभावोऽपृथक्सिद्धिनिबन्धनः; कार्यकारणभावनिबन्धनत्वात् तत्र तादात्म्यश्रुतेः ॥

एतेन—

"ज्योतीषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।
नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥
ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥"
यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥
यच्चान्यथात्वं द्विज भाति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् ।"

इति विष्णुपुराणवचनान्यपि कार्यकारणभावनिबन्धनं तादात्म्यमेव बोधयन्ति, अधिष्ठानारोप्यभावनिबन्धनमेव वा । न ह्यत्र शरीरशरीरिभावनिबन्धनं सामानाधिकरण्यम्, तद्गमकं किमपि वा श्रूयते । यत्तु—

"यदम्बु वैष्णवः कायः ततो विप्र वसुन्धरा ।
पद्माकारा समुद्भूता पर्वताद्र्याादिसंयुता ॥"

इत्यत्र—अम्बु वैष्णवः कायः इत्युक्तम्, अत्र कायशब्दार्थः स्वरूपम्; कारणस्वरूपत्वात् कार्यस्य । न तु जलं भगवतः शरीरं नियम्यत्वनिबन्धनापृथक्सिद्धम्, वैष्णव इति पृथक् सिद्धतया निर्देशात् । अत्र 'यदम्बु' इत्यत्र यदित्यनुवादाद् यद् मत्त उद्भूतमाकाशम्, ततो वायुः, ततस्तेजः, तत उत्पन्नमिति कार्यकारणभावप्रयुक्तमेव वैष्णवत्वमिति प्रसिद्धमत्र यच्छब्दार्थ. ॥

अत एव तदनन्तरवाक्ये—ततो विप्र वसुन्धरेति जलादुत्पत्तिरेव वसुन्धरायाः प्रवर्तिता । आकाशादित उत्पन्नमपि ब्रह्मत उत्पन्नमिति हि सिद्धान्तः । तथा च सूत्रम्—"तदभिध्यानादेव तु तल्लिङ्गात् सः" इति । इदं नाम्बु पृथिवीमात्रस्य, किन्तु सर्वस्यापि प्रपञ्चस्योपलक्षणमिति प्रतिपादनार्थम्—"ज्योतीषि विष्णुरि"ति । न चात्र शरीरशरीरिभावनिबन्धनं

सामानाधिकरण्यम्, किन्तु सर्वस्य भगवत उत्पन्नत्वात् कार्यकारणभावनिबन्धनमेव सामानाधिकरण्यम्। इदं विशदयितुमेव द्वितीयः श्लोकः, यत्र सर्वस्याशेषस्य प्रपञ्चस्याज्ञातस्वरूपाद् ब्रह्मणो विवर्तविधया, अधिष्ठानारोप्यभावविधया वा कार्यत्वं बोध्यते—वसुन्धरा पद्माकारा याऽम्बुनो जाता पर्वताब्ध्यादिसंयुता, तस्या एव परम्परया सर्वकार्यविशिष्टायाः पुनरप्यनुकर्षणेन—

"ज्ञानस्वरूपी भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि॥"

इति शैलाब्धिधरादीनां यत् कार्यत्वमुपन्यस्तम्, तज्ज्ञानस्वरूपपरमात्मन्यध्यासमात्रेण। अतोऽधिष्ठानव्यतिरेकेणारोपितस्य वस्तुतः स्वरूपतोऽभावादधिष्ठानस्वरूपमेवाम्बुप्रभृतीनां स्वरूपमित्यत्र तत्त्वम्। अत एव—कार्यत्वेनोपन्यस्तं सर्वं ब्रह्मणि कल्पिततया ब्रह्मोपादानकम्, न परमार्थम्, किन्तु मिथ्यैवेति बोधनार्थम्—"अशेषमूर्तिर्न वस्तुभूत" इत्युक्तम्॥

अत्र विज्ञानविजृम्भितत्वं विज्ञानस्वरूपविवर्तकार्यत्वमेव। अत्र विज्ञानशब्देन कारणस्याविद्योपहितस्य विवक्षणाद् आविद्यकवृत्तिपरत्वेऽपि मिथ्यात्वमनपोहम्। न तु विज्ञानशब्दोऽत्र सङ्कल्पपरः, कारणस्य ब्रह्मणो वीक्षणातिरिक्तसकल्पाभावात्। यदि त्वीक्षणमेव—"तदैक्षत बहु स्यां प्रजायेये"त्यत्र सङ्कल्पपदार्थः, तर्हीष्टापत्तिः। आमोदेन तु—ईक्षणसङ्कल्पयोरिव सृष्टिकाले भिन्नयोर्नावस्थानमिति सूचयितुं विज्ञानपदस्यार्थान्तरमुक्तम्। ईक्षणार्थत्वे तु तस्याविद्यापरिणामत्वात् परमात्मोपाध्यविद्याया एव वृत्तिद्वारा तत्र हेतुत्वमभिप्रेत्य तु विज्ञानपदमज्ञानपरं व्याख्यातम्॥

ज्ञानसङ्कल्पौ तु भिन्नौ; "सङ्कल्पः कर्म मानस"मिति तस्य पुरुषतन्त्रक्रियापरत्वात्, ज्ञानस्य च वस्तुतन्त्रत्वात्। अत एव न वस्तुभूतं सर्वं जगत्। इयं हि दशाऽखण्डाकारवृत्तिप्रयुक्तावरणनिवृत्तावनावृतचिन्मात्रतायाम्। तदा

हि सर्वाणि मनोरथान्युच्चावचानि न भवन्ति; बाधितत्वादिति निरूपणार्थं तुरीयश्लोकः—" यदा तु शुद्धं निजरूपि सर्वम्" इत्यादि। अस्यार्थः—सर्वात्मतया प्रतीयमानमावृतं ब्रह्मानावृतसंविन्मात्रं यदा भवति, तदा तद्व्यतिरिक्तसर्वाभाव इति। ततश्च सर्वोऽप्ययं सन्दर्भः पौर्वापर्येण समालोच्यमानोऽद्वैतसिद्धान्तस्यैव विष्णुपुराणेनोपबृंह्यते॥

अत्र चिदचिच्छरीरकता न बोध्यते। तत्र—" यदस्ति नास्ती"ति भावाभावात्मकं जगदेव गोचरयति, न तु चिदचिती; अचितोऽस्तित्वेन नास्तिपदार्थत्वाभावात्, अन्यथा तेनैव सर्वशरीरकत्वे विवक्षिते—" यदम्बु कायः" इत्यादिना, भावाभावात्मकत्वेनोपसंहार एव प्रपञ्चितः स्यात्॥

यदि—अस्तिनास्तिपदार्थविवरणार्थमेव—

" ज्ञानस्वरूपी भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः"

इति, तर्हि पूर्वोपात्ताशेषमूर्तेर्ज्योतिरादिरूपस्य भवदभिमतपरमात्मशरीरस्यावस्तुसत्त्वप्रतिपादनं कथं न विरुद्धम्? तत्र यदि देवमनुष्याद्याकारमात्रमशेषमूर्तिपदार्थः, तर्हि सङ्कुचितार्थवर्णनं दूषणम्। एवमेव न वस्तुषु वस्तुभेदा इत्यत्रापि। न चात्रास्ति किमपि प्रमाणं परकीयां कल्पनां विहाय। इदं सर्वमभिप्रेत्यैवामोदो वदति " सर्वमिदं नवीनं कल्पन"मिति॥

वस्तुतस्तु—" ज्ञानस्वरूपं निजरूपि सर्वम्" इत्यस्तिपदार्थोऽपि नास्तिपदार्थमात्रम्। अथ यद्युपलक्षणम्, तर्हि नास्तिपदार्थो भवदुक्तो नोचितः, किन्तु देवाद्याकारतामात्रम्, नास्तिपदार्थस्तु तत्र परमात्मैव, न जीवात्मेति कथम्? अतोऽस्ति च नास्ति चेत्यनेन न चिदचितोः शरीरयोरत्र ग्रहणम्। अतोऽस्ति नास्तीति भावाभावयोरेव ग्रहणम्। न चाभावोऽपि परमात्मनः शरीरम्, देवाद्याकारता वा?

अतः सिद्धं विष्णुपुराणोपक्रमे श्रुतं " जगच्च सः" इति न शरीरशरीरिभावनिबन्धनं सामानाधिकरण्यमिति, यन्मयमिति च यदुपादानकमिति

तत्र यन्मयमिति यदि नोपादानप्रश्नः, किन्तु शरीरिप्रश्न एव, तर्हि किमिति—समाधानावसरेऽपि तन्मयं जगदिति मयडन्तपदस्यैव न प्रयोगः ? अतो विष्णु-पुराणस्वारस्यमद्वैतमत एवेति नियतमूरीकर्तव्यम् ॥

तत्र विनोपादानोपादेयभाव यदि क्वचन तादात्म्यं निर्दिष्टं स्यात्, विना वाऽत्यन्ताभेदम् शरीरशरीरिभावमात्रविवक्षया, शरीरपदाप्रयोगेण च, तदा शरीरशरीरिभावनिबन्धनं सामानाधिकरण्यं प्रामाणिकम्, न तु नवीनं कल्पनं स्यात् । अनुपदसंगृहीतविष्णुपुराणवचनानन्तरश्लोका प्रपञ्चमिथ्यात्व-निरूपणद्वारा सामानाधिकरण्यं जगद्ब्रह्मणोर्बाधायां सामानाधिकरण्यमेवेति विशदयन्ति । ते यथा—

" वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् ।
यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् ॥

मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः ।
जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥

तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित्कदाचिद् द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥

ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥

सद्भावमेवं भवतो मयोक्तं ज्ञानं परं सत्यमसत्यमन्यत् ।
एतत्तु यत् संव्यवहारभूतं तथापि चोक्तं भुवनाश्रितं तत् ॥ "

इति । अत्र जगतोऽसत्यत्वं व्यावहारिकत्वं च बोध्यते । एतदेवाभिप्रेत्य सत्तात्रैविध्यवादः । एतेन—

" तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुतः ।
इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः ॥

रूपस्पर्शादयो येऽपि महाभूतगुणाः स्मृताः ।
प्रत्येकमात्मनां तेऽपि देहाः सम्भोगहेतवः ॥

शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते ।
तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥

तथर्ग्वेदयो वेदाः प्रोक्तास्तेऽपि पृथक् पृथक् ।
भोग्यत्वेनात्मनां तेऽपि चैतन्यानुगताः सदा ॥"

इति भट्टपादोद्धृता श्लोका अपि व्याख्याताः ॥

अत्र "व्योमशरीरः" इति "आकाशशरीरं ब्रह्मे"त्ति वाक्यार्थानुवाद-मात्रम् । तेन चाकाशस्वरूपत्वं व्यापकत्वेनावगम्यते, तदुपाधिकत्वेन वा । अतः सर्वत्र परमात्मविशेषणतया शरीरपदं तदुपाधित्वमात्राभिप्रायं सत् तत्तदवच्छिन्नत्वमात्रं परमात्मनो गमयति । अधिकं व्यक्तीकृतमधस्तात् । न त्वाकाशं शरीरमिति सामानाधिकरण्यम् । तत्र हि वेदा अपि चैतन्यवत्त्वेन चेतनाः, यथाऽन्ये पृथिव्यादयोऽपि, इति यथा पृथिव्यादिमहाभूतारब्धदेहा-धिष्ठितानामात्मनां चैतन्याख्यज्ञानवत्त्वेन तत्पूर्विका विवक्षा, यथा वा—"तेजोऽ-ब्रवीत्" आपोऽब्रुवन् "वनस्पतय सत्रमासत," तथर्ग्वेदादिदेहाधिष्ठिता-नामात्मनां चैतन्याख्यज्ञानवत्त्वेन तत्पूर्विका विवक्षा सम्भवति । नित्यानामपि वेदानामाकाशवत् चैतन्याधिष्ठितत्त्वं न विरुध्यत इति व्योमदृष्टान्तेनोपपाद-यितुं प्रवृत्ताः श्लोकाः—तथा "व्योमशरीरोऽपि" इत्यादयः ॥

इदं हि प्रकरणं सर्वेषां चेतनत्वम्, अचेतनः पदार्थः कोऽपि नास्तीति पक्षमाश्रित्य, यदेव नविलक्षणत्वाधिकरणे "ननु चेतनत्वमपि क्वचिदचेतनत्वा-भिमतानां श्रूयते—यथा "मृदब्रवीत्, आपोऽब्रुवन्, तत्तेज ऐक्षत, ता आप ऐक्षन्त" इत्यादयः । योऽपि कश्चिदाचक्षीत—श्रुत्वा जगतश्चेतनप्रकृतिकतां तद्बलेनैव समस्तं जगच्चेतनमवगमयिष्यामि ; प्रकृतिरूपस्य विकारेऽन्वयदर्शनात् ।

अविभावनं च चैतन्यस्य परिणामविशेषात्। तत एव—'विज्ञानं चाविज्ञानञ्चे' ति विभागोऽपीत्यादिना "अभिभानिव्यपदेशस्तु विशेषानुगतिभ्याम्" इति सूत्रावतारिकारूपेणोपक्षिप्तम्, न तु पराभिमतशरीरशरीरिभावाभिप्रायेण ॥

एतन्मतरीत्या —'खं ब्रह्मे' ति सामानाधिकरण्यमप्याकाशस्यैव ब्रह्मशब्दसामानाधिकरण्यात् चेतनत्वाभिप्रायेण, अथवा आकाशस्यैव "मनो ब्रह्मेत्युपासीते" त्यादिवत् प्रतीकाभिप्रायेण। यदपि पूर्वपक्षतया 'श्रुतोपनिषत्कव्यपदेशात्' इति सूत्रभाष्यभामत्यादौ विस्तृतम्, इति पराभिमतशरीरशरीरिभावो नात्र विवक्षितः। अत एव—'द्वा सुपर्णे'ति श्रुतेरत्र प्रमाणतयोपन्यासः ॥

न्यायसुधा हि तत्रैकस्य शरीरस्यात्मद्वयाधिष्ठितत्त्वं विशदयति। वेदाधिष्ठातृत्वेन परमात्मनोऽत्र न विवक्षा, यतो न्यायसुधा पौनःपुन्येन वेदाधिष्ठितानामत्मनामिति बहुवचनमत्र प्रयुङ्क्ते, न त्वेकत्र वेदमात्रे, इति पृथिव्यादि महाभूतारब्धपराभिमतशरीरशरीरभावविवक्षायां नेदमुपपद्यते ॥

"खं ब्रह्मे"त्यत्र हि सिद्धान्त उपचारात् खशब्दस्य ब्रह्मपरत्वम्, न तु भूताकाशपरत्वमिति हि भाष्यम् ॥

एतेन—भट्टकुमारिलपादैर्ब्रह्मैकत्वाधिकरणे-"तथा व्योमशरीरोऽपी" त्याद्युपन्यस्य करचरणादिमत्त्वम्, इन्द्रिआश्रयत्वमित्यपि न लक्षणमित्यभिप्रायेण सर्वस्यापि पदार्थस्य परमात्मशरीरत्वं वेदे श्रुतानां "खं ब्रह्मे"त्यादि समानाधिकरणवाक्यानामुक्तशरीरशरीरिभावनिबन्धनत्वं च विस्पष्टमेवोद्घुष्टमिति—परास्तम्;

पूर्वोक्तदिशा सर्वस्य चेतनत्वपरताया एव तत्रोपपादनेन तन्मतरीत्या खं ब्रह्मेत्यादीनामाकाशादिचेतनतायामेव तात्पर्येण पराभिमतेऽर्थे तात्पर्याभावेन, प्रत्युत व्याघातेनासदनुवादत्वेन चानादरणीयत्वात्। अयमेव न्यायस्तदुद्धृतन्यायसुधाभागेऽपि, इति तद्दर्शिनां प्रत्यक्षमेव। नियामकत्वमात्रेणात्मत्वमत्रोपन्य-

स्तम्, किन्तु तत् तदधिष्ठानचिन्मात्राभिप्रायेण। व्यक्तं चैतत् न्यायसुधायाम्, इति कुमारिलपादाभिमतोऽपि स्वाभिमतः शरीरशरीरिभावो जागद्ब्रह्मणोरिति वर्णनं व्यामोहनमेव। कुमारिलश्लोका इमे प्रौढिवादमात्रमिति केचन, वयं तु पश्यामः, न प्रौढिवादमात्रेणापि न तस्य पक्षरयोत्थितिरपीति। या तु नविलक्षणत्वाधिकरणेऽभिमानिव्यपदेशस्तु इति सूत्रावतरणिका सर्वचेतनत्ववादाभिप्राया, तन्निरासपरं तत्सूत्रमिति हि श्रीभाष्येऽपि व्यक्तम्। सर्वचेतनत्ववादोऽन्यः, परमात्मसर्वशरीरकत्ववादोऽन्यः। आद्य अनेकात्मत्वम्, द्वितीये तदेकत्वम्। कुमारिलाशय आत्मानेकत्ववादमाश्रित्येति न्यायसुधाऽऽत्मनामिति बहुवचनप्रयोगेण सूचयति। खं ब्रह्मेत्यत्र व्योमान्तसवितृमण्डले परमात्मोपासनवद् आकाशप्रतीकनयोपासनापरत्वेऽपि न शरीरशरीरिभावविवक्षा पराभिमता न्यायसुधादृष्ट्या सेत्स्यति॥

इयान् विशेषः—मीमांसकदृष्ट्या सर्वत्र ब्रह्मणः प्रतीकोपासनमेव, ततो वाचो धेनुत्वमिव सर्वत्र ब्रह्म कल्पितम्, न वस्तुसदिति। अद्वैतिव्यतिरिक्तवैदिकमते तूपास्यमपि ब्रह्म सत्यमेव, तस्य न प्रतीकोपासनमात्रम्, किन्त्वहंग्रहोपासनमपि, यत्—सम्यगाचरितं भगवत्प्रसादद्वारा मोक्षं साधयतीति। अद्वैतमते त्वद्वितीयब्रह्मसाक्षात्कार उत्पन्नमात्रः पटुतरत्वादिविशेषणविशिष्टो विनाऽनुष्ठानं मोक्षं जनयति। उक्तं च भाष्ये—'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतयो ब्रह्मविद्यानन्तरं सद्य एव मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ती"ति। अत्र कर्तव्यान्तरनिषेधोऽनुष्ठाननिषेधाभिप्रायेण, अदृष्टविधया, भगवत्प्रसादद्वारेण वा तस्य मोक्षोपयोगिनिषेधाभिप्रायेण च॥

यत्तु—भगवद्रामानुजसिद्धान्तोऽपि स एव—इति,

यद्येवमेव, तर्हि स्वागतम्। यदि ब्रह्मविद्यास्वरूपे विप्रतिपत्तिः, तर्हि न स एव भगवद्रामानुजसिद्धान्तः। यदा ब्रह्मविद्यास्वरूपे विप्रतिपत्तिः, तदा तस्य मोक्षोपयोगप्रकारविषये, मोक्षस्वरूपे, मुक्तात्मस्वरूपे सर्वत्र विप्रतिपत्तिः,

इति कथं भगवत्पादानां सिद्धान्त एव भगवद्रामानुजानामपि सिद्धान्तः ? मुख्या विप्रतिपत्तिस्तु प्रपञ्चपारमार्थिकत्वतदभावयोरुभयोरपि, साक्षात्कृतब्रह्मतत्त्वानां कर्तव्यान्तरसत्त्वासत्त्वयोरपरा तु निगदव्याख्याता ॥

तत्र साक्षात्कृतब्रह्मणामपि जीवन्मुक्तानां प्रारब्धवशेन व्यवहरतां स्थितप्रज्ञानां गुणातीतानां वा व्युत्थानदशायां ग्रन्थग्रथन-तत्त्वोपदेश-निदिध्यासनवृत्त्यात्मकब्रह्मसाक्षात्कारपाटवार्थप्रयत्नादिकं सर्वमविप्रतिपन्नम् । तत्र शिष्यानुग्रहार्थं ग्रन्थग्रथनतत्त्वोपदेशौ, निदिध्यासनसाक्षात्कारपाटवार्थप्रयासस्तूत्पन्नस्य साक्षात्कारस्य सुदृढं रक्षणार्थम् । न ह्यध्रुवैः प्राप्यते हि ध्रुवम् ' इति यज्ञादिकर्माभिप्रायम्, न तु स्वसाधननिषेधाभिप्रायम् । वृत्तिज्ञानं त्वज्ञाननिवृत्तिमध्रुवामेव प्रथमं जनयति । तदप्यनावृतसंविन्मात्रभावार्थम् । न हि मोक्षः प्राप्तव्योऽपि ॥

चिन्मात्रमुपहितरूपेण साक्षात्कारदशायां प्राप्तम्, उपाधिसंबन्धाच्च स्वरूपमात्रं प्राप्तमप्यप्राप्तवदवभासते । तत्राप्राप्तत्वभ्रमनिवृत्तिरेव प्राप्या, न तु स्वरूपमात्रमिति तु निष्कर्षः । कर्तव्यान्तरनिषेधो ज्ञानांशे कर्तव्यान्तरानुष्ठानं कर्मोपासनयोरिव नास्तीत्यभिप्रायेण, न त्वज्ञानदशायां कर्मोपासनादिकर्तव्यान्तराभिप्रायेण । वाक्यजन्यापरोक्षसाक्षात्कारस्य स्वकार्याविद्यानिवृत्त्याख्यफलनिष्पत्तये साक्षात्कारातिरिक्तं किमपि नापेक्ष्यते । वाक्यार्थज्ञानस्य वृत्त्यतिरिक्तस्योपासनस्यानुष्ठानं न कर्तव्यमित्येवार्थ. । न चाज्ञानदशाया प्रपञ्चमिथ्यात्वनिर्णय. कर्तृत्वाभिमाननिवृत्तिपर्यवसायी कस्यापि भवति, इति कर्मोपासनाविधीना सार्थक्यम् ॥

अत एवाऽऽत्मविज्ञानार्थं साधनचतुष्टयसम्पन्नस्य गुरूपसदनमपि न विरुध्यते । गुरूपसदनाधिकारी तु साधनचतुष्टयसम्पन्न एव । प्राप्तकर्मावबोधमात्रस्य गुरूपसन्नस्य तु श्रवणमनननिदिध्यासनादिना निर्विशेषब्रह्मसाक्षात्कारः, तेनानावृतचिन्मात्रता च स्वयं सिध्यति ॥

तत्र निर्विशेषमेव ब्रह्म मुख्यार्थः, ब्रह्म सत्यम्, जगन्मिथ्या" इति वेदान्तडण्डिमः। तत्र निर्विशेषात्मतत्त्वसाक्षात्कारोपयोगितयाऽद्वैत-विशिष्टाद्वैतशुद्धाद्वैतादिसर्वशैवश्रीवैष्णवगाणपत्यशाक्तादिसिद्धान्तप्रपञ्चप्रदर्शितेन, श्रीशङ्करभगवत्पादप्रवर्तितेन वा येन केनापि प्रकारेण यथाधिकारं कर्मयोगभक्तियोगज्ञानयोगेष्वेकस्य, द्वयोः, क्रमेण त्रयाणां वाऽनुष्ठानेन शङ्करावतारषण्मतस्थापनाचार्यभगवत्पादसरण्या, वैदिकसिद्धान्तान्तरावलम्बनेन वा सर्वे कृतकृत्या भवन्त्विति सादरं निवेद्यत इति ओं तत् सत् ॥

**इति शास्त्ररत्नाकर-शतभूषण्यादिविविधबिरुदभाजो**
**महामहोपाध्यायानन्तकृष्णशास्त्रिणः**
**कृतिष्वद्वैततत्वशुद्धिर्नाम**
**निबन्धः ॥**

---

